भारतकेन्द्रीयप्रशासनस्य (शिक्षासंस्कृतिमन्त्रालयस्य) आर्थिकसाहाय्येन प्रकाशितम्

# ध्वनितत्त्वसमीक्षा

[ A Review of The Principle of Sound ]

लेखकः

**डॉ० रामनारायणदासः**

( उपनाम—रामआसरे द्विवेदी )

नव्यव्याकरणाचार्यः ( लब्धस्वर्णपदकः )

विद्यावारिधिः ( पी-एच० डी० ), वाचस्पतिः ( डी० लिट्० ),

प्रवाचकः ( रीडर ) एवम् अध्यक्षः, व्याकरणविभागः,

गुरुवायूरकेन्द्रीयसंस्कृतविद्यापीठम्,

पुरनाट्टुकरा, त्रिचूर ( केरल )

फरवरी, १९८९ ई० ]      वाराणसी      [ वसन्तपञ्चमी, २०४५ वि०

प्रकाशक :
डॉ० रामनारायणदास
जे० १२/३७, श्री हनुमानजी का मन्दिर
नाटी इमली, वाराणसी.

Publishar :
Dr. R. N. Das
J. 12/37, Hanumanji ka mandir
Nati Imli, Varanasi.

प्रथम संस्करण : १९८९
( १००० प्रति )

First Edition : 1989
( 1000 copies )

मूल्य : ७६ ) रु०
( षट्सप्ततिरूप्यकाणि )

Price : Rs. 76/=
( Rs. Seventy Six )



मुद्रक : विजय प्रेस, सरसोली, वाराणसी.
Printer : Vijaya Press, Varanasi.

चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥

× × × ×

चत्वारि शृङ्गा त्रयो अस्य पादाः
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्याँ आविवेश ॥

—ऋग्वेदः

## मङ्गलाचरणम्

ध्वनीनां तत्त्वरूपावर्थतत्त्वोद्घाटकावपि ।
वैखरीप्रक्रियानिष्णातावीडे वाग्-विनायकौ ।। १ ।।

ढक्कानादेन भक्तानाम्, शुभेच्छापूरकं खलु ।
शेमुषीप्रेरकं वन्दे साम्बं शम्भुं च सर्वदा ।। २ ।।

सीतान्वेषी च रामेष्टो जयं मह्यं ददतु च ।
कल्पवृक्षः सदा पूज्यो रामेष्टानां सतां ध्रुवम् ।। ३ ।।

रामप्रियः सुरुक्माङ्गो हरीणां पुङ्गवोऽपि च ।
सर्वविद्याधिनाथेन्द्रो निवसेन्मम मानसे ।। ४ ।।

विघ्नास्तन्वन्ति शीघ्रं शम्, हितेहां शत्रवः खलु ।
यस्य हर्षानुकम्पाभ्याम्, तं श्रीरामं सदा नुमः ।। ५ ।।

—रामनारायणदासः

अदृष्टविग्रहाच्छान्ताच्छिवात् परमकारणात् ।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम् ।।

× × ×

अतोऽकारहकाराभ्यामहमित्यपृथक्तया ।
प्रपञ्चं शिवशक्तिभ्यां क्रोडीकृत्य प्रकाशते ।।

× × ×

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ।।

× × ×

आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ।
गुरोर्लक्षणमेतावदादिमान्त्यं निवेदयेत् ।।

—आगमवचनम्

# ग्रन्थकर्तुः परिचयः

अस्ति भारतस्योत्तरप्रदेशे मीरजापुरमण्डलान्तर्गतं विन्ध्यवासिन्या देव्या कृतनिवासं पुण्यतमं शक्तिपीठं विन्ध्याचलनामकं नगरम्, विन्ध्यगिरेरधित्यकायां स्थितम् अष्टभुजामन्दिरञ्च। इतः क्रोशद्वयमूर्ध्वं पश्चिमायां दिशि राजते "तपः स्थानवरम्" ( तप्पाछानवै ) नाम पवित्रं क्षेत्रम्। क्षेत्रस्यास्य उत्तरस्यां दिशि प्रवहति पुण्यसलिला भगवती भागीरथी। दक्षिणदिग्भागे चात्र विशाला विन्ध्याऽटवी राजते। अत्रैवाग्रे कर्णावत्यास्तटे विरोही गैंपुरेति स्थानद्वयमध्ये "देवरी" इत्याख्यो ग्रामो ग्रन्थकर्त्रा स्वजनुषा पवित्रितः।

ग्रन्थकर्तुरस्य पितामहो नाम्ना श्रीरामरूपद्विवेदी आसीत्। तत्पुत्रौ च श्रीरामनिवासो ( श्रीरामनेबाज ) द्विवेदी, श्रीहैयङ्गवीन ( हिंगु ) द्विवेदीत्याख्यावास्ताम्। अस्माकं चरित्रनायक एषामेव श्रीरामनिवासद्विवेदिमहाभागानामुदारचरितानां गृहं पुत्ररूपेणालंकृतवान्। अस्य माता नाम्ना लखराजीति। 'पाठकवरी' ग्रामवास्तव्यः श्रीवासुदेवपाठकश्चास्य मातामहः, श्रीमती सरूपा देवी त्वस्य मातामही।

ग्रन्थकर्त्ता बाल्ये मातापितृभ्यां "रामआसरे द्विवेदी" इत्याख्ययाऽऽकारितः। परन्तु किशोरावस्थायामेवायम् अयोध्यापुर्यां श्री १०८ श्रीरघुनाथदासजीमहात्मनः "बड़ी छावनी" इत्येतन्नामके वैष्णवमन्दिरे श्री १०८ श्रीकौशलकिशोरदासमहाराजतः श्रीरामतारकमहामन्त्रेण श्रीसम्प्रदायस्य वैष्णवीं दीक्षां गृहीतवान्। तैरेव महाभागैः तदाऽयं "श्रीरामनारायणदास" इति नाम्ना संस्कृतः। ततः प्रभृत्येवाऽयं रामनारायणदासेति मुख्याभिधया विद्वद्वर्गे प्रथितोऽभूत्। रामआसरे द्विवेदीत्युपनाम्ना सह मुख्यं नाम व्यवहरति, कदाचिच्च लाघववशात् केवलं डॉ० रामनारायणदासेति मुख्यं नाम।

"तपःस्वाध्यायनिरतम्" इति श्लोकोक्तिमनुसृत्य, श्रीमता महाभागेन अनेन ब्रह्मचर्यं पालयता, श्रीहनूमन्तमाराधयता च तपःपूर्वं व्याकरणशास्त्रमधीतमनेकत्र विद्यालयेषु। अथाप्यस्य व्याकरणविषयिणी जिज्ञासा न शान्ताऽभूदिति काश्यामागत्यानेन वाराणसेयसंस्कृतविश्वविद्यालयस्याचार्यपर्यन्तं सर्वा अपि परीक्षाः प्रथमश्रेण्यामुत्तीर्णाः।

अस्यैवं वैदुष्येण प्रभावित उत्तरप्रदेशस्य राज्यपालमहोदयः १९६७तमे ख्रिष्टाब्दे, विश्वविद्यालयीयदीक्षान्तसमारोहे नव्यव्याकरणाचार्योपाधिग्रहणसमये स्वर्णपदकेनेमं पुरस्कृतवान्। अनुपदमेव चास्मै केन्द्रीयशासनेन कनिष्ठानुसन्धान-

छात्रवृत्ति( जूनियर रिसर्च फैलोशिप )रपि १ सितम्बर १९६७ ई० तः आवर्षत्रयं प्रदत्ता। अस्मिन्नेवावधौ ( १९७०तम ई० ) शब्दतत्त्वं ( तत्सम्बन्धि ) आधुनिक-विज्ञानञ्चेत्याख्यः शोधग्रन्थः पूर्णतामगात्। विद्वद्भिः परीक्षितेनानेन शोध-ग्रन्थेन महाभागोऽयं वा० सं० विश्वविद्यालयतः ''विद्यावारिधि'' (पी-एच० डी०) इति विद्वत्प्रदत्तपदवीं ससम्मानं गृहीतवान्।

सम्मानेनानेन समुत्साहितोऽयं महाभागो ध्वनितत्त्वाख्यमेकमपरं विशिष्टं शोधग्रन्थम् ''**वाचस्पति**'' ( डी० लिट् ) इत्युपाधिप्राप्त्यर्थमिहैव ( सम्पूर्णानन्द-संस्कृतविश्वविद्यालये ) १९७६तमे ख्रिष्टाब्दे प्रस्तुतवान्। अयमपि ग्रन्थः विशिष्टैर्विद्वद्भिः ससम्मानं स्वीकृतः।

ततः परमयं महाभागः वाराणस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य व्याकरणविभागे १९७७तम ईस्वीयतः प्रारभ्य १९८७तम ईस्वीयस्य अगस्तपर्यन्तम् साइण्टिस्ट पूल आफीसर, रिसर्च एसोसियेट, रिसर्चसाइण्टिस्ट ( शोध वैज्ञानिक रीडर स्केल, बी क्लास'' ) पदान्यलङ्कृतवान्। ततः परं राष्ट्रियसंस्कृतसंस्थानम् ( नई दिल्ली ) एतेषां वैदुष्यं सम्यक् परीक्ष्य व्याकरणविषयमध्यापयितुं प्रवाचक-( रीडर ) पदे चयनं कृत्वा केरलप्रान्तस्य त्रिचूरनगरसमीपस्थे गुरुवायूरकेन्द्रीय-संस्कृतविद्यापीठे नियुक्तिं प्रदाय एनं महाभागं समतोषयत्। १९८७ ईशाब्दस्य सितम्बरमासे प्रथमतारकायां कार्यभारं स्वीकृत्य सरस्वतीसमाराधनतत्परोऽयं तत्रैव जीवन यापयति। स्थानान्तरण ( ट्रान्सफर ) माध्यमेन भारतस्य सम्पूर्ण संस्कृतिं संस्कृतं, पाण्डुलिपिपुस्तकालयश्च दिदृक्षया केन्द्रीयसर्वकारस्य सेवां सहर्षमयं महाभागः स्वीकृतवान्।

इत्थमयं महाभागस्तपसा, ब्रह्मचर्येण, स्वाध्यायव्यसनेन च जनाँस्तोषयन् भगवत्याः सरस्वत्याश्चार्चनं कुर्वन् मोदमानस्तिष्ठति।

अनेन कुशलकर्मणाऽस्य विदुषः कुलं पवित्रम्, जननी कृतार्था, वसुन्धरा पुण्यवती च जाता। एतादृशमेव महाभागमधिकृत्य केनचिद्विदुषा सत्यमेवोक्तम्—

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजं भयम्॥

●

मकरसंक्रान्तिः,
२०४५ वि०

**वाचस्प्रसादपाठकः**, साहित्याचार्यः,
संस्कृतप्रवक्ता, शिव इण्टर कालेज,
मीरजापुर ( उ० प्र० ).

# प्राक्कथनम्

'ध्वनितत्त्वसमीक्षा' इत्याख्योऽयं ग्रन्थः गर्भीकृताशेषवाच्यवाचकरूपाऽहं-सत्तास्वरूपस्य तद्रश्मिभूतानाम् अकारादिध्वनीनां प्रतिपादनपरः। 'ध्वनितत्त्व-समीक्षा' इत्यत्र समस्ते पदे सन्त्यवान्तराणि त्रीणि पदानि—ध्वनेस्तत्त्वम्, ध्वनि-तत्त्वम्, तस्य समीक्षा इति ध्वनितत्त्वसमीक्षा। तदित्थं व्याख्यानेन अस्य ग्रन्थस्य सम्बन्धचतुष्टयमपि सुस्पष्टं जातम्। १. विषयः—अकारादिध्वनेर्वास्तविकं स्वरूपम्, २. प्रयोजनञ्च तज्ज्ञानम्, ३. अधिकारी—अधीतपाणिनीयव्याकरणा-गमप्रातिशाख्यदिकः, सामान्यरूपेण भौतिकभाषाविज्ञानविषये समुपलब्धज्ञानश्च, ४. सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः।

सोऽयं ग्रन्थोऽष्टसु परिच्छेदेषु विभक्तः। तद्यथा—

१. ध्वनितत्त्वम्

२. अकारादिध्वनीनां रेखाकृतिस्वरूपम्

३. अकारादिध्वनेरभिव्यक्तिप्रक्रिया

४. ध्वनिसञ्चारविधिः

५. प्राचीनकालिकदूरध्वनिग्राहकयन्त्रादिविचारः

६. पराश्रव्यध्वनिविश्लेषणम्

७. अकारादिध्वनीनामर्थवत्ताविमर्शः

८. ध्वनिपरिवर्तनं च।

## १. ध्वनितत्त्वम्

अस्मिन् परिच्छेदे अकारादिध्वनेर्यद्वास्तविकं स्वरूपं तदेव विदुषां पुरः समुपस्थापयितुं यत्नः कृतः। समेषां शब्दानां मूलस्वरूपं 'अहम्' इति वदन्ति सुधियः। इदञ्च तथ्यं भगवान् पाणिनिरपि स्वीकरोति। भगवान् पाणिनिः चतुर्दशसूत्रात्मकस्य वर्णसमाम्नायस्यादौ अकारम्, अन्ते च हकारं पठितवान्। अकारहकारयोर्मध्ये सर्वान् वर्णांश्च पठितवान्। तेन सर्वे वर्णास्तन्मध्यगतत्वाद् 'अहम्' इत्यनेनैव प्रत्याहृताः। अहमित्यत्र 'म्' इति तु प्रथमविभक्तेरेकवचनस्य रूपम्। किञ्च, पाणिनीयव्याकरणे वर्णसमाम्नायघटकानि सर्वाणि व्यञ्जनानि अस्वरेणैव पठितानि। तेन अकार एव समेषां वर्णानाम् अथ च अर्थानां मूलमिति औपनिषदं तथ्यं भगवता पाणिनिना स्वीक्रियते इति संसूच्यते। यद्यपि शब्द-

साधनप्रक्रियादृष्टचा शलादिप्रत्याहारेषु ग्रहणार्थम् अन्त्यहकारस्य प्रयोजनमुक्तम्, तेन अलिक्षत इत्यादौ 'शल इगुपधादनिटः क्सः' इति सूत्रेण च्लेः क्सादेशः सञ्जायते, तथापि दार्शनिकदृष्टचा विचार्यमाणे सति तद्भिन्नमपि प्रयोजनं दृष्टिपथं समायाति। तच्च प्रयोजनं 'अहम्' इत्येव सर्ववाक्तत्त्वमित्यस्यावबोधनम्। अहमित्येव ध्वनितत्त्वमिति तथ्यं न केवलं भगवान् पाणिनिरेव, अपि तु अन्येऽपि दार्शनिकाः स्वीकुर्वन्ति। तद्यथा--

निराभासात् पूर्णाद् अहमिति पुरा भासयति यद्,
द्विशाखामास्ते वै तदनु च विभक्तुं निजकलाम्।
स्वरूपाद् उन्मेषप्रसरणनिमेषस्थितिजुषम्,
तदद्वैतं वन्दे परमशिवशक्त्यात्मनिखिलम्[1] ॥ १ ॥ इति।

यस्मात् सर्वे आभासाः (अखिलब्रह्माण्डविषयकज्ञानानि) निष्क्रान्ताः विनिर्गताः यद्वा निःसृताः; सर्वेषाम् आभासानां मूलोपादानत्वात्। यच्च पूर्णम् तस्मादेव अहमित्यस्य स्फुरणं जातम्। अ-ह इत्यनयोर्मध्ये अकारः शिवः, हकारश्च शक्तिस्वरूपः। अहमिति तत्त्वम् उन्मेषप्रसणनिमेषेतिस्थितित्रयविशिष्टम्। उन्मेषः जगदुद्भवः, प्रसरणं विस्तारः, पालनादिक्रिया च, निमेषः संहारः। जगदुद्भवपालनसंहारशक्तयः अहन्तत्त्वस्याङ्गभूताः।

लोकेऽपि सर्वप्राणिषु मूलाधारात् सततं ध्वनिः स्फुरन् हृदयादिस्थानमतिक्राम्यन् लोकोपयोगिवाग्रूपतां धत्ते। स एव मूलध्वनिः हृदयादिस्थानसंयोगेन मध्यमादिनाम्ना व्यपदिश्यते। पराभावात् पश्यन्तीपदं ततोऽपि मध्यमापदम्, तस्माच्च वैखरीविषयतामापादयति। गर्भीकृताशेषवाच्यवाचकप्रत्याहारात्मकम् अहंतत्त्वमेव परावाङ्नाम्नाऽभिधीयते। तथा चोक्तम्—

याऽहमित्युदिता वाक् परा च सा[2]।

तस्मिन् ब्रह्मणि 'अहम् एकः' इत्यस्याभासः सृष्टेरादौ सर्वप्रथमं बभूव, ततः 'वहु स्याम्' इति द्वितीय आभासः सञ्जातः।

'एकोऽहं बहु स्याम्' इति सिसृक्षया निष्कले ब्रह्मणि यद् 'अहम्' इति ध्वनिरूपस्य स्फुरणं' जातम्, सा एव परमात्मनः पराशक्तिः। सा च पराशक्तिः ध्वनिपदेनाऽपि व्यवह्रियते। तथा चोक्तम्—

अदृष्टविग्रहाच्छान्ताच्छिवात् परमकारणात्।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम् ॥

---

१. अभिनवगुप्तकृता ईश्वरप्रत्यभिज्ञाविमर्शिनी।

२. चिद्गगनचन्द्रिका।

परब्रह्मणि 'अहम्' इत्याकारकं यत्स्पन्दनं तदेव ध्वनितत्त्वम् । अस्मादेव पश्यन्त्यादिवाग्रूपा ध्वनयो विस्तरतां यान्ति । तनोति विस्तारयति स्वात्मानं विविधवाच्यवाचकभेदेन यः स तत् । विस्तारार्थकात् तनुधातोः कर्तरि क्विप्-प्रत्यये सति तस्य च सर्वापहारिलोपे धातुघटकनकारस्य च लोपे 'त' इति स्थितौ तुगागमे सत्ति अनुबन्धलोपे 'तत्' इति रूपं निष्पद्यते । ततो भावः कर्म वेति विग्रहे त्वप्रत्यये प्रथमविभक्त्येकवचने 'तत्त्वम्' इति पदस्य निष्पत्तिः । ध्वनीनां तत्त्व-मिति ध्वनितत्त्वम्। तच्च तत्त्वम् अहमित्येव । यद्वा यस्माद् येन वा सर्वमिदं वाच्यं वाचकञ्च ततम्, तत् तत्त्वपदेन व्यवह्रियते । तथा चोक्तं श्रीमतङ्गे—

तत्त्वं वस्तुपदं व्यक्तं स्फुटमाम्नायदर्शनात् ।
ततमेतेन वा यस्मात् तत् तत्त्वं तत्त्वसन्ततौ ।। इति ।

येन यस्माद्वा नाम तदभिधेयञ्च तते तत् तत्त्वमुच्यते । तच्च तत्त्वम् अहमित्येव ।

शिवाद्यवनिपर्यन्तो योऽयमध्वातिविस्तृतः ।
स समस्तश्चितो ज्ञेयो नाशिवत्वाद् विमुच्यते ।। इति ।

शिवात्प्रारभ्य अवनिपर्यन्तं योऽयं वर्णपदमन्त्रकलाभुवनतत्वात्मकोऽध्वा विस्तृतः, स चित एव विस्तृतः। तज्ज्ञानादेव क्लेशनिवृत्तिः । अत्र चित्पदेन प्रकाश-विमर्शात्मनः 'अहम्' इति ब्रह्मनिष्ठस्पन्दनस्यैव ग्रहणम्; पर्यायवाचित्वात् । तदुक्तं विरूपाक्षपञ्चाशिकायाः प्रथमस्कन्धे—

ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति ।
एतेऽहन्तायाः किल पर्यायाः सद्भिरुच्यन्ते ।। इति ।

सर्वेषां ध्वनीनाम् अर्थानाञ्च ब्रह्मनिष्ठस्पन्दनमयमहन्तारूपं यत् प्रतिज्ञातम्, तदेव ईश्वरत्वम्, कर्तृत्वम्, चिन्मयत्वञ्च । ईश्वरतादिपदेन व्यवह्रियमाणं तदेव तत्त्वं विन्दुकुण्डलिनीत्यनयोरपि पर्यायभूतम् । तदुक्तम् –

विन्दुश्चैवेश्वरः स्वयम् ।। २६४ ( स्वच्छ० त० प० ४ )

गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
अस्ति कुण्डलिनीब्रह्मशक्तिराधारपङ्कजे ।। इति ।

( संगीतरत्ना० १।२।११९-१२० )

निष्कलब्रह्मनिष्पन्दभूताहमिति महासत्तारूपस्य चिदादीनाञ्च परस्परं पर्यायवाचित्वम्, पर्यावाचित्वाच्चैकमेव तत्त्वं चिदादिपदेन व्यवह्रियते ।

ध्वनितत्त्वरूपा येयमहन्ता प्रोक्ता सा स्पन्दसंज्ञिकाऽप्यभिधीयते । किञ्चि-च्चलनार्थकात् स्पदिधातोः स्पन्दशब्दो व्युत्पाद्यते । स्पन्दनात् स्पन्दः । स्पन्दनञ्च

निस्तरङ्गस्यास्य परमात्मनः युगपन्निर्विकल्पा या सर्वत्रौन्मुख्यवृत्तिता। उक्तञ्च—

षाड्गुण्यरूपस्य यत्स्फुरन् प्रतिभोदयः।
स चात्मबलशक्तीशश्चिद्रूपः स्पन्दसंज्ञकः॥ इति।

निष्कलब्रह्मनिष्पन्दभूतेयमहन्ता सांख्यादिशास्त्रेषु प्रतिपादितो बुद्धितत्त्वात् समुत्पन्नो योऽहङ्कारस्तद्रूपो न। न वा अस्मच्छब्देन प्रथमविभक्तौ योऽहं-शब्द-स्तद्रूपः। न वा पुनरहमिति प्रतीयमानतयेव या अहन्ता तद्रूपा; किन्तु प्रकाश-विमर्शात्मिका एव अहन्ता अत्र अहं-पदेन गृह्यते। विषयग्रहे 'अहं चक्षुषा रूपं पश्यामि' इत्येवं रूपादिग्रहणस्थलेऽहमिति ज्ञातृरूपेण प्रतीयमाना या अहन्ता, सा प्रकाशविमर्शात्मिकाया अहन्ताया अंशभूता। अहमिति पदघटकौ अहकारहकारौ क्रमशः प्रकाशविमर्शौ व्यवह्रियेते। प्रकाशविमर्शयोः सर्वत्र व्यापकत्वात् अहमिति महासत्ता सामान्यभूता। सामान्याच्च 'सामान्ये नपुंसकम्' इति नियमान्न-पुंसकोऽयं शब्दः। 'अविभक्तिकं न प्रयुञ्जीत' इत्युक्तदिशा अहंशब्दात् सौ विभक्तौ नपुंसकलिङ्गपरत्वाच्च तस्य अमादेशे पूर्वरूपे सति 'अहम्' इति निष्पद्यते। अहमिति च ध्वनिः प्रकाशविमर्शस्वरूपः। उक्तञ्च सङ्केतपद्धत्याम्—

अहमित्येकमद्वैतं यत् प्रकाशात्मकविभ्रमः।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः॥
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः॥ इति।

शिवशक्त्यात्मनोः प्रकाशविमर्शयोः समरसीभूते सति अहमिति परमद्वैतं स्फुटीभवति। अत्र प्रकाशो धर्मी विमर्शश्च तद्धर्मः, यद्वा अहमिति ध्वनौ प्रकाशात्मको योऽकारः स शिवः, विमर्शात्मको यश्च हकारः स शक्तिः। उक्तञ्च काशीखण्डे—

यदेकलो न शक्नोषि रन्तुं स्वैरञ्चर प्रभो।
त्वमेको द्वित्वमापन्नः शिवशक्तिप्रभेदतः॥ इति।

प्रकाशस्य धर्मभूतो यो विमर्शात्मको हकारः तस्मात् पदमन्त्रवर्णानाम्, अथ च धर्मभूतविमर्शस्य धर्मिभूतो यः प्रकाशः तस्मात् तत्त्वभुवनकलानाम् अभि-व्यक्तिरिति परावाङ्नाम्ना व्यपदिश्यमानात् चितिस्वरूपाद् 'अहम्' इत्यस्मादेव ध्वनेः शब्दार्थोभयोरपि सृष्टिर्जाता। उक्तञ्च भर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति।

एवं चितिस्वरूपा इयम् अहन्ता शिवशक्त्योः समरसीभूता निखिलं ब्रह्माण्डं प्रकाशयन्ती सर्वत्र व्याप्ता; यतो हि जडपदार्थेष्वपि परिणामादिक्रिया दृश्यन्ते।

यथा घटपटादीनां नित्यं परिणामो दृश्यते, परिणामनरूपेयं क्रिया चेतनसंयोगं विना असम्भवा; सर्वस्याः क्रियायाः चित्संयोगादेव निष्पादनात् । 'नाहं देहः, किन्तु चित्स्वरूपोऽहम्'—इत्येवं देहाद्यधिरूढायास्तमोऽहन्तायाः त्यागे सति हृत्सरोजे विमलाऽहंरूपा चितिः कला समुदेति । विज्ञाता सती च सा अहंरूपा चितिर्मोक्षं ददाति ।

चित्स्वरूपात्मिका परावाग्रूपा अहन्ता एव पूर्णाहन्ता । पूर्णाहन्ताया हृत्सरोजे यावन्नोदयः, 'अहं योगिराट् अहं सम्राट्'—इत्येवं तमोरूपाऽहन्ता हृदि च यावत् स्फुरति, न तावन्मन्त्रवीर्यलाभः । मन्त्रवीर्यलाभाभावाच्च न मन्त्रसिद्धिः । प्रत्यवमर्शात्मको योऽयमहन्तारूपो महाह्रदः, तत्र निमज्जनात् यद्वा तस्यानुसन्धानाद् मन्त्रवीर्यलाभः । उक्तश्च शिवसूत्रे—

महाह्रदानुसन्धानाद् मन्त्रवीर्यानुभवः । इति ।

( मातृकाचक्रसम्बोधः )

तत्र वीरो नाम विविधमीरयति विश्ववैचित्र्यमिति भगवान् शब्दराशिरिति भट्टारकः । तदुक्तं चिद्गगनचन्द्रिकायाम्—

ईरणेन विविधेन वीरतां यो यदक्षरगणः प्रपद्यते । वीरसम्बन्धी धर्मो वीर्यमित्युच्यते । मन्त्राणां वीर्यमिति मन्त्रवीर्यम् । तच्च वीर्यं पूर्णाहङ्कार एव । यदि त्वमात्मानं देहमात्रं मन्यसे, तर्हि तव देहाधिकृतं यावद् विद्यते, तावदेव अधिकर्तुं समर्थः तदधिकं चेद् वाञ्छसि तर्हि दण्डभीतिः । तदुक्तं भट्टगङ्गाधरमिश्रैः—

अपूर्णम्मन्यता व्याधिः कार्पण्यैकनिदानभूः[1] ।
क्लेशावहो जुगुप्सश्च सर्वधर्मवहिष्कृतः ॥

आनन्दकणभिक्षार्थं शब्दस्पर्शादिपक्वणे ।
अटत्यविरतं येन तद्दारिद्र्यं विदुर्बुधाः ॥ इति ।

यदि च त्वम् अकारहकारप्रत्याहारात्मा गर्भीकृताशेषविश्वसमग्रशास्त्रप्रसरप्रथमाङ्कुरचित्स्वरूपः पूर्णाहन्तारूपो यो भगवान् शब्दराशिः तदात्मना स्वात्मानं परामृशसि तर्हि यावत्तद् अधिकृतम्, तावद् अनुशास्तुं समर्थः। चित्स्वरूपस्य अहमित्यस्य मन्त्रवीर्यत्वमुक्तं श्रीसंवित्स्तोत्रे--

आदिमान्तगृहीतवर्णराश्यात्मिकाहमिति या स्वतः प्रथा ।

मन्त्रवीर्यमिति साधितागमैस्तन्मयी गुरुरसि त्वमम्बिके ॥

अस्येदं तात्पर्यम्—प्रकाशविमर्शात्मकाकारहकारौ मध्यवर्तिना लौकिक-

---

१. नित्याषोडशिकायाः, (प० १ श्लो० ४४) शिवानन्दकृतायां ऋजुविमर्शिनीव्याख्यायामयं श्लोकः समुद्धृतः ।

वर्णमालाघटकानां समेषां वर्णानां बोधकः, अथ च स्वात्मनोरपि। यथा पाणिनीयशास्त्रे 'आदिरन्त्येन सहेता' इति सूत्रेण निष्पन्ना अणादिप्रत्याहाराः आकारादिध्वनीनामथ च मध्यपतिवर्णानां बोधकाः, तथा अत्रापि ब्रह्मनिष्ठस्पन्दभूतौ अकारहकारावपि। भेदस्तावत् उभयत्र अयमस्ति यत्पाणिनीयव्याकरशास्त्रे अणादिसंज्ञाभिः अन्त्यस्य णकारादेर्ग्रहणं न क्रियते, इत्संज्ञकत्वात्। किन्त्वहमित्यत्र हकारोऽपि 'अह' इति प्रत्याहारेण गृह्यते। ब्रह्मनिष्ठप्रकाशविमर्शयोः समरसीभूते 'अहम्' इत्यत्र प्रत्याहृताः स्वरव्यञ्जनात्मकाः सर्वे ध्वनयो भगवतः शक्तिस्वरूपाः।

परमात्मनि अकारककारादिस्वरव्यञ्जनवाच्यानामशेषशक्तीनामभेदरूपतया समन्वयो विद्यते। अतएव निष्कले ब्रह्मणि पूर्णाहन्ता स्वाभाविको धर्मः। निखिलं स्वरव्यञ्जनात्मकं निरर्थकञ्च ध्वनिम्, अथ च निखिलं विश्वं मयूराण्डरसे पुच्छपादाङ्गानीव यद्वा वटवीजे शाखापल्लवादीनीव अभेदरूपतया गर्भीकृत्य परात्मनि परावागात्मकं चिद्रूपं अहम् इति स्फुरति। उक्तञ्च योगिनीहृदयस्य मन्त्रसङ्केतनिरूणे—

अतोऽकारहकाराभ्यामहमित्यपृथक्तया।
प्रपञ्चः शिवशक्तिभ्यां क्रोडीकृत्य प्रकाशते[1]॥ इति।

परावागात्मकमिदं स्फुरणं 'स्वरूपज्योतिरेवान्तः परावागनपायिनो' इत्युक्त्या स्वतः प्रकाशस्वरूपा। पश्यन्त्यादिकं वैखरीपर्यन्तञ्च उत्तरोत्तरं क्रमशः प्रकाशयति। विमर्शस्वभावाविगलितोपरागा निरोधकाभावाद् अनिशं स्फुरद्रूपतया च स्वरसवाहिनीयमहन्ता चेतनाचेतनात्मकस्य जगतो देशकालादिभेदानाञ्च स्वात्मन्यसम्भवाद् अद्वितीयः सन् आगमेषु अहमित्यभिहिता। स एव अनाहतमहाध्वनिभट्टारकः। नित्यं स्फुरद्रूपतया तद्विशिष्टतया च परब्रह्मापि तद्रूपमेवेति परावागात्मिका पूर्णाहन्ता च तद्भिन्ना। गर्भीकृताशेषवाच्यवाचकरूपं चित्स्वरूप ध्वनितत्त्वमेव भोगादिरूपेण भासते। उक्तञ्च वाक्यपदीयस्य ब्रह्मकाण्डे--

एकस्य सर्ववीजस्य यस्य चेयमनेकधा।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥ इति।

भोक्ता = पुरुषः, भोगः = विषयोपभोगजन्यसुखदुःखाद्यनुभवः। भोक्तव्याः = विषयाः। अस्य सर्ववीजस्य भोक्तृभोक्तव्यादिरूपेण भिन्नरूपेण संस्थितिः शक्तिद्वारा संघटते। एतदुपोद्बलकं प्रमाणं यथा—

---

१. योगिनीहृदयदीपिकायां मन्त्रसंकेतनिरूपणे २१-२२ तमयोः श्लोकयोः दीपिकासेतुबन्धाख्यटीकायामयं श्लोकः मालिनीशास्त्रसिद्धान्ततन्त्रात् समुद्धृतः।

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ॥ २४ ॥ इति ।

एवमेव यच्छब्दतत्त्वमस्ति, तद् शक्तिव्यपाश्रयात् ब्राह्म्यादिशक्तीराश्रित्य भिन्नं घटपटादि नानावाच्यवाचकरूपभेदज्ञानविषयतां जातम् । काश्चिद् शक्तयो भेदोत्पादिकाः, काश्चिच्च अभेदोत्पादिकाः । भेदज्ञानोत्पादिकाः शक्तयः घोरनाम्ना, अभेदज्ञानोत्पादिकाश्च अघोरनाम्ना प्रसिद्धाः ।

वस्तुतस्तु परमतत्त्वे भेदोत्पादिका मुख्यास्तिस्रः शक्तयः । तद्यथा— १. परा, अथवा अनुत्तरा । २. परापरा । इयमेव शक्तिरिच्छा नाम्ना व्यपदिश्यते । ३. अपरा—इयं शक्तिरुन्मेषरूपा ज्ञानशक्तिर्निगद्यते । आसां तिसृणां समरसीभूतस्वरूपा परमेश्वरस्य पूर्णा शक्तिः । आसां मध्ये अनुत्तरा अथवा चिच्छक्तिरकारः, इच्छाशक्तिरिकारस्वरूपा, उन्मेशशक्तिः उकारात्मिका । आसामकारादिध्वनिस्वरूपाणां शक्तीनां न किमप्यावरणम् । इमाः शक्तयो न केनचिदपि प्रतिहन्यन्ते । आसां शक्तीनां समष्टिः मोक्षप्रदा अघोरा शक्तिर्विद्यते । पशूनां जीवानां बन्धनहेतुभूताश्च घोराघोरतराः शक्तयोऽपि आभ्य एव समुत्पद्यन्ते ।

सर्वत्र व्याप्ता पूर्णाहन्तात्मिका चित्स्वरूपा वाक्—मूलाधारनाभिहृदयकंठताल्वाद्यवच्छिन्नदेशेषु क्रमशः परा, पश्यन्ती, मध्यमा, वैखरीति नाम्ना चतुर्द्धा प्रकाशते । मूलाधारादीन्यस्य तद्गुहाभूतानि । उक्तञ्च पातञ्जलमहाभाष्यस्य पस्पशाह्निके निम्नाङ्कितां श्रुतिमुद्धृत्य--

चत्वारि वाक्परिमिता पदानि, तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति ॥

गुहा=गुहायामित्यर्थः । 'सुपां सुलुक्' इति सप्तम्या लुक् । गुहा=मूलाधारः, नाभिहृदयादीनि । आसु गुहासु कामादिपीठाः, स्वायम्भुवादिलिङ्गानि च संस्थितानि । एतत्सर्वं प्रतिपादितमस्यैव ग्रन्थस्य प्रथमपरिच्छेदे 'परादिचतुर्विधध्वनीनां गुहास्वरूपवर्णनम्' इत्यत्र ।

अयमेव प्रकाशविमर्शात्मकः ध्वनितत्त्वाख्यः पूर्णाहंभावो ब्रह्माण्डस्य चैतन्यप्रदानात् जीवपदवाच्योऽपि । चैतन्यप्रदानेन जीवयतीति जीवः । यदा इदन्ताया उल्लासः सञ्जातः, तदा स एव जीवप्रदो ध्वनिः प्राणेन गुहां अन्तःकरणम् प्रविष्टः सन् हस उच्यते । उक्तञ्च श्रीमद्भागवतस्य एकादशस्कन्धे—

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥ इति ।
( अ० १२, श्लो० १७ )

स्वच्छन्दतन्त्रस्य सप्तमपटले च—

आत्मा वै हंस इत्युक्तः प्राणो हंससमन्वितः ।
तस्योदयात् कलेत् कालो ग्रहाणामुदयो भवेत् ॥ ३० ॥ इति ।

परन्त्वस्य प्रमाणमाश्रितस्य हंसगतमकस्य ध्वनेः सञ्चारः ओमिति प्रणवं विना न सम्भवति । प्रणवं विनाऽपि जीवः सञ्चारहीनः । उक्तञ्च—

अकृतार्थो नरस्तावद् यावद् हंसं न विन्दति ।
प्रणवेन समायुक्तं कृतार्थं इति निर्दिशेत् ॥ ३३ ॥
( स्व० तं०, प० ६ )

अकारेण यदायुक्त उकारचरणेन तु ।
मकारमात्रया युक्तो वर्णोच्चारो भवेत्स्फुटः ॥ २५८ ॥
( स्व० तं०, प० ४ )

एवं प्रणवयुक्तो हंसध्वनिः स्वतः समुच्चार्यते । प्रणवे वर्णत्रयम्—अ उ म् इति । अकारोकारमकारयुक्तो हंसस्य सञ्चारः सञ्जायते । हंस+अ+उ+म+हंसः इति स्थिते सवर्णदीर्घगुणे च कृते द्वितीये हंसे परे मकारस्यानुस्वारे हंसो हंसो हंसो हम् । अर्थात् हंसोहं सोहं सो हंसः—'इत्येवं' स्वतः ध्वनिः समुच्चारितो भवति । यद्वा हंसः इत्यस्य विलोमपाठे सति सः हं इति स्थिते विसर्जनीनीयस्यासिद्धत्वात् सस्य रुत्वे तस्य च उत्वे गुणे च कृते सोहम् इति निष्पद्यते । एतदेव स्पष्टीचकार फेत्कारिणीतन्त्रस्य प्रथमपटले——

सौम्यमन्त्राः प्रधानाख्याः संयोज्याः क्रूरकर्मणि ।
आसीन्मन्त्रस्तु हंसाख्यो वर्णस्तु परमात्मनः ॥ ३९ ॥
सोऽहमिति गतौ द्वैतमद्वैतं हंसलोपतः ।
कण्ठं भित्त्वा विनिर्यातो हंसवर्णविलोमतः ॥ ४० ॥

अत्र हंसवर्णविलोमत इत्युक्तम् । किञ्च उपर्युद्धृते श्लोके 'हंसलोपतः, हंसवर्णविलोमतः' इत्युभयमप्युक्तम् । हंसस्य लोपे कृते च तत्स्थाने विलोमपाठे 'सोऽहम्' इति कण्ठतो यद्वा प्रतिश्वासमनुभूयते ।

अस्यैव प्रणवयुक्तस्य हंसध्वनेर्महिमानमाह—

नास्योच्चारयिता कश्चित् प्रतिहन्ता न विद्यते ।
स्वयमुच्चरते हंसः प्राणिनामुरसि स्थितः ॥ ५९ ॥
( स्व० तं०, प० ७ )

ध्यात्वा कालेश स्वच्छन्दं हंसं वा सकलेश्वरम् ।
नासिकारन्ध्रमार्गस्थः स सृजेत् संहरेज्जगत् ॥ २०७ ॥

एवं शरीरजे काले मृत्युश्चाशुभमेव च ।
ज्ञात्वा योगी जयेन्मृत्युमशुभान्यप्यशेषतः ॥ २०६ ॥ इति ।
( स्व० तं० प० ७ )

अयमेव प्रणवयुक्तो हंसध्वनिः प्राणशक्तिरुच्यते । विवक्षया कण्ठताल्वादिस्थानेभ्योऽकाराद्यात्मना श्रूयते । प्रतिपादितञ्चैतत् श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डे—

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥ ११७ ॥ इति ।

अकारादिध्वनयोऽस्य हंसात्मनः सूर्यस्य रश्मिभूताः । यथा सूर्यस्य रश्मयो नीलपीतादिवर्णवन्तः, एवमस्य हंसस्य रश्मिभूताः अकारादिध्वनयोपि । तद्यथा मातृकाविवेके—

अकारः सर्वदेवत्वं रक्तं सर्ववशङ्करम् ।

इत्यादिना प्रत्यक्षमेव वर्णविशेष उक्तः । सर्वे वर्गाः शुक्ला इत्यपि क्वचित् । सुभगोदयतन्त्रस्य चन्द्रकलाव्याख्यायां तु—

अकाराद्याः स्वरा धूम्राः सिन्दूराभास्तु कादयः ।
डादिफान्ता गौरवर्णा अरुणाः पञ्च वादयः ॥
लकाराद्याः काञ्चनाभा हकारान्त्यौ तडिन्निभौ ॥ इति ।

अकारादिध्वनीनां नीलपीतादिवर्णवत्तां शब्दवैज्ञानिकाः सम्यक्तया जानन्ति । वायसफिगर्जाख्यग्रन्थस्य लेखिका मिस वट्स ह्यूजो लन्दनदेशस्थे लार्ड लिटनशिल्पसदने शब्दविज्ञानस्य स्फारं ( चमत्कारं वा ) प्रादर्शयत् । सा विदुषी स्वनिर्मितम् इडोफोनाख्यं सङ्गीतयन्त्रं वाद्यविधिना अवादयत् । सङ्गीतयन्त्रनिःसृतैर्ध्वनिभिः नीलपीताद्यनेकानि रूपाणि निर्मितानि । सा एकदा स्वसङ्गीतयन्त्रं वादयन्ती डेजीनामकं पुष्पं निर्मितमित्यस्य व्याख्यानमपि सा कृतवती । अतः परं पैनसीनामकं पुष्पम्, मत्स्यमकराद्यनेकेषां समुद्रोत्पन्नानां जीवानाम् वृक्षपाषाणादीनाञ्च रूपाणि स्वसङ्गीतध्वनिना निर्मितवती[1] ।

---

१. " 'वायस फिगर्ज' पुस्तक की लेखिका मिस वट्स ह्यूज ने शब्दविज्ञान के चमत्कार क्रियात्मक रूप से लन्दन के लार्ड लिटन शिल्प सदन में दिखाये थे । वह अपने बनाये संगीत यन्त्र इडोफोन को विधिपूर्वक बजाती थी, जिससे अनेक प्रकार के रूप बन

उपर्युद्धृतेन विवरणेन निश्चीयते—'अकारादिध्वनयो नीलपीतादिवर्णवन्तः, तैः सह हृद्गतभावानामविनाभूतः सम्बन्धः' इति। यदि अकारादिध्वनयो नीलपीतादिवर्णवन्तो न स्युः, तेषां हृद्गतभावैः सह सम्बन्धो न स्यात्तर्हि इडोफोनयन्त्रान्निःसृतैः सङ्गीतध्वनिभिः पुष्पादीनां अनेकवर्णं चित्रं निर्मितं न स्यात्।

किञ्च, फ्रांसदेशवास्तव्या एका विदुषी शब्दविज्ञानस्य परीक्षणं कृतवती। एकदा सा कैथोलिकमतस्यानुयायिनं रोमदेशवास्तव्यम् आस्तिकजनं धार्मिकं गीतं श्रावयितुमामन्त्रयत्। तया आहूतः स धार्मिकमेकं गीतमगायत। भक्तियुतैर्धार्मिकसङ्गीतध्वनिभिः चित्रपटे स्वक्रोडे शिशुं सन्निवेशितवत्याः स्त्रियाश्चित्रं निर्मितम्। यस्याः स्त्रियाश्चित्रं निर्मितम्, सा मरियमाख्या, तस्याः क्रोडं समुपविष्टस्य यस्य शिशोश्चित्रम्, तस्य शिशोर्नाम ईशा इति। किन्तु ध्वनिद्वारा इयं क्रिया सर्वैः कर्तुं न शक्यते, उद्बोधितशब्दशक्तिभिरेव तादृक् कार्यं सम्पादयितुं शक्यम्। शब्देषु बोध्य-बोधकरूपा, अथ च जगत्सृष्ट्यादिकर्तृत्वरूपाः स्ववाच्यार्थानुरूपचित्रनिर्माणक्षमरूपाश्चेति विविधाः शक्तयः सन्निहिताः। यः शब्दनिष्ठां यां शक्तिं साधनद्वारा उद्बोधितवान्, स तच्छक्तिजन्यं तदेव कार्यं सम्पादयितुं क्षमः। किञ्च प्रत्येकं परमाणुषु विद्यमानमपि विद्युत्तत्त्वं वयमुपलब्धुम्, अथ च व्यक्तीकर्तुमसमर्थाः। किन्तु इलेक्ट्रान-परिपूरितपरमाणुभ्यो वैज्ञानिका विद्युद्धारां प्रादुर्भावयन्ति। एवमकारादिध्वनेः शक्तिविषयेऽपि बोध्यम्। अनभिज्ञो जनः सत्यामपि सामग्र्यां कार्यं कर्तुं न क्षमः।

एषु अकारादिध्वनिषु विश्वसर्जनरूपा महती शक्तिः सन्निहिता। श्रीभर्तृहरिः एतत्तथ्यमुद्घोषयामास। तद्यथा वाक्यपदीयस्य ब्रह्मकाण्डे—

शब्देष्वेवाश्रिता शक्तिः, विश्वस्यास्य निबन्धिनी।
यन्नेत्रप्रतिभात्माऽयं भेदरूपः प्रतीयते॥ ११८॥

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत॥ १२०॥ इति।

अयं विषय आगमशास्त्रेषु विस्तरशः प्रतिपादितः।

### २. अकारादिध्वनीनां रेखाकृतिस्वरूपम्

दार्शनिका वैयाकरणा ध्वनेर्लिप्यात्मक( रेखयाऽङ्कित )मपि स्वरूपं स्वीकुर्वन्ति। तदुक्तं श्रीभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

---

जाते थे। एक बार उसने डेजी नामक पुष्प की आकृति बनायी और उसकी व्याख्या भी की कि संगीतयन्त्र को किस विधि से बनाने से ऐसा हुआ।"

—डा० चमनलाल गौतम, मन्त्रमहाविज्ञान, प्र० ख०, पृ० ३६।

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः ।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ।। २० ।। इति ।

यस्मिन् स्फोटे अक्षरस्मृतेः चिह्नानि इव = लिपय इव, वाचो निमित्तानि = घटपटादिवाचां कारणानि, शब्दपूर्वेण = शब्दाभिव्यक्तिपूर्वभाविध्वनिना, योगेन = सम्बन्धेन प्रतिबिम्बवत् भासन्ते इति कारिकार्थः । अकाराद्यक्षराणां स्मारकत्वात् लिपिरपि तेषां स्वरूपं स्वीक्रियतेऽस्माभिः ।

किञ्च आगमशास्त्रदृष्टया अकारादिध्वने रेखाकृतयो न केवलं तत्तत्स्वरव्यञ्जनानां स्मृतिजनिकाः, अपि तु आकर्षणवशीकरणादिरूपा महती शक्तिस्तासु संन्निहिता । कर्गलपत्रेषु यद्वा निर्मलभूतले रेखया त्रिकोणादिचक्रं विरच्य तत्र च अभीष्टप्राणिनामङ्कनं कृत्वा विधिना समर्चिते सति तद्यन्त्रं चक्रं वा अभीष्टफलप्रदं भवति । एतदुपोद्बलकं प्रमाणं वहुत्र समुपलभ्यते । तद्यथा नित्याषोडशिकार्णवतन्त्रे—

अदृष्टायास्तु संयोज्य नाम चक्रस्य मध्यगम् ।
विरच्य योनिमुद्रां तामाकर्षयति क्षणात् ।। १३ ।। इति ।

'चक्रस्य मध्यगं नाम संयोज्य' इत्यस्य नामाङ्कनं कृत्वेत्यर्थः । अदृष्टाया। श्रुतायाः । एवमन्यत्रापि तान्त्रिकयन्त्रेषु नामाङ्कनविधिः 'लिप्यक्षरेषु महती शक्तिः' इत्येतत्तथ्यं पोषयति । भाषावैज्ञानिकाः अस्टेर्टेवाण्ठमहोदया अकारादिध्वनेरुच्चारणात्मकस्वरूपापेक्षया रेखयाऽङ्कितस्य स्वरूपस्य अधिकं महत्वं व्याचक्षते स्म ।[1]

भाषाशास्त्रिभि आधुनिका ऐतिहासिकाश्च लिपिविषये वहवो विचाराः प्रदर्शिताः । तद्यथा केचिद् विचारा अधस्तात्प्रस्तूयन्ते—

'अकाराद्यक्षराणां द्विधाऽऽकृतिः । अकारादिवर्णानामुच्चारणक्षणे मुखं याम् आकृतिं भजते, सा प्रथमाकृतिः । द्वितीया च आकृतिः—रेखया कर्गलादिपत्रेषु निर्मीयते । इयमेवाकृतिर्लिपिनाम्ना प्रोच्यते । जगति वर्णानां यावन्त्यो लिपयो दृश्यन्ते, तासां मध्ये वैदिकलिपिरकाराद्यक्षरार्थानुरूपा । रोमनलिपिस्तु एतादृशं गुणं न भजते । यथा भाषणं सङ्गीतात्मकस्वरेण प्रारब्धम्, एवं लिपेरपि प्राक्तनं स्वरूपं चित्रात्मकमासीत् । इति सृष्टेर्बहुकालानन्तरं लेखनकला प्रारब्धा ।

---

१. "Here is a wide spread impression that the wretten word is the norm or modal of human an speech while the spoken word is a more or less faulty immitation."—E. H. Sturtevant, Linguustic change, PP. 1.

वस्तुतस्तु हस्तपादमस्तकरेखाः न कस्यचिद् लौकिकस्य प्राणिनः कृतिरूपाः, प्रत्युत आसृष्टेस्तासां स्थितिः। हस्तादिरेखया भूतादिकालत्रयस्य ज्ञानं जायते। हस्तादिस्था रेखा अपि अकारादिध्वने रेखाकृतिस्वरूपाः। अतएव "तद्भालाक्षरमालाञ्च वाचयामास योगवान्[1]" इत्यत्र 'भालाक्षरमालाम्' इत्युक्तिः संगच्छटे। भालाक्षराणामासृष्टेः सत्त्वाद् अक्षरलेखनं सृष्टिकालिकमेव।

आगमशास्त्रेषु अमृततत्त्वनिर्मितानां लिपीनामुल्लेखो दृश्यते। मूलाधाराद् आब्रह्मबिलं विलसन्ती बिसतन्तुतनीयसी विद्युत्पुञ्जपिञ्जरा विद्यते। विवक्षायां सत्यां तया विद्युता द्रवीभूता अमृतधारा सौषुम्नाध्वना यदा शिरसि निपतति, तदा सा अमृतधारा ध्वन्यनुरूपां लिपिमयीमाकृतिं दधाति। तात्पर्यदीपिकायां प्रतिपादितञ्चैतत्। तद्यथा—

आधारादिषट्कमलदलेषु पतिता द्वादशान्तस्थितचन्द्रमण्डलात् सृता अमृतबिन्दवोऽकारादिक्षकारान्तवर्णात्मना परिणताः। उक्तं ह्याचार्येण—

मूलाधारात् स्फुरिततडिदाभाषमा सूक्ष्मरूपोद्-
गच्छन्त्या मस्तकमणुतरा तेजसां भूता।
सौषुम्णाध्वचरणनिपुणा सवित्रानुविद्धा,
ध्याता सद्योऽमृतमथ रवः स्रावयेत् सार्धसोमात्॥
शिरसि निपतितायां बिन्दुधारा सुधायाः,
भवति लिपिमयी सा आभिरङ्गैर्मुखाद्यम्॥

अत्र लिपिमयी इत्युक्तम्। कामधेनुतन्त्रेऽपि अकारादिध्वनीनां तत्त्व निरूपणावसरे क्वचित् अमृतनिर्मितम् इत्युक्तम्। तद्यथा व-वर्णस्य व्याख्यावसरे—

त्रिशक्तिसहितं वर्णं सदा चामृतनिर्मितम्।
स्वयं कुण्डलिनी साक्षात् सततं प्रणमाम्यहम्॥ १८॥
(का० धे० प० ६)

अत्र 'अमृतनिर्मितम्' इत्युक्तम्। अत्रामृतनिर्मितमिति पदं सर्वेषां मातृकावर्णानां विशेषणम्, समेषां लिप्यक्षराणां शिरसि निपतिताभिरमृतधाराभिर्निर्मितत्वात्।

वस्तुतस्तु अकारादिध्वनीनां यथार्थरेखाकृतिस्वरूपं यद्वा चित्रात्मकं स्वरूपं भौतिकशास्त्रं विना निर्णेतु दुरूहम्। भाषावैज्ञानिकैर्ध्वनीनां थलिलप्यात्मकं स्वरूपं प्रतिपाद्यते, ततु देशस्य भाषायाश्च भेदानुसारेण विभिन्नरूपत्वाद्

---

१, श्रीमद्भागवतलय माहात्म्यम्।

अवैज्ञानिकम् । यथा अकारो देवभाषाया नागरलिप्याम् 'अ, अ' इत्येवम्, आंग्ल-भाषायां रोमनलिप्यां 'A' इत्येवं रेखया अङ्कीक्रियते । एवञ्च अत्र एकस्यैव अकारस्य भिन्नं लिप्यात्मकं स्वरूपं दृश्यते । वैज्ञानिकं ध्वनेश्चित्रं तु एतद् भिन्नम् । सर्वत्र देशे यस्याङ्कनम् उच्चारणञ्च समानम्, तदैव वैज्ञानिकं भौतिक-शास्त्रसमन्वितम् ध्वनेश्चिह्नं ( लिपि ) चित्रं वा स्वीकर्तव्यम् । यथाऽस्माकं मूर्तिश्चित्रपटे क्रियते, तच्छायाचित्रं दृष्ट्वा उच्यते—'अयं देवदत्तः, 'अयं यज्ञदत्तः' इति । तथैव रीत्या ध्वनेरपि मूर्तिर्ध्वन्यभिलेखनादियन्त्रेषु[1] यान्त्रिकक्रियया निष्पाद्यते । तदेव च ध्वनेर्वास्तविकं रेखयाङ्कितं स्वरूपम् । 'ध्वनेः काऽऽकृतिः ? तस्य वक्रता कीदृशी:' ?—इत्येतज्ज्ञानं ध्वनिवक्रताङ्कनयन्त्रेणैव[2] कर्तुं शक्यते, नान्यथा । उच्चार्यमाणा अकारादिध्वनयो लोहादिकफलकानामुपरि पतितेषु रजःकणेषु, सिकतासु, द्रवीभूतेषु जतुषु च स्वानुरूपं चित्रं निर्मिनन्ति । एवमस्मिन्ननुच्छेदे भाषाविज्ञानं भौतिकशास्त्रं भारतीयं तन्त्रादिग्रन्थञ्च समाश्रित्य अकारादिध्वनीनां रेखयाऽङ्कितं स्वरूपं निर्णीतम् ।

### ३. ध्वन्यूर्जसोरभिव्यक्तिप्रक्रिया (अकारादिध्वनेरभिव्यक्तिप्रक्रिया)

अस्मिन्ननुच्छेदे भौतिकशास्त्रं समाश्रित्य ध्वन्यभिव्यक्तिप्रक्रिया मनोरम-पद्धत्या प्रतिपादिता । नागेशप्रभृतिभिर्वैयाकरणैः लघुसिद्धान्तमञ्जूषादिग्रन्थेषु पराया—वाच एव अकारादिवर्णानां समभिव्यक्तिः प्रोक्ताः । तद्यथा—

'सैव चास्यपर्यन्तभागच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानिमाहत्य परावृत्य तत्स्थानेष्वभिव्यक्तापरश्रोत्रेणापि ग्रहणयोग्या विराट् अधिदेवत्या वैखरी वाग् इत्युच्यते । प्रणव एव व्यानोदानाभ्यां सह वैखरी रूपं प्रतिपद्यते ।'

अत्र स्पष्टतया प्रणवस्य वैखरीरूपेण विवर्तनं नागेशेन प्रोक्तम् । परन्तु क्वचितन्त्रेग्रन्थे प्रातिशाख्ये च एतद् विपरीतं दृश्यते । वक्तुर्विवक्षया हृत्कण्ठो-रसोर्मध्यदेश एव अकारादिध्वनीनामभिव्यक्तिः । कण्ठादिस्थानेषु तस्य प्रतिबिम्बं यदा समापतति, तदा हृद्देशाभिव्यक्तानाम् अकारादिवर्णानां प्रतिबिम्बमेव वैखरी-रूपेण श्रूयते । तदुक्तं श्रीमदभिनवगुप्ताचार्यकृते श्रीतन्त्रालोके तृतीयाह्निके—

इत्थं प्रदर्शितेऽमुत्र प्रतिबिम्बनवर्त्मनि ।
शब्दस्य प्रतिबिम्बं यत् प्रतिश्रुत्केति भण्यते ।। २४ ।।

---

१. श्रीमद् अभिनवगुप्तपादाचार्यकृत श्रीतन्त्रालोकः, तृतीयमाह्निकम् ।

२. "मिलर ने फोनोडाइक नामक एक यन्त्र बनाया जिसमें ध्वनिवक्र खींचा जाता है" ।
( श्री ललितकिशोरसिंहः, ध्वनिविज्ञानस्य, पृ० १८५ )

तैत्तिरीयप्रातिशाख्ये च—

वायुशरीरसमीरणात् कण्ठोरसोः सन्धाने ॥ २ ॥

वायोः शरीरे समीरणात्कण्ठस्य उरसश्च सन्धाने शब्दस्योत्पत्तिर्भवति ।

तस्य प्रतिश्रुत्कानि भवन्त्युरः कण्ठः शिरो मुखं नासिके । तस्य कण्ठोरसोः सन्धानेऽभिव्यक्तस्य शब्दस्य प्रतिश्रुत्कानि—प्रतिबिम्बानि प्रतिध्वनयो वा भवन्ति । प्रतिबिम्बस्थानानि च उरः कण्ठः शिरो मुखं नासिके । हृदः कण्ठस्य च मध्यदेशे समविभक्तस्य शब्दस्य कण्ठादिस्थानेषु प्रतिध्वनयो भवन्तीति सूत्रार्थः । वैखरी वाग् हृद्देशेऽभिव्यक्तस्य शब्दस्य प्रतिबिम्बरूपेति तत्तात्पर्यं बोद्धव्यम् । अत्र स्पष्टतया नागेशाभिनवगुप्तमतयोर्भेदो दृश्यते[1] ।

ध्वन्यभिलेखनयन्त्रे तु परावाङ्नामकं न किमपि तत्त्वं प्रतिभाति, तत्र कथं ध्वन्यभिव्यक्तिः ? तत्रत्यः शब्दोऽभिव्यज्यते, स कस्य शब्दस्य प्रतिबिम्बरूपः ? इत्यादीन् विषयान् श्रीभर्तृहरिः निम्नाङ्किताभिः कारिकाभिः व्याख्यास्यन् पुष्कलरूपेण स्पष्टीकृतवान्—

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद् दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः ॥

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥ १०८ ॥

अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥ ११२ ॥

स मनोभावमापद्य तेजसा पाकमागतः ।
वायुमाविशति प्राणमथासौ समुदीर्यते ॥ ११३ ॥

अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥ ११४ ॥

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥ ११७ ॥

( वाक्यपदीयम्, ब्रह्मकाण्डम् )

'स मनोभावमापद्य तेजसापाकमागतः' इत्यस्यां कारिकायां सूक्ष्मवागात्मस्वरूपज्ञानस्य तेजसा पाकः प्रोक्तः । 'स च पाकः कथं निष्पद्यते' इत्ययं विषयो भौतिकविज्ञानदृशा विशदीकृतः ।

---

१. तैत्तिरीयप्रातिशाख्येऽनयोर्ग्रन्थयोरेतदीयोंऽशो द्रष्टव्यः ।

### ४. ध्वनिसञ्चारविधिः

अस्मिन्ननुच्छेदे भौतिकं शास्त्रं, तन्त्रालोकं न्यायव्याकरणदिशास्त्रञ्च समाश्रित्य ध्वनिसञ्चारं प्रतिपाद्य 'श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम्'— इति पातञ्जलयोगदर्शनसूत्रप्रामाण्येन ध्वनिः शून्येऽपि ( आधारमृते ) सञ्चरितुं प्रभुरिति सिद्धान्तं प्रतिपाद्य भौतिकानां समक्षं कोऽपि नवीनः विचारः समुपस्थाप्यते। श्रीमदभिनवगुप्तपादाचार्याणां मते अभिव्यक्तस्य शब्दस्य प्रतिबिम्बं श्रोतृदेशं पर्यटति, न तु अभिव्यक्तः शब्दः, न वा शब्दजः। यथा अस्माकं प्रतिबिम्बं दर्पणादिषु पतति, तथैव सकृत् समविभक्तस्य शब्दस्य प्रतिबिम्बं श्रवणेन्द्रियं यदा पतति, तदा ज्ञायते- अनेन घट इति, अनेन च पट इति समुच्चारितः।

### ५. प्राचीनकालिकध्वनिग्राहकयन्त्रादिविचारः

अस्मिन्ननुच्छेदे 'किं नाम यन्त्रमुच्यते? आधुनिकध्वनिग्राहकयन्त्रवत् प्राचीनकालेऽपि किमपि यन्त्रमासीत्। तच्च यन्त्रं कीदृग् आसीत्? तेन यन्त्रेण च कया रीत्या ध्वनिर्गृह्यते स्म? इत्यादयः प्रश्नाः सम्यक्तया समाहिताः। अत्रैव च प्रसङ्गवशाद् दिव्यश्रोत्रविषये 'दिव्यश्रोत्रस्य कथं प्राप्तिः? केनोपायेन श्रत्रे दिव्यशक्तिः समायाति?—इत्यादिप्रश्नान् आधुनिकेषु ध्वनिग्राहकयन्त्रादिषूपयुक्तानां ताम्रादिधातूनां समुत्पत्तिं तेषां गुणांश्च विवेचयता समाधानं कृतम्। आधुनिकध्वनिग्राहकप्रेषकयन्त्रयोः सर्वं कार्यं विद्युद् द्वारा प्रचलति। ताम्रसुवर्णादिधातुषु विद्युद्धाराप्रमोचनशक्तिरन्यधात्वापेक्षया प्रचुरतया स्वीक्रियते नूतनभौतिकैः। अस्मच्छरीरेऽपि ताम्रलोहादितत्त्वानि विद्यन्ते। विशेषक्रियया यद्वा योगक्रियया विद्युच्छक्तेरभिव्यक्तप्रक्रियापि यथावसरमन्वेषिता।

### ६. पराश्रव्यध्वनिविश्लेषणम्

अस्मिन्परिच्छेदे 'किं नाम पराश्रव्यध्वनिः? तस्य च लौकिके व्यवहारे क उपयोगः? तस्मिंश्च ध्वनौ कियद् ऊर्जः?' इत्यादिविषयाणां विश्लेषण कृतम्। पराश्रव्यध्वनेर्विपुलक्षमताम् अथ च व्यावहारिकमुपयोगं प्रतिपाद्य ध्वनिद्वारा प्राचीनकालिकी 'वस्तुनिर्माणप्रक्रिया' प्रतिपादिता।

### ७. अकारादिध्वनीनामर्थवत्ताविचारः

अस्मिन्नुच्छेदेऽकारादिवर्णानामर्थवत्ता प्रतिपादिता। अकारादिध्वनयः कमप्यर्थं प्रकटीकुर्वन्ति, नैते निरर्थकाः। एतदेव स्पष्टंञ्चकार महर्षिः पतञ्जलिर्महाभाष्यस्य पस्पशाह्निके—

'अर्थवन्तो वर्णाः; धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्। धातव एकवर्णा अर्थवन्तो दृश्यन्ते। प्रातिपदिकान्येकवर्णान्यर्थवन्ति। निपाता एकवर्णा अर्थवन्तः'। इति।

वर्णानामर्थवत्ता न केवलं पतञ्जलिरेव, अपि तु वेदोऽपि स्वीकरोति। तदुक्तम् ऋग्वेदे—

'ऋचो अक्षरे परमे व्योमन्यस्मिन् देवा अधिविश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ इति।

( ऋ० १।१६४।१३९ )

ऋचः परमव्योमस्वरूपे यस्मिन्नक्षरे विश्वे अधिदेवा निषेदुः निवसन्ति। यस्तदक्षरं न जानाति, ऋचा किं करिष्यति ? ये तु तद् विदन्ति, त एव समासते सम्यक् प्रकारेण देवान् उपविशन्ति।

एवमस्याम् ऋचि स्पष्टतया अक्षराणामर्थवत्ता प्रतीयते। प्रतिमन्त्रं प्रत्येकमक्षराणां यदा ज्ञानं तदा तन्मन्त्रं फलप्रदम्, नान्यथा।

अकारादिध्वनीनामर्थवत्तां निरुक्तकारादयोऽपि समामनन्ति। तद्यथा—

"कः कमनीयो भवति सुखो भवति क्रमणीयो वा। तद्यथा कः कमनो वा क्रमणो वा सुखो वा" इति ( नि० दे० ४।२२ ) ॥

गकारामनक्तेदहते र्वा ( नि० दे० १।१४ )।

तानि ह वा एतानि त्रीण्यक्षराणि स-ति-यमिति।

तद्यत् सत् तदमृतमथ यत् ति तन्मर्त्यमथ यत् यम् तेनोभे यच्छति ॥

( छान्दोग्योपनिषद् )

गोपथब्राह्मणे च भर्ग-मखशब्दयोर्व्याख्या कृता। यथा भर्गशब्दस्य व्याख्या-

भ इति भासयतीतीमांल्लोकान्।
र इति रजयतीतीमांल्लोकान्,
ग इति गमयतीतीमांल्लोकान् इति भर्गः।

मखशब्दस्य व्याख्या यथा—

मख इत्येतद्यज्ञानामधेयं छिद्रप्रतिषेधसामर्थ्यात्।
छिद्रं खमित्युक्तं तस्य मेति प्रतिषेधः मा यज्ञं छिद्रं करिष्यतीति।

एवमस्मिन्ननुच्छेदेऽकारादिध्वनीनामर्थवत्ता प्रतिपादयता तेषां वर्णदेवताविषयेऽपि विचारः कृतः।

## ८. ध्वनिपरिवर्तनम्

संस्कृतवाङ्मये नव्यप्राचीनवैयाकरणसम्प्रदाये योऽर्थ आदेशपदेन व्यवह्रियते, अशक्तिजातिदेशवशाच्च विरूपोच्चारणे सति यः शब्दो दोषग्रस्त उच्यते, भाषाविज्ञानसम्प्रदाये सोऽर्थः ध्वनिपरिवर्तननाम्ना व्यपदिश्यते। ध्वनि-परिवर्तनस्य बहवो हेतवः पाणिनीयव्याकरणे, पातञ्जलमहाभाष्यस्य पस्पशाह्निके, ऋग्वेदप्रातिशाख्ये च प्रदर्शिताः।

पाणिनीयव्याकरणे सन्धिप्रकरणे सन्धिप्रकियायां ये नियमाः प्रदर्शिता-स्तेषां मध्ये केषाञ्चिन्नियमानामंशतोऽनुसरणम् केषुचिदपभ्रंशशब्देषु दृश्यते। अन्तरं तु एतावदेव विद्यते यत् पाणिनीयव्याकरणे सति निमित्ते आदेशः क्रियते, किन्तु अपभ्रंशशब्देषु निमित्तं विनापि आदेशो दृश्यते। एतदेव अपभ्रंशानामपभ्रंश-त्वम्। तद्यथा—'रो रि' इति पाणिनीयसूत्रेण रेफस्य रेफे परे लोपः क्रियते, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यनेन ढलोपनिमित्ते ढकारे, रेफलोपनिमित्ते च रेफे परे पूर्वस्याणो दीर्घः क्रियते, तद्यथा—पुनारमते, हरी रम्यः। परन्तु अपभ्रंशे पत्ता-शब्दे निमित्तं विनापि पत्रशब्दघटकरेफस्य लोपः, त्त-शब्दघटकस्याकारस्य दीर्घः। अनया दिशा चायं परिच्छेदः परिसमाप्तः।

॥ इति शम् ॥

डॉ० रामनारायणदासः

# कृतज्ञताप्रकाशनम्

अस्य ग्रन्थस्य प्रस्तुतौ येषां महानुभावानां साहाय्यं समुपलब्धम्, तत्कृतेऽहं हृदाऽतीव कृतज्ञतां निवेदयामि। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, विश्वविद्यालयानुदानायोगश्चेत्युभौ पुस्तकालयीय-छात्रावासीय-आर्थिकसाहाय्यरूपेण वरिष्ठानुसन्धानपारिषदद्यवृत्तिं ( सीनियररिसर्चफेलोशिप ) प्रदाय महतीमनुकम्पां कृतवन्तौ, तेनायं ग्रन्थो निर्विघ्नं पूर्णतां गतः।

अस्मिन्नवसरे सर्वप्रथमं गुरुवर्याणां चरणौ सश्रद्धमानतोऽस्मि। एतैर्महाभागैर्यत् निर्देशनरूपेण साहाय्यं कृतम्, तत्कृतेऽहं तेषां सर्वथा ऋणी।

अनुसन्धानसंस्थानसञ्चालकमहोदया अप्यत्र विषयेऽतिशयेन स्मरणीयाः। एतैर्महाभागैरत्र कर्मणि यत् साहाय्यं प्रदत्तम्, तत्सर्वदा स्तुत्यम्।

ग्रन्थे मुद्रणयन्त्रादिकृतदोषाः प्रमादवशाद् यदि कुत्रचिद् असंशोधिता दृश्येरन्, तर्हि क्षन्तव्याः संशोध्याश्च।

विदुषां वशंवदः

**डॉ० रामनारायणदासः**

## ग्रन्थे व्यवहृतानां सङ्केतानां सूची

| | |
|---|---|
| ऐ० आ० अ० | ऐतरेय, आरण्यक, अध्यायः |
| ऋ० वे० | ऋग्वेदः |
| मं० सू० मं० | मण्डलम्, सूक्तम्, मन्त्रम् |
| पा० यो० द० अ० | पातञ्जलयोगदर्शनम्, अध्यायः |
| पा० योगद० अ० | पातञ्जलयोगदर्शनम्, अध्यायः |
| पा० सू० | पाणिनीयसूत्रम् |
| स्व० त० प० | स्वच्छन्दतन्त्रम्, पटलः |
| श्लो० | श्लोकः |

—:o:—

## संक्षिप्तविषयसूची



—:०:—

ध्वनितत्त्वसमीक्षायाः

# बृहद्विषय-सूची

# १.

# ध्वनितत्त्वम्

## अहमित्येव ध्वनितत्त्वम्

अर्थावबोधकमनर्थकञ्च सर्वमपि शब्दजातं ध्वनिरित्यपरनाम्ना व्यवह्रियते । उक्तञ्च पातञ्जलमहाभाष्यस्य पस्पशाह्निके—

'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः' इति ।

अनेन सार्थकस्य शब्दस्य ध्वनिरूपत्वं प्रमाणतामायाति । निरर्थकोऽपि शब्दो ध्वनिरिति तु लोके प्रसिद्धमेव । किञ्च, नूतनध्वनिविज्ञानलोके सर्वविधोऽपि शब्दः ध्वनिरुच्यते । संवित्स्वरूपा मन्त्रवीर्यात्मा परा वाग्, अथ च पश्यन्ती, मध्यमेति वाक्त्रयमपि ध्वनिपदेन व्यपदिश्यते । तद्यथा—

एवं त्रिविधविसर्गाविशसमापत्तिधाम्नि य उदेति ।
संवित् परिमर्शात्मा ध्वनिस्तदेव मन्त्रवीर्यं स्यात् ॥
( तन्त्रालोकः २५।१७२ )

अत्र 'संवित् परिमर्शात्मा' इति पदेन परावाग् गृह्यते । पश्यन्त्याश्च परावाङ्मूलत्वात् साऽपि ध्वनिस्वरूपा । मध्यमाया वाचो ध्वनिशब्देन व्यवहारो **योगचूड़ामण्युपनिषदि** प्रोक्तः । तदचथा—

तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत ।
प्रणवस्य ध्वनिस्तद्वत् तदग्रं ब्रह्म चोच्यते ॥ ८० ॥

एवं सर्वविधस्यापि शब्दस्य शास्त्रकारैर्ध्वनीत्यपरनाम्ना व्यवहारात् सर्वोऽपि शब्दो ध्वनिनामार्हः । तेन 'अकारादिवर्णा एव ध्वनिपदवाच्याः, न तु परादिवाचः' इति न स्वीकरणीयम् ।

ध्वनिशब्दयोरभेदव्यवहारादेव 'ध्वनिरेव शब्दः' इति वैयाकरणानां समयः । उक्तञ्च श्रीभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

आत्मभेदस्तयोः केचिदस्तीत्याहुः पुराणगाः ।
बुद्धिभेदादभेदस्य भेदमेके प्रचक्षते ॥ इति ।

पातञ्जलमहाभाष्यस्य पस्पशाह्निके च—

अथवा "प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते, तद्यथा 'शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवकः 'इति ध्वनिं कुर्वन्नेवमुच्यते । तस्माद् ध्वनिः शब्दः ।" अत्र ध्वनिरेव शब्दः । ध्वनिशब्दयोरभेदसम्बन्धः । ध्वनिं विना शब्दस्य तत्त्वेन न प्रतीतिरतो ध्वनिरेव शब्दः ।

'ध्वनयति स्फोटात्मकं शब्दं यः स ध्वनिः' इति व्युत्पत्त्या वैखर्यात्मकस्यैव शब्दस्य ध्वनित्वमायाति। 'ध्वन्यते=अभिव्यज्यते यः स ध्वनिः स्फोटात्मकः शब्दः' इति व्युत्पत्तिमतामनुसारं तु तयोरभेदत्वं समायाति।

केचिद् आचार्याः वाच्यवाचकयोरुभयोरपि ध्वनित्वमामनन्ति। ध्वन्यात्मको यो वाच्यार्थः, ध्वन्यात्मकश्च यो वाचकः शब्दः—तावुभौ ध्वनिः। अत एवोक्तमानन्दवर्धनाचार्येण—

काव्यस्यात्मा ध्वनिरिति।

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥

इति साहित्यसङ्गीतरसप्रेक्षावतां विदग्धसूरिणां सरणिः। अन्ये विद्वांसश्च [1]ध्वनिस्फोटयोरेव ध्वनित्वमामनन्ति॥

समेषां शब्दानां मूलं स्वरूपम् 'अहम्' इति वदन्ति सुधियः। इदञ्च तथ्यं भगवान् पाणिनिरपि स्वीकरोति। स हि चतुर्दशसूत्रात्मके वर्णसमाम्नाये आदौ अकारम् अन्ते च हकारं पठितवान्। अकारहकारयोर्मध्ये सर्वान् वर्णान् समुपदिष्टवान्। तेन सर्वे वर्णास्तन्मध्यगतत्वाद् 'अह' इत्यनेनैव प्रत्याहृताः। 'अहम्' इत्यत्र 'म्' इति तु प्रथमविभक्तेरेकवचनस्य रूपम्। किञ्च पाणिनीयव्याकरणे वर्णसमाम्नायघटकानि सर्वाणि व्यञ्जनानि अ-स्वरेणैव समुच्चरितानि। 'तेन अकार एव समेषां वर्णानाम्, अथ च अर्थानां मूलमिति औपनिषदं तथ्यं भगवता पाणिनिना स्वीक्रियते इति संसूच्यते। यद्यपि शब्दसाधनप्रक्रियादृष्ट्या शलादिप्रत्याहारेषु ग्रहणार्थम् अन्त्यहकारस्य प्रयोजनमुक्तम्, तेन अलिक्षत् इत्यादौ "शल इगुपधादनिटः क्सः" (३।१।४५) इति सूत्रेण च्लेः क्सादेशः सञ्जायते। तथापि दार्शनिकदृष्ट्या विचार्यमाणे सति तद्भिन्नमपि प्रयोजनं दृष्टिपथं समायाति। तच्च प्रयोजनम् 'अहम्' इत्येव सर्ववाक्तत्त्वमित्यस्यावबोधनम्।

अहमित्येव ध्वनितत्त्वमिति तथ्यं न केवलं भगवान् पाणिनिरेव, अपि तु अन्येऽपि दार्शनिकाः स्वीकुर्वन्ति। एतच्च तथ्यं श्रुतिरपि प्रतिपादयति, तद्यथा—

अः इति ब्रह्म तत्रागतमहमिति।

( ऐ० आ० २।३।६ )

'अः, अहम्' इत्यनयोर्नास्ति भेदः, अनच्कहकारस्य विसर्गरूपत्वात्।

आगमशास्त्रेऽपि—

निराभासात् पूर्णाद् अहमिति पुरा भासयति यद्,
द्विशाखामास्ते तदनु च विभक्तुं निजकलाम्।

---

१. वैखर्यात्मकः श्रोत्रग्राह्यः शब्दः।

स्वरूपाद् उन्मेषप्रसरणनिमेषस्थितिजुषस्,
तदद्वैतं वन्दे परमशिवशक्त्यात्मनिखिलम्[1] ॥ १ ॥

इत्युक्तम्।

यस्मात् सर्वे आभासाः = अखिलब्रह्माण्डविषयकज्ञानानि विनिर्गतानि, यद्वा निःसृतानि; सर्वेषाम् आभासानां मूलोपादानत्वात्। यच्च पूर्णम् तस्मादेव अहमित्यस्य स्फुरणं जातम्। 'अह' इत्यनयोर्मध्ये अकारः शिवः, हकारश्च शक्तिस्वरूपः। अहमिति तत्त्वम्, उन्मेष-प्रसरण-निमेषेति स्थितित्रयविशिष्टम्। उन्मेषः = जगदुद्भवः, प्रसरणम् = विस्तारः, पालनादिक्रिया च, निमेषः = संहारः। जगदुद्भव-पालन-संहारशक्तयः अहन्तत्त्वस्याङ्गभूताः।

लोकेऽपि सर्वप्राणिषु मूलाधारात् सततं ध्वनिः स्फुरन् हृदयादि स्थानमतिक्रामन् लोकोपयोगिवाग्रूपतां धत्ते। स एव मूलध्वनिः हृदयादिस्थानसंयोगेन मध्यमादिनाम्ना व्यपदिश्यते। पराभावात् पश्यन्तीपदं ततोऽपि मध्यमापदं तस्माच्च वैखरीविषयतां सम्पद्यते। गर्भीकृताशेषवाच्यवाचकं प्रत्याहारात्मकम् अहन्तत्त्वमेव परावाङ्नाम्नाऽभिधीयते। तथा चोक्तम्[2]—

याऽहमित्युदिता वाक् परा च सा।

तस्मिन् ब्रह्मणि 'अहम् एकः' इत्यस्याभासः सृष्टेरादौ सर्वप्रथमं बभूव, ततः 'बहु स्याम्' इति द्वितीय आभासः सञ्जातः। 'एकोऽहं बहु स्याम्' इति सिसृक्षया निष्कले ब्रह्मणि यद् 'अहम्' इति ध्वनिरूपस्य स्फुरणं जातम्, सा एव परमात्मनः परा शक्तिः। सा च परा शक्तिः ध्वनिपदेनापि व्यवह्रियते। तथा चोक्तम्—

अदृष्टविग्रहाच्छान्ताच्छिवात् परमकारणात्।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम्॥
(स्वच्छन्दतन्त्रम् ८।२७)

परब्रह्मणि 'अहम्' इत्याकारकं यत् स्पन्दनं तदेव ध्वनितत्त्वम्। अस्मादेव पश्यन्त्यादिवाग्रूपा ध्वनयो विस्तरतां यान्ति। तनोति विस्तारयति स्वात्मानं विविधवाच्यवाचकभेदेन यः स तत्। विस्तारार्थकात् तनुधातोः कर्तरि क्विप्-प्रत्यये सति तस्य च सर्वापहारिलोपे धातुघटकनकारस्य च लोपे 'त' इति स्थितौ तुगागमे सति अनुबन्धलोपे 'तत्' इति रूपं निष्पद्यते। ततो भावः कर्म वेति विग्रहे त्व-प्रत्यये प्रथमविभक्त्येकवचने 'तत्त्वम्' इति पदस्य निष्पत्तिः। न च 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' इति पाणिनीयसूत्रे नलोपस्यासिद्धत्वात् कथमत्र तुगागम इति वाच्यम्? महाभाष्ये सन्निपातपरिभाषया वृत्रहभिरित्यत्र तुकं

---

१. अभिनवगुप्तकृता ईश्वरप्रत्यभिज्ञाविमर्शिनी।
२. चिद्गगनचन्द्रिकायाम्।

व्यावर्त्यं 'नलोपः' इति सूत्रे तुग्ग्रहणं प्रत्याख्यातम् । तुग्ग्रहणाभावे कृतिग्रहणमपि व्यर्थमेव । अतएव 'आहत्य' इत्यादि रूपसिद्धिः । ध्वनीनां तत्त्वमिति ध्वनितत्त्वम् । तच्च तत्त्वम् अहमित्येव । तच्च नित्यम् । नित्यत्वं च त्रिकालाबाध्यत्वम् । यद्वा आकृतिसंहारे यदन्ते व्यवतिष्ठते, तन्नित्यम् । तदुक्तं श्रीभर्तृहरिणा वाक्यपदीयस्य द्रव्यसमुद्देशे—

सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते ।
तन्नित्यं शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते ।।

आकृतिसंहारे सति अन्ते यद् व्यवतिष्ठते तदेव सत्यम्, तदेव नित्यम्, तदेव शब्दवाच्यम्, तदेव च शब्दतत्त्वम्, तत् कदापि न भिद्यते । यद्वा यस्माद् येन वा सर्वमिदं वाच्यं वाचकश्च ततम्, तत् तत्त्वपदेन व्यवह्रियते । तथा चोक्तं श्रीमतङ्गे—

तत्त्वं वस्तुपदं व्यक्तं स्फुटमाम्नायदर्शनात् ।
ततमेतेन वा यस्मात् तत्त्वं तत् तत्त्वसन्ततौ ।। १ ।।

येन यस्माद्वा नाम तदभिधेयश्च तते तत् तत्त्वमुच्यते । तच्च तत्त्वम् अहमित्येव ।

ज्ञेयस्य च परं तत्त्वं यत् प्रकाशात्मकः शिवः ।।
( श्रीतन्त्रालोकः, १।५२ )

शिवात् प्रारभ्य अवनिपर्यन्तं योऽयं वर्णपदमन्त्रकलाभुवनतत्त्वात्मकोऽध्वा विस्तृतः, स चित एव विस्तृतः । तज्ज्ञानादेव क्लेशनिवृत्तिः । अत्र चित्पदेन प्रकाशविमर्शात्मकः 'अहम्' इति ब्रह्मनिष्ठस्पन्दनस्यैव ग्रहणम्; पर्यायवाचित्वात् । तदुक्तं विरूपाक्षपञ्चाशिकायाः प्रथमस्कन्धे—

ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति ।
एतेऽहन्तायाः किल पर्यायाः सद्भिरुच्यन्ते ।। ८ ।। इति ।

सर्वेषां ध्वनीनाम् अर्थानाञ्च ब्रह्मनिष्ठस्पन्दनमयमहन्तारूपं यद् प्रतिज्ञातम्, तदेव ईश्वरत्वं कर्तृत्वम्, चिन्मयत्वञ्च । ईश्वरतादिपदेन व्यवह्रियमाणं तदेव तत्त्वं बिन्दुकुण्डलिनीत्यनयोरपि पर्यायभूतम् । तदुक्तम्—

बिन्दुश्चैवेश्वरः स्वयम् ।। २६४ ।।
( स्वच्छन्दतन्त्रे पट०४ )

गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ।।
( संगी० रत्ना०—१।२।११९-१२० )

निष्कलब्रह्मनिष्पन्दभूताहमिति महासत्तारूपस्य चिदादीनाञ्च परस्परं पर्यायवाचित्वम्, पर्यायवाचित्वाच्च एकमेव तत्त्वं चिदादिपदेन व्यवह्रियते।

ध्वनितत्त्वरूपा येयमहन्ता प्रोक्ता सा स्पन्दसंज्ञयाप्यभिधीयते। किञ्चिच्चलनार्थकात् स्पदिधातोः स्पन्दशब्दो व्युत्पद्यते। स्पन्दनात् स्पन्दः। स्पन्दनञ्च निस्तरङ्गस्यास्य परमात्मनः युगपन्निर्विकल्पा या सर्वत्रोन्मुखवृत्तिता।

उक्तं च उत्पलाचार्यविरचितस्पन्दप्रदीपिकायां ग्रन्थारम्भावसरे—

सान्त षाड्गुण्यरूपस्य यत् स्फुरन् प्रतिभोदयः।
स चात्मबलशक्तीशश्चिद्रूपः स्पन्दसंज्ञकः॥ इति।

निष्कलब्रह्मनिष्पन्दभूतेयमहन्ता सांख्यादिशास्त्रेषु प्रतिपादितो बुद्धितत्त्वात् समुत्पन्नो योऽहङ्कारः तद्रूपो न। न वा अस्मच्छब्देन प्रथमविभक्तौ योऽहंशब्दस्तद्रूपः। न वा पुनरहमिति प्रतीयमानतयैव या अहन्ता तद्रूपा, किन्तु प्रकाशविमर्शात्मिका एव अत्र अहं पदेन गृह्यते। विषयग्रहे 'अहं चक्षुषा रूपं पश्यामि' इत्येवं रूपादिग्रहणस्थलेऽहमिति ज्ञातृरूपेण प्रतीयमाना या अहन्ता सा प्रकाशविमर्शात्मिकाया अहन्ताया अंशभूता। अहमिति पदघटकौ अकारहकारौ क्रमशः प्रकाशविमर्शौ व्यवह्रियेते। प्रकाशविमर्शयोः सर्वत्र व्यापकत्वात् अहमिति महासत्ता सामान्यभूता। सामान्याच्च 'सामान्ये नपुंसकम्' इति नियमान्नपुंसकोऽयं शब्दः। 'अविभक्तिकं न प्रयुञ्जीत'—इत्युक्तदिशा अहशब्दात् सौ विभक्तौ नपुंसकलिङ्गपरत्वाच्च तस्य अमादेशे पूर्वरूपे सति 'अहम्' इति निष्पद्यते। अहमिति च ध्वनिः प्रकाशविमर्शस्वरूपः। उक्तञ्च--

अहमित्येकमद्वैतं यत् प्रकाशात्मविभ्रमः।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः॥
हकारोऽन्त्यः कलारूपो विमर्शः परिकीर्तितः[1] ॥ इति।

शिवशक्त्यात्मनोः प्रकाशविमर्शयोः समरसीभूते सति अहमिति परमद्वैतं स्फुटीभवति। अत्र प्रकाशो धर्मी, विमर्शश्च तद्धर्मः। यद्वा अहमिति ध्वनौ प्रकाशात्मको योऽकारः स शिवः। विमर्शात्मको यश्च हकारः सा शक्तिः।

उक्तञ्च काशीखण्डे—

यदेकलो न शक्नोसि रन्तुं स्वैरञ्चर प्रभो।
त्वमेको द्वित्वमापन्नः शिवशक्तिप्रभेदतः॥ इति।

प्रकाशस्य धर्मभूतो यो विमर्शात्मको हकारः, तस्मात् पदमन्त्रवर्णानाम्, अथ च धर्मभूतविमर्शस्य धर्मिभूतो यः प्रकाशः तस्मात् तत्त्वभुवनकलानाम् अभि-

---

१. डॉ० गोपीनाथकविराजसम्पादिते लुप्तागमसङ्ग्रहे 'सङ्केतपद्धतिः' इत्यत्र एतदीयोंऽशो द्रष्टव्यः।

व्यक्तिरिति परावाङ्नाम्नो व्यपदिश्यमानात् चितिस्वरूपाद् 'अहम्' इत्यस्मादेव ध्वनेः शब्दार्थयोभयोरपि सृष्टिर्जाता । उक्तञ्च श्री भर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ १ ॥ इति ।

चितिस्वरूपा इयम् अहन्ता शिवशक्त्योः समरसीभूता निखिलं ब्रह्माण्डं प्रकाशयन्ती सर्वत्र व्याप्ता; यतो हि जडपदार्थेष्वपि क्रिया दृश्यन्ते । यथा घटपटादीनां नित्यं परिणामो दृश्यते परिणामनरूपेयं क्रिया चेतनसंयोगं विना असम्भवा; सर्वस्याः क्रियायाः चित्संयोगादेव निष्पादनात् । 'नाहं देहः, किन्तु चित्स्वरूपोऽहम्' इत्येवं देहाद्यधिरूढायास्तमोऽहन्तायाः त्यागे सति हृत्सरोजे विमला अहंरूपा चितिकला समुदेति । विज्ञाता सती च सा अहंरूपा चितिर्मोक्षं ददाति ।

चित्स्वरूपात्मिका परावाग्रूपा अहन्ता एव पूर्णाहन्ता । पूर्णाहन्ताया हृत्सरोजे यावन्नोदयः, 'अहं योगिराट्, अहं सम्राट्' इत्येवं तमोरूपाऽहन्ता हृदि च यावत् स्फुरति, न तावन्मन्त्रवीर्यलाभः । मन्त्रवीर्यलाभाभावाच्च न मन्त्रसिद्धिः । प्रत्यवमर्शात्मको योऽयमहन्तारूपो महाह्रदः, तत्र निमज्जनात् यद्वा तस्यानुसन्धानान्मन्त्रवीर्यलाभः । उक्तञ्च शिवसूत्रे—

महाह्रदानुसन्धानाद् मन्त्रवीर्यानुभवः ।
—मातृकाचक्रसम्बोधः ॥ ३ ॥

तत्र वीरो नाम विविधमीरयति विश्ववैचित्र्यमिति भगवान् शब्दराशिरिति भट्टारकः ।

तदुक्तं चिद्गगनचन्द्रिकायाम्—

'ईरणेन विविधेन वीरतां योऽयमक्षरगणः प्रपद्यते । वीरसम्बन्धी धर्मो वीर्यमित्युच्यते । मन्त्राणां वीर्यमिति मन्त्रवीर्यम् । तच्च वीर्यं पूर्णाहङ्कार एव । यदि त्वमात्मानं देहमात्रं मन्यसे, तर्हि तव देहाधिकृतं यावद् विद्यते, तावदेव अधिकर्तुं समर्थः । तदधिकं चेद् वाञ्छसि तर्हि दण्डभीतिः ।

तदुक्तं भट्टगङ्गाधरमिश्रैः—

अपूर्णम्मन्यता व्याधिः कार्पण्यैकनिदानभूः ।
क्लेशावहो जुगुप्सश्च सर्वधर्मबहिष्कृतः ॥
आनन्दकणभिक्षार्थं शब्दस्पर्शादिपक्वणे ।
अटत्यविरतं येन तद् दारिद्रयं विदुर्बुधाः[1] ॥

---

१. नित्याषोडशिकार्णवतन्त्रे प्रथमपटलस्थ ४४तमश्लोकस्य शिवानन्दकृत-ऋजुविमर्शिनी-व्याख्यायामयं श्लोकः समुद्धृतः ।

यदि च त्वम् अकारहकारप्रत्याहारात्मा गर्भीकृताशेषविश्वसमग्रशास्त्र-प्रसरप्रथमाङ्कुरः चित्स्वरूपः पूर्णाहन्तारूपो यो भगवान् शब्दराशिः तदात्मना स्वात्मानं परामृशसि तर्हि यावत्तद् अधिकृतम्, तावद् अनुशास्तुं समर्थः।

चित्स्वरूपस्य अहमित्यस्य मन्त्रवीर्यत्वमुक्तं श्रीसंवित्स्तोत्रे—

आदिमान्तगृहीतवराराश्यात्मिकाहमिति या स्वतः प्रथा।
मन्त्रवीर्यमिति साधितागमैस्तन्मयो गुरुरसि त्वमम्बिके ॥ १ ॥

अस्येदं तात्पर्यम्—प्रकाशविमर्शात्मका अकारहकारौ मध्यवर्तिनां लोकमातृकाघटकानां समेषां वर्णानां बोधकौ, अथ च स्वात्मनोरपि; यथा पाणिनीयशास्त्रे 'आदिरन्त्येन सहेता' (१।१।७१) इति सूत्रेण निष्पन्ना अणादिप्रत्याहाराः अकारादिध्वनीनामथ च मध्यपातिवर्णानां बोधकास्तथा अत्रापि ब्रह्मनिष्ठस्पन्दभूतौ अकारहकारावपि। भेदस्तावद् उभयत्र अयमस्ति यत् पाणिनीयव्याकरणशास्त्रे अणादिसंज्ञाभिः अन्त्यस्य णकारादेर्ग्रहणं न क्रियते, इत्संज्ञकत्वात्; किन्त्वहमित्यत्र हकारोऽपि 'अह' इति प्रत्याहारेण गृह्यते। ब्रह्मनिष्ठप्रकाशविमर्शयोः समरसीभूते 'अहम्' इत्यत्र प्रत्याहृताः स्वरव्यञ्जनात्मकाः सर्वे ध्वनयो भगवतः शक्तिस्वरूपा एव।

परमात्मनि अकारककारादिस्वरव्यञ्जनवाच्यानामशेषशक्तीनामभेदरूपतया समन्वयो विद्यते। अत एव निष्कले ब्रह्मणि पूर्णाहन्ता स्वाभाविको धर्मः। निखिलं स्वरव्यञ्जनात्मकं सार्थकं निरर्थकञ्च ध्वनिम्, अथ च निखिलं विश्वं मयूराण्डरसे पुच्छपादाद्यङ्गानीव, यद्वा वटबीजे शाखापल्लवादीनि इव अभेदरूपतया गर्भीकृत्य परात्मनि परावागात्मकं चित्स्वरूपम् 'अहम्' इति स्फुरति।

उक्तञ्च योगिनीहृदयस्य मन्त्रसङ्केतनिरूपणे—

अतोऽकारहकाराभ्याम् अहमित्यपृथक्तया।
प्रपञ्चं शिवशक्तिभ्यां क्रोडीकृत्य प्रकाशते[1] ॥ इति।

श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डेऽपि—

आण्डभावमिवापन्नो यः क्रतुः शब्दसंज्ञकः।
वृत्तिस्तस्य क्रियारूपा भागशो भजते क्रमम् ॥ ५१ ॥ इति।

यथा मयूरादयः अङ्गप्रत्यङ्गचन्द्रकादीनामुपसंहारेण लीयमानाः सूक्ष्मरूपेण तदुत्पादनशक्त्या सह रसभावमापन्ना अण्डे समवतिष्ठन्ते, पुनश्च अण्डात्तथैवाविर्भवन्ति; एवं वैखरीरूपः वर्णरूपावयववान् सक्रमः शब्दः अवयवात् उपसंहरणेन अक्रमान्तरशब्दरूपतामापद्यमानः अन्तःकरणे समवतिष्ठते।

---

१. योगिनीहृदयदीपिकायां मन्त्रसङ्केतनिरूपणे २१-२२तमश्लोकयोः दीपिकासेतुबन्धाख्यटीकायामयं श्लोकः मालिनीशास्त्रसिद्धान्ततन्त्रात् समुद्धृतः।

परावागात्मकमिदं स्फुरणं 'स्वरूपज्योतिरेवान्तः परावागनपायिनी' इत्युक्त्या स्वतः प्रकाशस्वरूपम्। पश्यन्त्यादिकं वैखरीपर्यन्तञ्च उत्तरोत्तरं क्रमशः प्रकाशयति। विमर्शस्वभावा विगलितोपरागा निरोधकाभावाद् अनिशं स्फुरद्रूपतया च स्वरसवाहिनीयमहन्ता चेतना चेतनात्मकस्य जगतः; देशकालादिभेदकानाञ्च स्वात्मन्यसम्भवाद् अद्वितीयः सन् आगमेषु अहमित्यभिहितः। स एव अनाहतमहाध्वनिभट्टारकः। नित्यं स्फुरद्रूपतया तद्विशिष्टतया च परब्रह्मापि तद्रूपमेवेति परावागात्मिका पूर्णाहन्ता च तदभिन्ना।

एतत्सर्वम् अद्वैतवादिनां मतानुसारेण ध्वनितत्त्वं व्याख्यातम्। द्वैतवादिनां मतानुसारेण तु परावागात्मनो ध्वनेः बिन्दोस्समभिव्यक्तिः। यथा बौद्धमतानुयायिनो 'बुद्धो धर्मः सङ्घश्च' इति रत्नत्रयमङ्गीकुर्वन्ति, एवं भेदवादिनस्तान्त्रिका अपि 'शिवः शक्तिः बिन्दुः' इति रत्नत्रयं मन्यन्ते। शिवः पुरुषनाम्ना, अथ च शक्तिर्मायानाम्नाप्यभिधीयते। शक्तेश्चापरं नाम 'एकोऽहं बहु स्याम्' इत्येवंरूपा इच्छा। बिन्दुश्च त्रिगुणात्मिका प्रकृतिरुच्यते। अयञ्च बिन्दुः बिन्दु-नाद-बीजभेदेन त्रिधा भिद्यते। उक्तञ्च—

कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते॥
स बिन्दु-बीज-नादभेदेन च निगद्यते।
(प्रपञ्चसारतन्त्रे प० १२, श्लो० ४३)

गुणत्रयात्मकाद् यो बिन्दुः समुत्पद्यते स स्थूलः, तन्मूलभूतश्च यो बिन्दुः स सूक्ष्मः, क्षुभ्यमाणात् सूक्ष्मबिन्दोः चेतनमिश्रो नादः समुत्पद्यते।

प्रतिपादितञ्चैतत् प्रपञ्चसारतन्त्रस्य प्रथमपटले—

बिन्दोस्तस्माद् भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत्।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते॥ ४३॥ इति।

बिन्दुसमुद्भूतश्चायं नाद एव परावाङ्नाम्ना व्यपदिश्यते। परादिवाचां स्वरूपविषये द्वैताद्वैतिनोरुभयोर्मते साम्यमपि विद्यते। परावाक् चेतनमिश्रा भुवनादिसृष्टिसमर्था च। बिन्दोः संक्षोभात् समुद्भूतो योऽव्यक्तात्मको रवः, स एव नाभिहृदयादिदेशं क्रमश उत्तरोत्तरं प्राप्य पश्यन्त्यादिरूपं उपाधिमाश्रयति। बिन्दोः शब्दात्मिका वृत्तिरेव परादिभेदेन चतुर्धारूपं भजते। सर्वप्राणिषु च आसां परादिवाचां सत्ता स्वीक्रियते। पुण्यापुण्यादिकर्मोपाध्यवच्छिन्नत्वात् प्राणिषु न्यूनाधिक्येन परादिवृत्तीनामुदयो दृश्यते, परादिवृत्तीनां विषमरूपेण प्राणिषूदयात् कस्यचिज्ज्ञानमुत्कृष्टम्, कस्यचिच्च मध्यमम्, अपकृष्टं वा दृश्यते। परादिवाचाम् अतिक्रमणे सत्येव शिवत्वलाभो मोक्षः सम्प्राप्यते।

तदेवं बिन्दुः संक्षुब्धः सन् यथा इन्द्रियभोगभुवनादीनि सृजति, तथैव परादिध्वनिमपि। द्वैतमते परावाग्रूपो ध्वनिः बिन्दोर्वृत्तिविशेषभूतः। अस्यातिक्रमणे सति मोक्षलाभः। यद्यपि त्रिगुणात्मकः सूक्ष्मो बिन्दुः विशुद्धः, सत्त्वगुणस्याधिक्यात्। अद्वैतवादिनां मते तु परावाग्रूपो ध्वनिः ब्रह्मणः स्वतन्त्रा चिन्मयी शक्तिः चित्स्वरूपा। इयञ्च वाक् पूर्वोक्तपूर्णाहन्तात्मना परमात्मन्यभेदेन विराजते। नित्यमभेदसम्बन्धस्य सत्त्वाच्च परब्रह्मापि तन्मयम्।

**अत्र युक्तायुक्तत्वविचारः, पराख्यवाचो व्यापकत्वनिरूपणञ्च—**

वस्तुतस्तु महाबिन्दोरूर्ध्वं चित्कला यद्वा चिच्छक्तिः स्वच्छन्दतया परिक्रीडति। क्रीडेयं पराया वाचो यद्वा परमात्मनो विलासरूपा। सा च परावाक् चिन्तनशून्या आत्माश्रिता अनपायिनी च। विशेषोपायैर्यदा मनो निःसङ्कल्पम्, तदा चिदात्मरूपया परया वाचा सह तस्यानवरतरूपेण सम्बन्धः, अखण्डानन्दश्चानुभूयते। परमात्मनि गर्भीकृताशेषविश्वं चिन्मयम् अहमात्मकं यत्स्फुरणम्, तदेव प्रथमो ध्वनिः। स एव ध्वनिः परावाङ्नाम्ना आम्नातः। महाबिन्दोः पराया वाचः जनित्वमसङ्गतं प्रतिभाति; कस्यचिदपि स्पन्दनस्य ध्वनिशून्यत्वाभावात्।

ध्वनिः स्पन्दनात् प्रादुर्भवति[1]। अतः 'यत्र यत्र परिस्पन्दनं तत्र तत्र ध्वनिः, यथा गलबिलस्थध्वन्युत्पादकतन्तुषु, यद्वा घण्टायाम्' इत्येवं नूतनवैज्ञानिकैः स्वीक्रियते। यद्वा 'यत्र यत्र ध्वनिः तत्र तत्र स्पन्दः' इत्येवमपि वक्तुं शक्यते,

---

१. यह बात हम अपने सामान्यज्ञान से जानते हैं कि ध्वनि पिण्डों के कम्पन करने से उत्पन्न होती है। बजती हुई घण्टी या थाली को छूने से हमें झनझनाहट मालूम होती है। बजते हुए सितार के तार को छूने पर उसके कम्पन का हमें स्पष्ट अनुभव होता है। इसी प्रकार जब हम बोलते हैं तो हमारे फेफड़ों से निकलती हुई वायु द्वारा हमारे गले में स्वरयन्त्र (वोकल कार्ड) की झिल्लियों में कम्पन होने लगते हैं। वस्तुतः प्रत्येक प्रकार की ध्वनि ध्वनि-उत्पादक पिण्डों के कम्पन करने से उत्पन्न होती है। तुम स्वयं प्रयोगों की रूप-रेखा खींच सकते हो। नीचे हम इस प्रकार के तीन प्रयोगों का उल्लेख करेंगें।

क—किसी प्याले को पानी से आधा भरो और एक कमान ( बो ) को उसके किनारे पर चलाओ। तुम देखोगे कि ध्वनि के साथ साथ पानी में लहरें भी उठ रही है। इत्यादि।

डा० वी० ए० दूबे, एम० एस-सी०, पी-एच० डी० कृत 'माध्यमिक भौतिक विज्ञान'; पृ० सं० ३५६।

सूचना—अत्र सर्वे प्रयोगा विस्तरभयान्न प्रदर्शिताः। केवलं प्रथमस्यैव योगस्योल्लेखः कृतः।

ध्वनिस्पन्दनयोः साहचर्यात् । घण्टायां यदा यस्मिन् स्थाने आघातः क्रियते, तत्र प्रथममाघाताव्यवहितोत्तरं ध्वनिः समुत्पद्यते, तदव्यवहितोत्तरं च घण्टायां यत्राघातः पूर्वंकृतः, तत्र तत्संश्लिष्टेषु परमाणुपुञ्जेषूत्तरोत्तरं परिस्पन्दनं प्रादुर्भवति । अतः पूर्वं शब्दस्ततः परमाणुषु स्पन्दनमिति सर्वत्र स्पन्दनं शब्दपूर्वकमेव समुत्पद्यते । कुत्रचित् तु परिस्पन्दमनुभूयते, किन्तु शब्दश्रुतिर्न जायते । इत्येतावता तत्र ध्वनिर्न समुदेति । तथा च मदुक्तं ध्वनिस्पन्दनयोः साहचर्यं यद्वा कार्यकारणभावो न सत्यत्वं भजतीति न मन्तव्यम्; श्रुत्यनर्हस्यापि ध्वनेः सत्त्वात् । तत्रापि परमसूक्ष्मो ध्वनिर्भवत्येव । यतोहि एवमपि ध्वनिर्जायते, यं वयं श्रोतुमक्षमाः, किन्त्वपरे प्राणिनः शृण्वन्ति, यथा श्वादयः । ध्वनिप्रेषणकेन्द्रात्[1] प्रेषिता बहवो ध्वनयोऽस्माकं श्रोत्रमभितः प्रसरन्ति । वयं न जानीमः । किन्तु पार्श्वस्थं ध्वनिग्राहकयन्त्रं तान् ध्वनीन् गृह्णाति । अतो मानवीयश्रोत्रेन्द्रियातीता अपि ध्वनयो भवन्तीति निश्चयेन स्वीकर्तव्यम् । अस्माकं देहेषु रक्तसंवाहिकासु नाडीषु यत् किमपि परिस्पदनमनुभूयते, तत्रापि श्रोत्रेन्द्रियातीतो ध्वनिर्निःसरितः । यदा हस्तेन हस्तं काष्ठादिफलकं वा स्पृशामः, यद्वा हस्तेन रज्जुं सूत्रं गृहीत्वा कम्पयामः, उपनेत्रे[2] च रजःकणाः समापतन्ति, यदा च अश्वत्थादिवृक्षपत्रेषु मनागपि स्पन्दनं जायते, तदा तत्राप्यव्यक्तात्मको रवो ( ध्वनिः ) भवति । परिस्पन्दनं विना क्वापि केनचिदपि उत्तरदेशेन संयोगो न सम्भाव्यते । केनचित् सह संयोगाय शरीरे पादयोर्वा परिस्पन्दने सति श्रोत्रेन्द्रियातिशायी शब्दोऽवश्यमेव प्रादुर्भवति । यत्र यत्र परिस्पन्दः चाञ्चल्यं वा तत्र तत्र ध्वनिः, यथा घण्टायां कण्ठे वा—इति प्रत्यक्षानुभवजन्यप्रामाण्येन प्रमाणीकृतानुमानेन वक्तुं सर्वथा सत्यम् ।

अतः कस्याश्चिद् विवक्षायां प्राणिनां हृद्देशे स्थिते जीवात्मनि बुद्धया सह समेतुं यदैव परिस्पन्दनं चाञ्चल्यं वा जायते, तस्मिन्नेव क्षणे मनसो बुद्धया सह सयोगात् पूर्वम् आत्मनिष्ठस्पन्दनेन यो ध्वनिः प्रस्फुरति, स एव रवः आत्मनो बुद्धयादिभिः परम्परया संयोगानन्तरं कण्ठादिस्थानतोऽकारादिरूपेण वहिरभिव्यज्यते । न च निष्फले आत्मनि स्पन्दनमयुक्तमिति वाच्यम्; तस्यापि स्पन्दमयत्वात् । 'अणोरणीयान् महतो महीयान्' इति श्रुतौ परब्रह्मणो यद् रूपं, तत्तु नटराजवच्चञ्चलम्, स्पन्दमयश्च विद्यते । यत्कालावच्छेदेन तद्ब्रह्म महतो महीयः, तत्कालावच्छेदेन अणोरणीयः—इति महतो महीयस्त्वम् अणोरणीयस्त्वञ्च एककालावच्छेदेन भवतः ।

किञ्च 'एकोऽहं बहु स्याम्' इत्यादिभिस्तस्मिन्नपि स्पन्दनं विज्ञायते; एकस्य बहुत्वभवनं स्पन्दनं विना असम्भवात् । यत्र यत्र परिस्पन्दः, तत्र तत्र रवस्य

---

१. फ्राम द रेडियो स्टेशन ।

२. चश्मा ।

(नादस्य) स्फुरणम्--इत्येवं पूर्वोक्तप्रत्यक्षानुमानप्रमाणाभ्यामयमेव विश्वासः सुदृढः सञ्जायते यद् एकस्मिन् ब्रह्मणि यदा बहुत्वभवनेच्छारूपं स्पन्दनं समजनि, तदव्यवहितोत्तरमेव अनाहतध्वनिः प्रास्फुटत्।

अत्र नागेशकृत-लघुसिद्धान्तमञ्जूषायां शक्त्याश्रयनिरूपणावसरे, यद्वा काशीखण्डे सृष्टिप्रक्रियायां यो नादाभिव्यक्तिक्रमो दृश्यते, तद्भिन्न एव क्रमः। तथा च मञ्जूषायाम्—

"ततोऽपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतो बुद्धिपूर्विका सृष्टिर्मायापुरुषौ भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोरचिदंशो बीजम्। चिदचिन्मिश्रोंऽशो नादः। चिदंशो बिन्दुरिति। अचिच्छब्देन शब्दार्थोभयसंस्काररूपा अविद्योच्यते।

अस्माद् बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्टिपुंयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव रवपरा-आदिशब्दैर्व्यवह्रियते" इति प्रोक्तम्।

अबुद्धिपूर्विका इति नागेशोक्तघटकस्य अबुद्धिपदस्य परमेश्वरस्य स्वभावः, लीला च इति पर्यायौ। स्वभावः कीदृग्? इति चेद् बहुत्वभवनरूपः परिस्पन्दः। यद्वा रन्तुमिच्छारूपः। तदुक्तं काशीखण्डे—

यदेकलो न शक्नोसि रन्तुं स्वैरं चर प्रभो।
तदिच्छा तव योत्पन्ना सैषा शक्तिरभूत्तव॥ इति॥

अस्माद् बिन्दोः शब्दब्रह्मापरनामधेयम् इति पूर्वोद्धृतनागेशवाक्ये अस्माद् बिन्दोः–इत्यनेन त्रिगुणात्मकबिन्दोर्ग्रहणम्। न तु चिदंशो बिन्दुरित्यस्य। अत्र प्रक्रियायां पूर्वं रन्तुमिच्छा, ततस्त्रिगुणात्मको बिन्दुः, ततश्चेतनमिश्रो नादः—इत्येवं क्रमः। रन्तुमिच्छारूपपरिस्पन्दनजन्यत्रिगुणात्मकबिन्दोरभिव्यक्त्युत्तरं नादः समजनि।

नागेशप्रभृतयः शिवः, शक्तिः, बिन्दुः—इति रत्नत्रयं स्वीकुर्वाणा अत्र विषये द्वैतमतावलम्बिन इति प्रतीयते।

तदित्थं द्वैतवादिनां मतानुसारेण बिन्दुतत्त्वात् पराध्वनेर्जनित्वं स्वीक्रियते। परन्तु पूर्वोक्तेन प्रत्यक्षप्रमाणीकृतानुमानेनेदं पराया वाचो जनित्वं विश्वासं नेव समारोहति। ब्रह्मणि 'एकोऽहं बहु स्याम्', यद्वा 'अहम्' इत्येवं गर्भीकृताशेषवाच्यवाचकात्मकः परिस्पन्दो यदा समजनि तदव्यवहितोत्तरमेव ध्वनिरभूत्। यद्वा अपरिपक्वप्राणिकर्मणां फलप्रदानाय लीलापूर्विका यदेच्छा, यद्वा परिस्पन्दः क्षोभो वा सञ्जातः, तदव्यवहितोत्तरमेव नादः प्रादुर्भूतः; ध्वनिपरिस्पन्दयोः साहचर्यात्। न तु पूर्वं रन्तुमिच्छा, ततः स्रष्टुमिच्छा, ततश्च त्रिगुणात्मको बिन्दुरिति। ब्रह्मणि

परिस्पन्दे सति यो नादोऽभूत्, स एव तस्मिन् सिसृक्षात्मिकां मायावृत्तिम्, अथ च त्रिगुणात्मकं बिन्दुमजनयत्। यतो हि या काचिद् इच्छा ज्ञानं वा समुदेति, तत्सर्वं शब्दपूर्वकमेव जायते। तथा चोक्तं वाक्यपदीयस्य ब्रह्मकाण्डे श्रीभर्तृहरिणा—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इति।

किञ्च निखिलप्रपञ्चस्य सृष्टिरपि शब्दपूर्विका जायते। एतच्च परिपाच्यमानेषु तण्डुलादिषु सर्वत्र नित्यमनुभूयते। अतो ब्रह्मणि पूर्वं सिसृक्षात्मिका मायावृत्तिः, ततश्च त्रिगुणात्मकस्य बिन्दोरभिव्यक्तिः तत्सर्वं शब्दपूर्वकमेव समजनीति वक्तुं पार्यते। अहन्तैकसमरसीभूता परविमर्शमयी स्वतन्त्रा शक्तिः यदा स्फुरिता, तदव्यवहितोत्तरमेव ध्वनिः प्रस्फुटति; स्पन्दनस्य ध्वनिपूर्वकत्वात्। सा च स्पन्दमयी परावागात्मिका स्वतन्त्रा शक्तिः परब्रह्मणा सह नित्यमनुसङ्गता; परब्रह्मणि सततं स्फुरणस्य सत्त्वात्। तस्याश्च परब्रह्मणा सह समवायसम्बन्धस्य सत्त्वात् निष्कलं ब्रह्माऽपि प्रकाशविमर्शात्मकसमरसीभूतमहन्तारूपं प्रतिभातीत्यद्वयवादसिद्धिः; सृष्टेर्ध्वनिपूर्वकसतत्त्वात्, ध्वनेश्च स्पन्दसतत्त्वात्, यद्वा स्पन्दनस्य ध्वनिसतत्त्वात्। ध्वनिस्पन्दयोश्च अविनाभूतत्वात् परब्रह्मणः इच्छामयं यत्स्फुरणं जातम्, तद् ध्वनिपूर्वकमेवेत्यनयाऽपि दिशाऽद्वयवादसिद्धिः।

ध्वनितत्त्व(शब्दतत्त्व)-ब्रह्मतत्त्वयोरैक्यादेव वाक्यपदीयस्य ब्रह्मकाण्डे—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ १॥

इत्यक्षरादिगुणविशिष्टं ब्रह्मैव शब्दतत्त्वमिति प्रत्यपादि।

एवं यत्रकुत्राऽपि निगमागमदर्शनादिषु ध्वनेरभिव्यक्तिः प्रोक्ता, सा अनया एव आधुनिकभौतिकशास्त्रसिद्धान्तदिशा समालोचनीया। तद्यथा—

यदा भवति सा संविद् द्विगुणीकृतविग्रहा[1]।
सा प्रसूता कुण्डलिनी शब्दब्रह्ममयी विभुः।
शक्तिस्ततो ध्वनिस्तस्माद् नादस्तस्मान्निबोधिका॥ २॥

अत्र शक्तेरुत्पत्त्यनन्तरं ध्वनेरभिव्यक्तिः प्रोक्ता। वस्तुतस्तु यस्मिन्नेव क्षणे सा संविद् द्विगुणीभूता, तदव्यवहितोत्तरमेव ध्वनेरभिव्यक्तिः। तस्याः संविदो द्विगुणविग्रहवत्त्वं स्पन्दनं विना न सम्भवति। स्पन्दनं ध्वनिविहीनम्, ध्वनिश्च स्पन्दनविहीनो न सम्भवतः। तस्मादत्र संविदो द्विगुणविग्रहवत्त्वं ध्वनिसतत्त्वम् इति शक्तेरभिव्यक्तेः पूर्वमेव ध्वनेरभिव्यक्तिः।

---

१. डा० चमनलालगौतमकृते तन्त्रमहाविज्ञाने दीक्षारहस्य इत्यतोऽयं श्लोकः समुद्धृतः।

सांख्यशास्त्रे तु तामसाद् अहङ्काराद् शब्दतन्मात्रस्याभिव्यक्तिः प्रोक्ता। पुरुषद्वारा प्रकृतौ वीर्याधानाद् महत्तत्त्वस्य, महत्तत्त्वाच्च अहङ्कारस्योत्पत्तिः। क्रियाशक्तिरहङ्कारश्च सात्त्विकराजसतामसभेदेन त्रिविधः समपद्यत[१]। तामसाद् अहङ्कारादेव शब्दतन्मात्रस्याभिव्यक्तिः। वस्तुतस्तु पुरुषद्वारा स्वयोनिभूतायां प्रकृतौ यद् वीर्याधानं जातम्, तद् ध्वनिपूर्वकमेवेति; आधान-क्रियायाः स्पन्दनं विना असम्भवात्। तस्मात् प्रकृतिपुरुषयोः संयोगः ध्वनिसतत्त्वः।

तस्माद्—

अदृष्टाविग्रहाच्छान्ताच्छिवात् परमकारणात्।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम्॥
(स्वच्छन्दतन्त्रम् ८।२७)

इत्येव अद्वयवादात्मकः पक्षः समीचीनः। ब्रह्मणा सह नित्यमनुषक्तो ध्वनिः सर्वेषां तत्त्वानामुत्पत्तावनुस्यूतः; ब्रह्मणो व्यापकत्वात् तन्निष्ठध्वनेरपि तथात्वात्, व्यापकगुणानां व्याप्येषु दर्शनाच्च। यथा जलतत्त्वे पृथ्व्याः व्यापकत्वम्। पृथ्वी च जलापेक्षया व्याप्या। अतएव तद्गुणो रसो गन्धवत्यां पृथ्व्यामपि विद्यते। तथैव च ब्रह्मनिष्ठस्पन्दमयध्वनेः सर्वत्रानुस्यूतत्वविषयेऽपि बोद्धव्यम्। अयं विषय आधुनिकदृष्ट्या अधस्तात् प्रतिपाद्यते।

ब्रह्मनिष्ठपरिस्पन्दस्फुटितो यो नादः स निखिलब्रह्माण्डस्य जनयिता, सर्वविधं प्रत्येकं परमाणुञ्च व्याप्य तिष्ठति। एलवर्ट आइस्टीनादिवैज्ञानिकानां मतानुसारेण परमाणुषु सततं स्पन्दनस्य सत्त्वात् तत्रापि ध्वनिः सञ्जायते। यच्चलति गच्छति वा वा तज्जगद् इत्युच्यते। परमाणवोऽपि परितश्चलन्ति, अतस्तेऽपि जगत्पदवाच्याः। यथा ध्रुवमभितो नक्षत्रमण्डलानि, यथा वा सूर्यममितो ग्रहोपग्रहा भ्राम्यन्ति, तथैव परमाणुपुञ्जनिर्मितानां पृथ्वीजलतेजोवाय्वादीनां प्रत्येकं परमाणूनामभ्यन्तःस्थितं नाभिकम्[२] अभितः ऋणविद्युताविष्टा इलेक्ट्राननामकाः कणा भ्राम्यन्ति। प्रत्येकं परमाणोराभ्यन्तरे यन्नाभिकं तत्त्वं विद्यते तस्मिन् 'स्थितिजा गतिजा' इत्याख्ये द्वे शक्ती विद्यते। स्थितिजशक्त्या इलेक्ट्राननामका ग्रहकणाः परिमितकेन्द्रमभितो भ्राम्यन्तु, न तु परिमितक्षेत्राद् बहिः इत्येवं कम्पनगतेर्नियन्त्रणं क्रियते। स्थितिशक्त्या परमाणूनां परिभ्रमणस्य नियन्त्रणादेव कोऽपि पदार्थश्छिन्नो

१. श्रीमद्भागवतम्, स्कन्धः ३, अध्यायः २६, श्लो १९–२३।

२. प्रोट्रान और न्यूट्रान से निर्मित नाभिक के चारों ओर ग्रहकण परिक्रमा लगाते हैं। ले०—डोनाल्डवार, अनुवादक–श्रीरामचन्द्र तिवारी, केन्द्रीय हिन्दी निदेशालय, शिक्षा मन्त्रालय, भारत सरकार के सहयोग से प्रकाशित–परमाणुशक्ति ( क्यों और कैसे सचित्र विज्ञान )।

भिन्नो वा न जायते। अन्यथा इलेक्ट्राननामकग्रहकणानां परिभ्रमणस्य नियन्त्रणाभावे कस्यचित् पदार्थस्य सत्ता न सम्भाव्यते। गतिजशक्त्या इलेक्ट्रानतत्त्वं स्वकेन्द्रमभितः स्पन्दितं क्रियते[1]। परमाणुष्वियं परिस्पन्दनक्रिया स्वैरञ्चरे ब्रह्मणि रन्तुं यत् स्फुरणं जायते सा तत एव। यथा लेखन्याऽयं निबन्धो लिख्यते, तस्याः प्रत्येकं परमाणवः परिस्पन्दमया विद्यन्ते। लेखन्याः प्रत्येकं परमाणुषु सततं स्पन्दनसत्त्वाद् ध्वनिरपि तत्र सततं भवति। श्रोतुर्वक्तुश्च शरीरस्य सूर्यरश्मीनाञ्च कणाः, वाय्वादीनां प्रत्येकं परमाणवः परिस्पन्दमया विद्यन्ते। लेखन्याः प्रत्येकं कणेषु स्पन्दनस्य सत्त्वाद् ध्वनिरपि सततं तत्र भवति। श्रोतुर्ववतुश्च शरीरस्य सूर्यरश्मीनाञ्च ग्रहकणाः, वाय्वादीनां प्रत्येकं परमाणवः, वयं सर्वे यस्मिन् गृहे निवसामस्तस्य च सर्वे कणाः परिस्पन्दमयाः। किं बहुना, परमाणूनामाभ्यन्तरेऽपि सततं स्पन्दनस्य सत्त्वाद् ध्वनिरपि सततं तत्र भवति। श्रोतुर्वक्तुश्च शरीरस्य सूर्यरश्मीनाञ्च ग्रहकणाः, वाय्वादीनां प्रत्येकं परमाणवः, वयं सर्वे यस्मिन् गृहे निवसामस्तस्य च सर्वे कणाः परिस्पन्दमयाः। किं बहुना, परमाणुनामाभ्यन्तरेऽपि सततं स्पन्दनं जायते। अतः सर्वमिदं जगत् किञ्चाद्वितीयं ब्रह्मापि स्पन्दनमयमेव विद्यते, स्पन्दस्य पारमार्थिकत्वात्।

तथा चोक्तम् उत्पलाचार्यविरचितायां स्पन्दप्रदीपिकायाम्—

न दुःखं न सुखं यत्र न ग्राह्यं ग्राहकं न च।
न चास्ति मूढभावोऽपि तदस्ति परमार्थतः॥

'ब्रह्मनिष्ठं तत्स्पन्दतत्त्वं परमार्थतोऽस्ति, तस्य स्पन्दस्य नित्यत्वाच्च तदनुलग्नो ध्वनिरपि सततं परिस्फुरति।

---

१. परमाणूनामाभ्यन्तरे स्थितं यन्नाभिकं तत् प्रोट्रान न्यूट्रान इति तत्त्वद्वयेन निर्मितम्। नाभिकस्य बाह्यग्रहकणाश्च इलेक्ट्राननाम्ना प्रोच्यन्ते। विजातीयविद्युतोः सान्निध्ये सति तयोः परस्परमाकर्षणं जायते। नाभिकस्य इलेक्ट्राननामका ग्रहकणाः कणविद्युता प्रोट्रानतत्वानि च धनविद्युता आविष्टानि भवन्ति। अतस्तयोः—प्रोट्राननिष्ठधनविद्युतः, इलेक्ट्रानग्रह कणनिष्ठ ऋणविद्युतश्च परस्परमाकर्षणं जायते। धनविद्युत संश्लिष्ट प्रोट्रानतत्त्वानाम् ऋणविद्युत अभिव्याप्तानाम् इलेक्ट्रानग्रहकणानाञ्च एकादश एकादश संख्या भवन्ति। अतो द्वयोः समत्वादेव इलेक्ट्रानग्रहकणा नियतकक्ष एव परितो भ्राम्यन्ति। एतत्सर्वं पूर्वोद्धृतायां परमाणुशक्तिः इति पत्रिकायां पञ्चविंशे षड्विंशे च पृष्ठयोः सम्यक्तया प्रतिपादितम्। तद्यथा—नाभिक का आकर्षण इलेक्ट्रानों को उसी प्रकार कक्ष में रखती है, जिस प्रकार आपकी भुजा बाल्टी को कक्ष में रखती है। इत्यादि पृ० २६। एतत्सर्वं मनसि निधाय मूले प्रत्येकं परमाणु यन्नामिकं तत्त्वम् तस्मिन् स्थितिजा गतिजा च इति द्वे शक्ती विद्येते। इत्येवं प्रकारान्तरेण प्रोक्तम्।

स्थावरनामा न कोऽपि पदार्थः। निरतिशयस्थिरताया न कुत्रापि लाभः। अतः सर्वत्रनिखिलपदार्थजातस्य परमाणुषु स्पन्दनस्य सततं सत्त्वात् तत्र श्रोत्रेन्द्रियातीतो मनसाऽपि ग्रहीतुमक्षमो ध्वनिः सततं परिस्फुटति। सर्वत्र व्याप्तश्च स ध्वनिरधोक्षजत्वात् परेति नाम्नाऽपि व्यपदेष्टुं शक्यते। परमाणुषु स्पन्दनस्य सत्त्वाद् अयं पराख्यः सूक्ष्मो ध्वनिः सर्वत्र नादात्मना, अथ प्रणवात्मना व्याप्तः।

उक्तञ्च स्वच्छन्दतन्त्रस्य एकादशपटले—

नवमस्तु महाशब्दः सर्वेषां व्यापकः स्मृतः।
नदत्यसौ सदा यस्मात् सर्वभूतेष्ववस्थितः॥ ७॥

इति यो नादः प्रतिपादितः, स महाशब्दः सर्वेष्वन्तःसंज्ञ-बहिःसंज्ञेषु स्थावरमनुष्यादियोनिषु सर्वत्र अवस्थितः। अत एव—

नादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम्[1]।

इति प्रतिपादितया नादाख्यया विमर्शसत्तया सर्वेषामस्तित्वं स्वीक्रियते। अयमेव विषयः स्कन्दपुराणे प्रणवकल्पे प्रतिपादितः। तथा चोक्तं तत्र—

विश्वं चराचरं सृष्ट्वा तदन्तः प्रविवेश यः।
तिलेषु तैलवत् सूक्ष्मः प्रणवं प्रणमाम्यहम्॥ ४॥ इति।

यथा तिलेषु तैलम् तथैव नादात्मको ध्वनिः, यः प्रणवनाम्नाप्यभिधीयते स सर्वत्र व्याप्तः। आदिमान्तिमगृहीतवर्णराश्यात्मिकोहन्ता एव नादबिन्दुरूपं दधाति। उक्तञ्च—

अकारान्तः परं सूक्ष्मं चिन्मात्रस्पन्दलक्षणम्।
तस्याप्युपासा विज्ञानभैरवे कथिता यथा॥
अबिन्दुमविसर्गञ्च ...................................।
आत्मस्थाने निराधारा द्वितीया शक्तिरीश्वरी॥
बीजभूता कुण्डलिनी सार्धत्रिवलयात्मिका।
प्राणशक्तिरियं देहे इकाराख्या नदत्यलम्॥
कर्णान्तर्विवरे योगी स्थगितवा लक्षयेत् स्फुटम्।
बिन्दुरूपा भ्रुवोर्मध्ये संसारजननी शिवा।
लक्ष्यते योगिभिर्नित्यं भ्राजमाना स्वतेजसा[2]॥

अकारः परमसूक्ष्मः चिन्मात्रस्पन्दलक्षणः। यश्च ह इति स कुण्डलिनी,

---

१. डॉ० गोपीनाथकविराजसङ्कलिते लुप्तागमसंग्रहे, पृ० २५।
२. डॉ० गोपीनाथकविराजसङ्कलिते लुप्तागमसंग्रहे, पृ० ६६।

प्राणशक्तिः, बिन्दुः—इतीमानि रूपाणि दधते। तस्य संस्कार एव परमात्मसिद्धिः संस्कारस्तदात्मना स्थितिः। श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डे यथा—

अपि प्रयोक्तुरात्मानं शब्दमन्तरमवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥ १३२॥

तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते॥ १३२॥ इति।

शब्दसंस्कारः अपभ्रंशविवेकेन ज्ञानम्। अयं भावः—व्यवस्थितसाधुत्वेन रूपेण शब्दतत्त्वे संस्क्रियमाणे अपभ्रंशरूपप्रतिबन्धकापगमे धर्मविशेष आविर्भवति, ततः शब्दब्रह्म तादात्म्योपगमरूपा ब्रह्मणः प्राप्तिर्भवति। कथं शब्दसंस्कारः ब्रह्मप्राप्त्युपायः ? इत्याह—तस्य शब्दस्य प्रवृत्तितत्त्वज्ञः प्रवृत्तिः षड्भावविकाररूपा तस्यास्तत्त्वं प्रतिभाख्यां यो जानाति स तत् औपनिषदं अमृतं ब्रह्म अश्नुते। तेनैकीभवतीत्यर्थः।

अयं भावः—अत्रैव ग्रन्थे ब्रह्मकाण्डे—

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते॥

इत्यस्यां कारिकायां बुद्ध्यधिष्ठानः प्राणाधिष्ठानश्च द्विविधः शब्दः प्रोक्तः। प्राणबुद्धिशक्तिभ्यामभिव्यक्तः सक्रमः शब्दोऽर्थमवभासयति। कण्ठताल्वादिस्थानेष्वभिघातरूपां प्राणवृत्तिमतिक्रान्ते सति शब्दे अककारादिभेदरूपावभासो न भवति। एवं चिन्तनरूपां ( 'अस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः'—इत्येवंरूपां ) बुद्धिशक्तिमतिक्रान्ते सति भेदावभासाभावाद् अक्रमा एव शब्दसत्ताऽवसीयते। एवं क्रमसंहारबुद्ध्या वाचः संस्कारं ध्वन्युपरागराहित्यं रूपं कृत्वा विशुद्धशब्दब्रह्मात्मना स्थितिरेव शब्दसंस्कारः। अर्थात् समेषां शब्दानां मूलस्वरूपस्य ज्ञानम्, ज्ञात्वा च तदात्मना स्थितिरेव तद्ब्रह्मामृतोपभोगः। अयं भावः—विमर्श एव परावाक्, शब्दब्रह्म इति च व्यपदिश्यते वैयाकरणैः। वैयाकरणमते शब्दब्रह्मणा तादात्म्यमेव जीवस्य मोक्षः, मोक्षोऽपि शब्दात्मनाऽवस्थितिः। 'अहम्' इत्यत्र अकारहकारयोः समरसीभूता पूर्णाहन्ता एव ध्वनितत्त्वम् (शब्दतत्त्वम्), तदात्मना स्थितिर्मोक्षः। तज्ज्ञानमेव शब्दतत्त्वज्ञानम्। अत्रैव पाणिनेः स्वारस्यं समाधेयम्; वर्णसमाम्नायस्यादावन्ते च अकारहकारयोः पाठात्। एतच्चात्र ग्रन्थारम्भे एव प्रतिपादितम्।

## घोषाद्यष्टध्वनीनां प्रतिपादनम्

केषुचित् तन्त्रग्रन्थेषु नादस्य ये नव भेदाः प्रोक्तास्ते सर्वे वर्ण-पद-मन्त्र-कला-भुवनतत्त्वानां स्फाररूपायाः परमार्थसाराहन्तायाः स्वरूपभूताः। ते च नादस्य नव भेदा अधस्ताद् अङ्किताः।

अष्टधा स तु देवेशि व्यक्तिः शब्द प्रभेदतः ।

स्वयमव्यक्तध्वनिरूपोऽपि वक्ष्यमाणैर्भेदैः अष्टधा व्यक्तरूपतां प्राप्तः ।

तद्यथा—

घोषो रावः स्वनः शब्दः स्फोटाख्यो ध्वनिरेव च ।
झङ्कारो ध्वङ्कृतश्चैव अष्टौ शब्दाः प्रकीर्तिताः ॥
( स्व० तन्त्र०, पट० ११, श्लो० ६ )

एते च धर्मशिवाचार्येण स्वपद्धतौ—

एतेषां लक्षणं वच्मो गुरुपरम्परागतम् ।

इत्युपक्रम्य, इत्थं व्याख्याताः—

श्रवणाङ्गुलिसंयोगाद् यः शब्दः सम्प्रवर्तते ।
दीप्तवह्निस्वनाभासः स शब्दो घोष उच्यते ॥

तदन्तेऽनुभवो यस्य ईषन्मन्दविसर्पिणः ।
भिन्नकांस्यनिभो रूक्षः सरावः स्यात्तदन्तगः ॥

ततो वंशध्वनिप्रख्यो निवाते सौम्यवर्षवत् ।
स नादः स्वन इत्युक्तस्तत्परः कथितो ह्यसौ ॥

चतुर्थः स तु वै शब्दः सर्वशब्दभवारणिः ।
आत्मानं रावयन्नादः खे यथा भ्रमरी रवः ॥

वाक्यस्य स्फुटतां धत्ते वर्णभेदावभासकः ।
स्फोट इत्युदितो नादः पञ्चमः शास्तृभिस्ततः ॥

ततोऽतिस्वानधर्मित्वान्नादः श्रोत्रसुखावहः ।
विपञ्च्याः पञ्चमीं तन्त्रीं हत्वा तीव्रप्रयत्नतः ॥

यथा व्यज्यत आकाशे स षष्ठो ध्वनिसंज्ञितः ।
सर्वतन्त्रीसमाघाताद् वीणायामिव साधु यः ॥
मृदुस्तब्धं निनदति झङ्कारः सप्तमस्त्वसौ ॥
घण्टानिनादानुकृतिः कदाचित् व्यज्यतेऽन्यथा ।
तुङ्गमेघध्वनिनिभः सोऽष्टमो ध्वङ्कृतः स्मृतः ॥

एषामष्टानामपि पूरकः—

नवमस्तु महाशब्दः सर्वेषां व्यापकः स्मृतः ।
नदत्यसौ सदा यस्मात् सर्वभूतेष्ववस्थितः ॥ इति ।
( स्व० त०, १२ पट०, ११ श्लो०)

एते सर्वे शब्दाः शब्दयोगमार्गस्य साधनक्रमानुसारेण उत्तरोत्तरं योगिभिः स्वहृद्देशेऽनुभूयन्ते। एतेषां नवनादानां समष्टिः मध्यमा नाम्ना व्यवह्रियते। अयमेव नादो निरोधिकाऽवरणे समस्तवाचकाभेदमयपरामर्शरूपेण स्वासनमलङ्करोति[1]।

वस्तुतस्तु घोषादिभेदेन ये अष्टशब्दाः प्रोक्तास्ते सर्वेऽव्यक्तस्य शब्दस्य कलारूपाः। व्यक्ताश्च शब्दा अकारोकारमकाराः। प्रतिपादितञ्चैतत् स्वच्छन्दतन्त्रस्य चतुर्थपटले—

एवं तेऽनुभवाः प्रोक्ताः प्राणे चरति सुव्रते। इति।

प्रोक्तशब्दविषयाः—

त्रयस्तेऽष्टवलाः प्रोक्ताः उपर्युपरितः क्रमात् ॥ ३७३ ॥

'त्रयस्ते' इत्यनेन अकारोकारमकारा गृह्यन्ते। एते त्रयः प्राणाश्रितस्य हंसस्य मात्राभूताः।

अयं विषयो हंसध्वनिप्रतिपादनावसरेऽग्रेऽस्मिन्नेव परिच्छेदे निरूपयिष्यते।

अनाहतध्वनिस्तु अष्टधा प्रोक्तः। तद्यथा—

अष्टधाऽनाहतः प्रोक्तः शून्यादिप्रविभागतः।
शून्यः स्पर्शस्तथा नादो ध्वनिबिन्दुस्तथैव च ॥
शक्तिबीजाक्षरञ्चेति ह्यष्टधाऽनाहतः स्मृतः[2] ॥

शक्तिश्च बीजञ्च अक्षराणि चेति समाहारद्वन्द्वसमासे शक्तिबीजाक्षरमिति निष्पद्यते। अतएव शून्यादिकं शक्तिबीजाक्षरञ्चैतत् त्रयं संयोज्य अष्टसंख्या जायते।

क्वचित्तु दशधा प्रोक्तम्। तद्यथा—

नदते दशधा सा तु दिव्यानन्दप्रदायिका।
चिनीति प्रथमः शब्दः चिञ्चिनीति द्वितीयकः ॥
चीरवाकी तृतीयस्तु शङ्खशब्दश्चतुर्थकः।
तन्त्रीघोषः पञ्चमश्च षष्ठो वंशरवस्तथा ॥
सप्तमः कांस्यतालस्तु मेघशब्दरवस्तथा।
नवमो दावनिर्घोषो दशमो दुन्दुभिस्वनः ॥

---

१. स्वच्छन्दतन्त्रम्, पट० १०, श्लो० १२२४। अत्र श्रीक्षेमराजकृतोद्द्योतटीकायामस्य नादस्य चर्चा कृता।

२. श्रीगोपीनाथकविराजसम्पादिते लुप्तागमसङ्ग्रहे पृ० १४२, ९४।

नवशब्दान् परित्यज्य दशमो मोक्षदायकः ।
अनेन विधिना येन व्याहरेद् दशधा रवम्[1] ॥

एवञ्च अनाहतस्य ध्वनेः क्वचिद् अष्टधात्वम्, क्वचिच्च दशधात्वमिति भेदः समायाति । वस्तुतस्तु उपर्युक्तानां दशभेदानां घोषादिभेदेन

अष्टधा स तु देवेशि व्यक्तः शब्दप्रभेदतः । ३६१ ।

इत्यत्र स्वच्छन्दतन्त्रस्य एकादशपटले या अष्ट कलाः प्रोक्ताः, एतासु लक्षणानुरूपोऽन्तर्भावः कर्तव्यः । दुन्दुभिस्वनस्य दशमशब्दस्य, 'नवमस्तु महाशब्दः, सर्वेषां व्यापकः स्मृतः' इत्यत्र यो महाशब्दः प्रतिपादितः तेन सह समन्वीयेत । चिनीति, चिञ्चिनीति शब्दद्वयस्य घोषेऽन्तर्भावः ।

तथा च—

| | | |
|---|---|---|
| १. घोषः | = | १ चिनी, २ चिञ्चिनीति |
| २. रावः | = | ३ चीरवाकी |
| ३. स्वनः | = | शंखशब्दः |
| ४. शब्दः | = | ५-तन्त्रीघोषः |
| ५. स्फोटः | = | ६-वंशरवः |
| ६. ध्वनिः | = | ७-कांस्यतालः |
| ७. झङ्कारः | = | ८-मेघशब्दरवः |
| ८. ध्वङ्कृतः | = | ९-दावनिर्घोषः |
| ९. महाशब्दः | = | १०-दुन्दुभिस्वनः, |

इत्थं समन्वये सति न कोऽपि विरोधः प्रतीयते, ब्रह्मनिष्ठस्पन्दजनिर्ध्वनिरेव सुषुम्नामार्गेण नादाभिधः सन् ऊर्ध्वाधः सर्वत्र व्याप्तः । एवं यत्र कुत्रापि निरोधिकावरणे वङ्कनाड्यां[2] नाभिहृदयकण्ठताल्वादिस्थानेषु स्थूलसूक्ष्मरूपेण यद्वा वर्णपदमन्त्रात्मना परसूक्ष्मस्थूलरूपेण[3] शब्दः प्रतिपादितः समुपलभ्यते । तत्सर्वं सृष्टेरादौ गर्भीकृताशेषवाच्यवाचकोभयात्मिकायाः परब्रह्मनिष्ठस्पन्दमय्याः अहन्ताया एव स्वरूपभूतम् । सर्वदेशकालव्यापि तत्स्वरूपं चैतन्यमेव परावागात्मकस्याहन्तारूपस्य मूलध्वनेः स्वारस्यं बोद्धव्यम् । अहमिति स्पन्दितध्वनिरेव ब्रह्मनिष्ठचित् ।

---

१. श्रीगोपीनाथकविराजसम्पादिते लुप्तागमसङ्ग्रहे । पृ० १४१, ९४ ।

२. दक्षिणकर्णपार्श्वे इयं नाडी विद्यते ।

३. वर्णपदमन्त्राणां क्रमशः परसूक्ष्मस्थूलत्वं स्वच्छन्दतन्त्रे पट० ४ श्लोक ९६ अत्रत्या श्रीक्षेमराजकृतोद्द्योतटीकायां द्रष्टव्यम् ।

**परब्रह्माऽपि अहमिति ध्वनितत्त्वमयम्**

केचित्तु शब्दातीतमपि परब्रह्म प्रतिपादयन्ति। १. शब्दब्रह्म यद्वा अक्षरब्रह्म, २. परब्रह्मेति भेदेन द्विविधं ब्रह्म मन्यन्ते। अक्षरब्रह्म भित्वा परब्रह्म साक्षात् क्रियते। तदुक्तम्—

शब्दब्रह्मणि निष्णातः परब्रह्माऽधिगच्छति। इति।

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्॥ २२१॥
(श्रीमद्भा०, स्क० ११, अ० ३)

शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि।
श्रमस्तस्य श्रमफलं ह्यधेनुमिव रक्षतः॥ १८॥
(श्रीमद्भा०, स्क० ११, अ० १२) इति च।

वस्तुतस्तु परब्रह्मणि परिस्पन्दानुस्यूतस्य ध्वनेः सर्वथा आत्यन्तिको नाशो न जायते। यथा शरीरे ब्रह्मविले नादस्य लयः, प्रलये परब्रह्मणि मूलध्वनेरपि लयो बोद्धव्यः। ब्रह्मविले नादस्य लयो यथा स्वच्छन्दतन्त्रस्य एकादशे पटले—

नाड्याधारस्तु नादो वै भित्त्वा सर्वमिदं जगत्।
अधः शक्त्या विनिर्गत्य यावद् ब्रह्माणमूर्ध्वतः॥
नाड्या ब्रह्मविले लीनस्त्वव्यक्तध्वनिरक्षरः॥ १२३५॥

यद्यप्यत्र 'ब्रह्मविले लीनः' इत्युक्तः, तथापि लयोऽस्य सूक्ष्मतररूपेण शक्तिस्फुरतात्मना अवस्थानम्, न तु नाशः। अर्थात् सूक्ष्मतररूपेण शक्तिस्फुरतात्मना अवस्थानमेव लयः। अतएव 'शिवशक्त्या त्वधिष्ठितः' इत्युक्तम्, न तु अत्यन्तं नाशः। अतएव उपर्युद्धृते श्लोके अन्तिमे चरणे 'ध्वनिरक्षरः' इत्यत्र अक्षरः इत्युक्तम्।

'सूक्ष्मस्वरूपेणावस्थानमेव लयः' इत्यत्र विदुषो नागेशस्य सम्मतिं विदाङ्कुर्वन्तु प्रज्ञावन्तः। उक्तञ्च तेन वैयाकरणसिद्धान्तलघुमञ्जूषायां शक्त्याश्रयनिरूपणे 'शक्त्याश्रयनिरूपणाय सृष्ट्यादिप्रक्रियावर्णनम्' इत्यत्र 'लयश्चायमपुनःप्रादुर्भावफलको नात्यन्तिको नाशः, उत्तरसर्गानुपपत्तेः'। इति तेनात्र लीनशब्दस्य सूक्ष्मस्वरूपेण सुषुप्तिवद् अवस्थानमेव ग्रहीतव्यम्, नात्यन्तिको नाशः। अतएव स्वच्छन्दतन्त्रस्य श्रीक्षेमराजाचार्यकृतोद्योताख्यटीकायां दशमपटले उपर्युद्धृतश्लोकस्य 'नाडीसुषुम्णा आधारो यस्य। भित्त्वेत्यत्र करणमथ इत्युदयस्थानादुत्थिता क्रमेणारोहन्ती शक्तिः। ऊर्ध्वतः इत्यूर्ध्वं शक्त्या पूर्वोक्तप्रयोगतः स्पष्टीभूतया, ब्रह्मविलान्तं निर्गत्य तत्रैव तया नाड्या सह लीनः श्लिष्टो भवति।' अत्र

लीनशब्दस्य श्लिष्टोऽर्थः कृतः। एवं प्रलये सूक्ष्मतररूपेण अवस्थानमेव मूलध्वनेर्लयः, न तु आत्यन्तिको नाशः। यथा लोके सूक्ष्मातिसूक्ष्मध्वनयोऽस्माभिः श्रोतुं न पार्यन्ते। अतएव तस्मिन् विद्यमानेऽपि प्रोच्यते—'अत्र ध्वनिर्नास्ति' इति। परन्तु सूक्ष्मेक्षिकया विचार्यमाणे सति तत्रापि ध्वनिर्विद्यते। यथा अस्माकमक्षिपक्ष्माणि निपतन्ति उत्पतन्ति च तत्रापि ध्वनिर्जायते, किन्त्वस्माभिर्न श्रूयते। अनुद्भूतत्वात्। तथैव प्रलये सति सृष्टिकालापेक्षया ब्रह्मणि सूक्ष्मातिसूक्ष्मध्वनेः सत्त्वेऽपि समाध्यवस्थायां योगिभिरपि अगम्यत्वात् प्रोच्यते शब्दातीतं ब्रह्मेति। तथा च स्वच्छन्दतन्त्रस्य अष्टमे पटले—

अदृष्टविग्रहाच्छान्तात् शिवात् परमकारणात्।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमकारणम्॥ २७॥ इति।

अत्र ध्वनिरूपं विनिष्क्रान्तमित्यस्य अदृष्टविग्रहे शान्ते शिवे योऽतिसूक्ष्मो ध्वनिः, सृष्टिकाले स एव उन्मेषरूपेण प्रबुद्धः।

अतएव उत्पलाचार्यविरचितायां स्पन्दप्रदीपिकायाम्—

यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ।
तं शक्तिचक्रविभवप्रभवं शङ्करं स्तुमः॥ १॥

इति श्लोकस्य व्याख्यायाम् उन्मेषशब्दस्य 'अत्यन्तस्फुरणाच्छक्तिचक्रस्य' इत्युक्तम्। अत्र श्लोके शङ्करमित्युक्तिः हर्यादीनामप्युपलक्षणभूता।

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्।
स्फोटरूपं यतः सर्वं जगदेवत् प्रवर्तते॥ १॥
(वैयाकरणभूषणसारः)

वेदान्ते वैष्णवे शैवे सौरे बौद्धेऽन्यतोऽपि च।
एक एव परः स्वात्मा ज्ञाता ज्ञेयं महेश्वरि॥ २॥
(कुलयुक्तिः)

इत्यादिष्वभेदप्रतिपादनात्। लयो नाम 'सृष्टिकालापेक्षया सूक्ष्मतररूपेण अवस्थानम्' इति निश्चप्रचं जातम्। अतः प्रकाशविमर्शयोः समरसीभूता परविमर्शमयीयमहन्तारूपा परा वाग् ब्रह्मणा सह नित्यमनुषक्तत्वात् मुक्तिदशायामपि चिन्मयवाग्विशिष्टमेव परब्रह्माधिगम्यते। अतएव परावाग् अनपायिनी आत्माश्रितेत्युच्यते। यद्वा—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।
शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति॥

इत्यत्र शब्दब्रह्मणीत्यनेन 'व्याकरणशास्त्रे' इति बोद्धव्यम्। व्याकरणञ्च पश्यन्ती-

मध्यमा-वैखरी इति वाक्त्रयस्य परं स्थानं वैयाकरणैः स्वीक्रियते। उक्तञ्च भर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायाः त्रय्या वाचः परं पदम्॥ १४३॥ इति।

व्याकरणेन त्रयी वाक् विज्ञातुं शक्यते इति भावः। व्याकरणेन पश्यन्त्याः परम् अतीतं परावागात्मकं ब्रह्म अधिगच्छति। शब्दब्रह्म अतिक्रम्य परावागात्मकं ब्रह्म अधिगच्छति। परा वाक् तु शब्दब्रह्मणोऽतीता। व्याकरणाच्च बहिर्भूता। अयं विषयः 'शब्दतत्त्वं ( तत्सम्बन्धि ) आधुनिकविज्ञानं च' इत्याख्ये स्वशोध-ग्रन्थे प्रथमपरिच्छेदे प्रतिपादितः। पश्यन्तीभूमिकामतिक्रम्य परं ब्रह्माख्यं परावागात्मकं पदं समुपलभ्यते; शक्ति-शक्तिमतोरभेदात्। तदुक्तम्—

शिवस्याभ्यन्तरे शक्तिः शक्तेराभ्यन्तरः शिवः।
अन्तरं नैव जानीयात् चन्द्रचन्द्रिकयोरिव[1]॥ इति।

गर्भीकृताशेषस्वरव्यञ्जननिखिलविश्वरूपा परमात्मनश्च स्पन्दमयी अहन्तात्मिका वाग्विश्वस्य भरणाद् रमणाद् वमनाच्च भैरवपदेनापि व्यवह्रियते। ब्रह्मनिष्ठस्पन्दानुविद्धत्वाच्च स्पन्दमयीत्यपि प्रोच्यते। स्पन्दशब्दः किञ्चिच्चलनार्थकस्पदिधातोः निष्पद्यते। स्पन्दनात् स्पन्दः। स्पन्दनाच्च निस्तरङ्गस्यास्य तावत् परमात्मनः युगपन्निर्विकल्पा या सर्वत्रोन्मुख्यवृत्तिता। तस्मात्—

शान्तषाड्गुण्यरूपस्य यत् स्फुरन् प्रतिमोदयः।
स चात्मबलशक्तीशश्चिद्रूपः स्पन्दसंज्ञकः[2]॥

चितिरहन्तापरपर्यायः—इति पूर्वमेवोक्तम्। अहन्ता चिन्मयी अस्तीत्यपि समायाति। यथा—बीजरूपस्य पूर्वार्धपरार्धात्मना द्विधा भेदे सति विविधावयव-व्यापकः सर्वोऽपि वृक्षोऽन्तरस्ति। तथाकारहकाररूपेण द्विधा भिन्ने नादब्रह्मणि सर्वोऽपि वर्णात्मको वाच्यात्मकश्च लौकिकवैदिकप्रपञ्चोऽस्ति। अतएव अकार-हकारयोर्मध्य एव सर्ववर्णपाठः-इति पूर्वमुक्तम्। ककारषकारयोर्योगरूपत्वेन अपार्थ-क्यात् क्षकारोऽपि तदन्तर्गतः। ब्रह्मणो अकारहकारसमाहाररूपत्वादेव श्रुतिष्वहं-रूपतैव तस्य प्रदृश्यते। 'ब्रह्म वा इदमग्र आसीत्' 'तदात्मानमेवावेदमहम्'इति बृहदारण्यके, 'तत्राहम् अहम्' इत्यैतरेये इत्याद्युक्तम्। ब्रह्मणोऽहंरूपत्वादेव तदु-पासनापि अहंग्रहादिरूपैवोपदिश्यते। ब्रह्मणोऽहंरूपत्वादेव हि सर्वस्मिन् प्रपञ्चे तदनुगतिर्मृद इव घटशरावादिषु। अतएव अस्मच्छब्दस्य सर्वनामता। तापनीय-श्रुतिरपि एकमेवेदं सर्वम्। तस्माद् अहमिति सर्वमित्यभिधानम्। अतः ईदृशार्थस्याति-

१. उत्पलाचार्यविरचिता स्पन्दप्रदीपिका, पृ० ८४।

२. उपर्युक्तग्रन्थस्य प्रारम्भावसरे अयं श्लोकः उक्तः।

रहस्यत्वाभिप्रायेण तन्त्रराजे—'आदिमान्त्यं तु वेदयेत्' इति सङ्केतेनोक्तम्। आदिमोऽकारः, अन्त्यो हकारः, तत्समाहारोऽहम् इति। परन्तु ते द्वे न वैखरीरूपे, अपि तु परे परामातृकारूपे इति। पश्यन्ती-मध्यमा-वैखरीति कूटत्रयस्य इयं परा पराशक्तिरूपा मातृका समष्टिरूपा।

उक्तञ्च योगिनीहृदयस्य मन्त्रसङ्केतनिरूपणे—

वाचकाक्षरसंयोगात् कथिता विश्वरूपिणी।
तेषां समष्टिरूपेण परां शक्तिं तु मातृकाम्॥

कूटत्रयात्मिकां देवीं समष्टिव्यष्टिरूपिणीम्।
आद्यां शक्तिं भावयन्तो भावार्थमिति मन्यते॥ २५॥

समष्टिव्यष्टिरूपिणीमित्यस्य सामरस्याकारेण समष्टिरूपिणीम्, कूटत्रयात्मना पश्यन्तीमध्यमावैखर्यात्मना व्यष्टिरूपिणीमित्यर्थः। इत्थं ज्ञानमयी परावाक् पश्यन्त्यादिभूमिकामुत्तरोत्तरं क्रमशः प्रकाशयति। लौकिकमलौकिकं सर्वमपि ज्ञानं परावाङ्मूलकम्। तत्र लौकिकं ज्ञानं परिच्छिन्नम्, अलौकिकञ्च अपरिच्छिन्नम्।

आणवादिमलत्रयमपि ज्ञानात्मकमेव। आणवादिमलत्रयपरिच्छिन्नदशायामियमहन्तारूपा परावाक् नानाज्ञानज्ञेयात्मना प्रसरति। मलत्रयपरिच्छिन्नज्ञानेन यद् अनुभूयते, तदपि न ज्ञानाद् व्यतिरिक्तम्।

उक्तञ्च स्पन्दप्रदीपिकायाम्—

द्रष्टानुभविता स्मर्ता ग्राहकं भोक्तृदेवकः।
कर्तोपलब्धा संवेत्ता ज्ञातेति ज्ञानसंज्ञकः॥ इति।

वाक्यपदीयस्य ब्रह्मकाण्डेऽपि—

एकस्य सर्वबीजस्य यस्य चेयमनेकधा।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥ इति।

भोक्ता = पुरुषः। भोगः = विषयोपभोगजन्यसुखदुःखाद्यनुभवः। भोक्तव्याः = विषयाः। तेन ज्ञानमेव ज्ञेयरूपतया प्रथते इत्यर्थः। ज्ञेयरूपतया भासमानि ज्ञानानि मातृकाघटकैरकारादिध्वनिभिरधिष्ठितानि।

तदुक्तं शिवसूत्रवार्त्तिके—

ज्ञानाधिष्ठानं मातृकाः॥ ४॥ इति।

### अकारादिध्वनयो बन्ध-मोक्षप्रदाः

मातृकाघटकैरकारादिवर्णैश्च विश्वोत्पत्तेः सत्त्वाद् अकाराद्यक्षराणि विश्वजननीरूपेण लोकमातृकारूपेण स्मृतानि। मूलस्वरूपस्य ज्ञानाभावात् मातृकाघटका

अकारादिवर्णाः बन्धनहेतुभूताः। परन्तु सम्यक्तया तेषां ज्ञाने सति परासिद्धिर्हस्तगता जायते।

उक्तञ्च स्पन्दप्रदीपिकायाम्—

सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥ ४८ ॥

स्वमार्गस्था स्वतन्त्रा अज्ञाता स्वरूपतो ज्ञानाभावात् बन्धयित्री, स्वरूपतो ज्ञाता सती च भोगमोक्षावहा। प्रत्येकं प्रमाता सुखदुःखादिभावो वस्तुतः वर्णमन्त्रपदकलाभुवनतत्त्वेति सर्वं षडध्वचमत्कृतिरूपे परमेंऽशशक्तिमये आदिहान्तपरामर्शसारे अहन्तारूपे प्राप्तविश्रान्तोदयहेतुत्वात् परभैरवस्वरूपमेव। तथात्वापरिज्ञानाच्च देहादौ ग्राहिताहम्भावो विषयमात्रासु गृहीतभोक्तृताभिमानश्च बद्धः सञ्जायते। अर्थात् लोकमातृकाघटका वर्णाः यथार्थरूपेण ज्ञाता मोक्षदाः, अयथार्थतया ज्ञाताः पतनहेतुभूताः। एकमेव तत्त्वं पतनोत्पतनहेतुभूतम्।

उक्तञ्च कुलयुक्तौ—

प्राणिनां पतनं येन तेनैवोत्पतनं स्मृतम्।
अज्ञस्तु बुद्ध्यते येन ज्ञाता तेनैव मुच्यते ॥ ३ ॥ इति।

आणवमायिककार्मजेति मलत्रयावच्छिन्नं ज्ञानं सविकल्पं निर्विकल्पं वा स्यात् उभे अपि शब्दानुविद्धे एव अनुभूयेते। तत्तज्ज्ञानानि शब्दानुविद्धत्वाद् हर्षशोकाद्यनेकभावानाम् आकृतिं लभमानानि अकाराद्यष्टवर्गाणाम् अधिष्ठातृभूतेषु ब्राह्मीप्रभृतिशक्तिकोटिषु भासन्ते। अकाराद्यष्टवर्गाणां तेषामधिष्ठातृदेवीनाञ्च प्रतिपादनमग्रे करिष्यते। अम्बिकादिशक्तिमण्डलेनापि अकारादिध्वनयः, अथ च तेषामधिष्ठातृशक्तयः प्रभाविताः। अष्टवर्गाणां ब्राह्म्यादिशक्तिभिः, अथ च तन्मूलभूताभिरम्बिकादिशक्तिभिरेव परावागात्मिकायां पूर्णाहन्तायाम् अभेदज्ञानं लुप्यते, ज्ञानञ्च बहिर्मुखं सद् जीवात्मानं विषयद्वारा बध्नाति।

उक्तं च वाक्यपदीयस्य ब्रह्मकाण्डे—

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः, पृथक्त्वेनेव वर्तते ॥ २ ॥

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ इति।

एकस्मिन् परावागात्मके ब्रह्मणि भेदोत्पादकशक्तयो यथाऽधस्ताद् अङ्किताः—

अम्बा, ज्येष्ठा, रौद्री तथा वामा इमाश्चतस्रः शक्तयः अष्टवर्गाद्यधिष्ठातृभूतानां ब्राह्मीप्रभृतिशक्तीनां कारणभूताः। एतदुपोद्बलकं प्रमाणं यथा—

अथ ब्रह्म परं शुद्धमादिवर्णत्वमागतम् ।
अम्बिकाद्यास्ततस्तिस्रो युगपच्छक्तयः पुनः ॥

ज्येष्ठा रौद्री तथा वामा सुप्तनागेन्द्रसन्निभा ।
रौद्री शृङ्गाटकाकारा ऋजुरेखा तथा परा ॥

इत्येताः कारणं ज्ञेयाः, सर्वमाभ्यः प्रवर्तते[1] ॥

आभिः शक्तिभिरेव अहन्ता स्वरव्यञ्जनरूपतां धत्ते । परब्रह्मस्पन्दस्वरूपाया अहन्तायाः स्फाररूपा । अकारादिमातृका कला देवी, रश्मिः—इत्यादि नाम्ना व्यपदिश्यते ।

उक्तश्च शिवसूत्रस्य प्रथमप्रकाशे—

अकारादि क्षपर्यन्ताः कलास्ताः शिवकारणम् ।
मातरः शक्तयो देव्यो रश्मयश्च कलाः स्मृताः ॥

अकारादिध्वनिरूपा इमाः कला वर्णपदवाक्यात्मना लौकिकालौकिकोभयविधशब्दात्मानं भजन्ति । निखिलस्य ज्ञानस्य वर्णपदवाक्यात्मकशब्दानुविद्धत्वादेव 'पशवः कलाधीनाः' इत्युच्यते । अकारादिध्वनिसमूहात्मकशब्दानुविद्धमलत्रयावच्छिन्नज्ञानस्य प्रभावेण पशूनां वैभवं यद्वा स्वातन्त्र्यरूपमैश्वर्यं विलुप्यते । अकारादिकलाभिर्विलुप्तविभवत्वादेव जीवात्मानः पशुसञ्ज्ञया अभिधीयन्ते ।

शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम् ।
कलाविलुप्तविभवो गतः सन् स पशुः स्मृतः ॥ ४५ ॥
परामृतरसापायः तस्य यः प्रत्ययोद्भवः ।
तेनास्वतन्त्रतामेति स च तन्मात्रगोचरः ॥ ४६ ॥

स्वरूपावरणे चास्य शक्तयः सततोद्यताः ।
यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः[2] ॥ ४७ ॥

शब्दानां राशिः शब्दराशिः वर्णसमूहमातृका अकारादिक्षकारान्तशब्दजननी । वर्णात्मकत्वाच्छक्तीनां तत्समुत्थस्य कादिवर्गात्मकस्य ब्राह्म्यादिशक्तिचक्रस्य कलाभिः ककाराद्यक्षरैः विलुप्तविभवो हतमहाव्याप्तिः स्वभावात् प्रच्यावितः । अत एवास्य भोग्यतां गतः सन् पशुरुच्यते; अज्ञत्वात् । तस्य च पशोर्यः प्रत्ययोद्भवः =श्रोत्रादिद्वारेण विषयदर्शनेन स्मरणादिज्ञानोत्पत्तिः, स एव परामृतरसात् स्वरूपोदयात् प्रच्युतिः; यतस्तेन स पुमान् अस्वतन्त्रताम् असर्वगतत्वाद्यं प्राप्नोति । अस्य च पुंसः स्वरूपावरणे शक्तयः पूर्वोक्ताः ब्राह्म्याद्याः शब्द-

---

१. डॉ० गोपीनाथकविराजसम्पादिते लुप्तागमसंग्रहे, पृ० ५ ।

२. श्री उत्पलाचार्यविरचितस्पन्दप्रदीपिकायाम् ।

स्वरूपाः पुंरूपग्लपनाय सततमुद्यताः । यतः शब्दानुवेधेन विना न संवेदनं भवतीति उपर्युद्धृतस्य श्लोकत्रयस्य तात्पर्यम् ।

अस्मिन्नेव श्लोकत्रये वाक्यपदीयकारस्य श्रीभर्तृहरेः सम्मतिः प्रतिभाति । तेनोक्तम्—

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ ३ ॥ इति ।

यस्य ब्रह्मणः अध्याहितः आरोपितः कलाभेदः निमेषादिक्रियोपहितवाच्यवाचकरूपनानात्वम् यस्यास्ताम् अध्याहितकलाम् कालशक्तिमुपाश्रिताः जन्मादयः, जायते, अस्ति, विपरिणमते, वर्द्धते, ह्रसति, नश्यति— इत्येवंरूपाः षड् विकारा भावभेदस्य सुखदुःखादिभावभेदस्य योनयः कारणानि भवन्ति । ब्राह्म्याद्याः शक्तयोऽपि शब्दब्रह्मणः कालशक्तेरधीनाः ।

उक्तञ्च वाक्यपदीयस्य तृतीयकाण्डे नवमसमुद्देशे—

उत्पत्तौ च स्थितौ चापि विनाशे चापि तद्वताम् ।
निमित्तं कालमेवाहुर्विभक्तेनात्मना स्थितम् ॥ इति ।

विश्वस्य कालसूत्रान्तर्गतत्वात् सर्वाः कलाः, यद्वा शक्तयोऽपि तदन्तर्गताः । अतएव कारिकायाम् 'अध्याहितकलाम्' इत्युक्तम् ।

अहं कृशः, अहं स्थूल इत्येवं ज्ञानाभासो मायामलम्, 'अहं यज्ञादिकर्मणां कर्ता' इत्येवं ज्ञानाभासश्च कर्ममलं प्रोच्यते । आणवमलञ्च जन्मान्तरीयसूक्ष्मसंस्काररूपेण अन्तःकरणे स्थितं कर्म प्रोच्यते । मलत्रयस्य कलासमूहस्य च अधिष्ठात्री अकारादिध्वनिसमूहरूपा मातृकाशक्तिरिति पूर्वमुक्तम् । आसां मध्ये अभेदज्ञानस्य अधिष्ठात्री शक्तिरघोरनाम्ना तान्त्रिकैरभिधीयते । अघोराख्यया अनया शक्त्या बाह्याभ्यन्तरं सर्वत्र आत्मभावः स्फुरति । प्रोक्तञ्च श्रीपञ्चार्थप्रमाणे—

घोरेति पाशजालाख्यं पापयुक्तं भयानकम् ।
तद् येषां तु न विद्येत ह्यघोराः परिकीर्तिताः ॥
वामेश्वरादयो रुद्रा जालमूलोपरि स्थिताः ।
ते ह्यघोराः समाख्याताः शृणु घोरान् समासतः[1] ॥

लोकमातृकाशक्तीनां मध्ये च भेदज्ञानस्य अधिष्ठात्री घोरनाम्ना व्यवह्रियते । अनया शक्त्या बहिरुन्मुखत्वभावः, अथ च स्वरूपस्यावरणं जायते ।

उक्तञ्च श्रीमालिनीविजये तृतीयाधिकारे—

---

१. स्वच्छन्दतन्त्रस्य प्रथमपटले ४३तमस्य श्लोकस्य श्रीक्षेमराजकृतोद्द्योतटीकाया-मुद्धृता एते श्लोकाः ।

विशेषेष्वेव सँल्लीनान् अधोऽधः पातयन्त्यणून् ।
रुद्राणून् याः समालिङ्ग्य घोरतर्योऽपराः स्मृताः ।। ३१ ।।
मिश्रकर्मफलासक्तिं पूर्ववज्जनयन्ति याः ।
मुक्तिमार्गनिरोधिन्यस्ताः स्युः घोराः परापराः ।। ३२ ।।

इमा घोराः शक्तयः वर्णानुविद्धाः विषयसक्तान् जीवान् अधोऽधः पातयन्ति । आसां घोरशक्तीनाम् अधिष्ठात्री मातृकाशक्तिरित्येवमामनन्ति तन्त्रविदः ।

ध्वनितत्त्वाख्ये परब्रह्मणि भेदाभेदज्ञानं शक्तिद्वारैव जायते—इत्यस्य संकेतः श्रीभर्तृहरिणाऽपि वाक्यपदीयस्य ब्रह्मकाण्डे संक्षेपतः कृतः । तद्यथा—

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ।। २ ।। इति ।

एकमेव यच्छब्दतत्त्वमस्ति, तत् शक्तिव्यपाश्रयाद् ब्राह्म्यादिशक्तीराश्रित्य भिन्नं घटपटादिनानावाच्यवाचकरूपभेदज्ञानविषयतां जातम्—इति कारिकायाः पूर्वार्द्धस्य तात्पर्यम् । अस्या उपर्युद्धृतायाः कारिकायाः उत्तरार्द्धस्य तु शक्तिव्यपाश्रयात् भेदज्ञानजनकशक्तिव्यपाश्रयात् पृथक्त्वेन नानात्वेन इव भासमानपि शक्तिभ्यः अभेदज्ञानजनिकाभ्यःशक्तिभ्यः अपृथक्त्वेऽपि स्वस्वरूपत्वेऽपि भासत । अस्याः कारिकाया अनया रीत्या व्याख्याने आगमशास्त्रवर्णितघोराघोरज्ञानजनिकाः शक्तय एव प्रमाणीभूताः । अस्याः कारिकायाः पूर्वार्द्धभागेन एकस्मिँस्तत्त्वे शक्तिव्यपाश्रयात् भिन्नत्वप्रतिपादनान्तरम्, उत्तरार्द्धभागेन पुनरपि भेदप्रतिपादनात् पुनरुक्तिः स्यादिति ।

पश्यन्त्यादिकूटत्रयात्मना प्रसरन्ती परावाक् सर्वप्रथमं इच्छाज्ञानक्रियारूपं स्वीकरोति । ततः पश्यन्तीमध्यमाक्रमेण कण्ठताल्वादिव्यापारेण अकारादिध्वनिसमूहमातृकारूपेण वैखरीस्वरूपमादधाना श्रोत्रेन्द्रियेण गृह्यते । मातृकाघटकवर्णानां मध्ये अकारादिषोडशस्वरा बीजम्, यद्वा शिवांशभूताः; व्यञ्जनानि च योनिस्वरूपाणि, यद्वा शक्त्यंशात्मकानि ।

प्रतिपादितञ्चैतत् स्वच्छन्दतन्त्रस्य प्रथमपटले—

आदिः षोडशभेदेन साक्षाद् वै भैरवः स्मृतः ।
कवर्गश्च-टवर्गौ च त-प-याः शस्तथैव च ।
संहारेण समोपेतौ योनिर्वै भैरवी स्मृता ।। इति ।

भैरवशक्तिरूपमातृकाघटका एते अकारादिवर्णाः प्रमातृवर्गेषु सविकल्पकनिर्विकल्पकोभयज्ञानक्षणे अन्तःपरामर्शशक्त्या अन्तःकरणस्थचिन्तामयं सूक्ष्मम्, अथ च श्रोत्रेन्द्रियेण गृह्यमाणं स्थूलञ्च शब्दमुल्लिखन्ति । एवम् अवर्गादीनां ब्राह्म्याद्यधिष्ठानात् रागद्वेषसुखदुःखादिमया भावाः स्फुरन्ति । अनाच्छन्नमबाधितमसङ्कुचितम् चिद्घनम् आत्मस्वरूपम् अकारादिकलाधिष्ठितैः तैः सुखदुःखादिमयभावै-

राच्छन्नं जायते। आत्मस्वरूपस्य अकारादिकलाकलितत्वात् परिच्छिन्नाः परतन्त्राश्च देहादिभावा आविर्भवन्ति। एवं महाघोरा मातृकाशक्तयो भेदज्ञानं जनयन्त्यः सर्वत्र व्याप्ताः।

एतदुपोद्बलकं प्रमाणं नित्याषोडशिकार्णवतन्त्रे यथा—

यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम्।
ब्रह्माण्डादिकटाहान्तं वन्दे तां सिद्धिमातृकाम् ॥ ५ ॥ इति।

इत्थं घोरा अघोराश्च मातृकाशक्तयः पशून् विषयैराबध्नन्ति, मोचयन्ति च। इमाश्च मातृकाशक्तयः प्रकाशविमर्शाभ्याम् अहन्तायां यो विमर्शांशस्तन्मूलाः; विमर्शात्मकहकारादेव ध्वनिनिष्पत्तेः सत्त्वात्।

## प्रकाशविमर्शौ परविमर्शात्मकस्य अहमिति ध्वनेरंशभूतौ

सृष्टिमूले परावागात्मिकाया अहन्तायाः कुक्षौ प्रकाशविमर्शयोरुभयोरपि सत्ताऽस्तीति पूर्वं प्रतिपादितम्। पराशक्तिर्यदा स्वातन्त्र्यस्योन्मेषे[1] सति अन्तर्लीनामवस्थितिं विहाय प्रकाशरूपेण विमर्शरूपेण च द्विधा पृथक् पृथक् अभिव्यज्यते, तदा विश्वचक्रमावर्तते। उक्तञ्च योगिनीहृदये—

यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी।
स्फुरत्तामात्मनः पश्येत् तदा चक्रस्य सम्भवः ॥ १ ॥
बीजभावस्थितं विश्वं स्फुटीकर्तुं यदोन्मुखी ॥ ९ ॥
वामा विश्वस्य वमनाद् अङ्कुशाकारतां गता।
इच्छाशक्तिस्तदा सेयं पश्यन्ती वपुषा स्थिता ॥ १० ॥ इति।

यथा भूमावुप्तं बीजं द्विधा भिन्नं सद् शाखापल्लवफलात्मना प्रसरति, तथा पराशक्तिविषयेऽपि बोद्धव्यम्। मूलध्वनिस्वरूपमहमिति विश्वबीजं प्रकाशविमर्शरूपेण द्विधा भिद्यते। तत्र अहमित्यत्र 'अ' इति प्रकाशः, 'ह' इति विमर्शः। 'म्' इति प्रथमविभक्त्येकवचनम्। वस्तुतस्तु विमर्श एव अभिव्यज्यते। विमर्शस्याभिव्यक्तिः प्रकाशे उपचर्यते। अनया दृष्ट्या बिचार्यमाणे सति तत्त्वमात्रं स्वातन्त्र्योल्लासस्य अवस्थाविशेषरूपमिति प्रतीयते। अतः शिवतत्त्वमपि विमर्शवत् तत्त्वरूपेण शक्तिकुक्षिगतो गण्यते। अतः प्रकाशविमर्शावुभावपि परविमर्शस्यांशभूतौ। अहन्तास्वरूपं ध्वनितत्त्वं तु प्रकाशविमर्शयोः समरसीभूतं परविमर्शमयम्। यद्वा प्रकाशविमर्शयोः समरसीभूता परविमर्शमयी अहन्ता। उक्तञ्च—

---

१. एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥ ४१ ॥
—श्री उत्पलाचार्यकृतस्पन्दप्रदीपिकायाम्।

अहमित्येकमद्वैतं　　यत्प्रकाशात्मविभ्रमः ।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ॥

हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ।
अनयोः सामरस्यं यत् परस्मिन्नहमि स्फुटम् ॥

अनयोः प्रकाशविमर्शयोः सामरस्यं यत् परस्मिन् अहमि स्फुटीभवति । अतएव स्वच्छन्दतन्त्रस्य एकादशे पटले —

उपादानं तु तत् प्रोक्तं संक्षुब्धं समवायतः ॥ ४ ॥ इति ।

अस्योद्द्योताख्यटीकायाम्–'वस्तुतो ह्यु न्मानाख्यैव परविमर्शमयी पारमेश्वरी स्वातन्त्र्यशक्तिरहन्तैकरसीभूता सदाशिवानाश्रितपदात्मकसर्वभावाभाससूत्रणाभित्तिकल्पसमनारूपतया स्फुरति' इत्यत्र 'परविमर्शमयी अहन्तैकरसा इत्युक्तम् । अतः प्रकाशविमर्शावुभावपि परविमर्शात्मकाऽहन्ताया अंशरूपेण स्वीक्रियेते ।

इयमेव चित्स्वरूपा परमिर्शमयी परावाक् सर्वत्र व्याप्ता । अत आह भगवान् पतञ्जलिः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' ( ३।१।७ ) इति सूत्रस्थभाष्ये—"सर्वस्य वा चेतनावत्त्वात् । अथवा सर्वं चेतनावत् । एवं ह्याः कंसका सर्पन्ति, शिरीषोऽयं स्वपिति, सुवर्चला आदित्यमनुपर्यति । आस्कन्द कपिलिकेत्युक्ते तृणमास्कन्दति । अयस्कान्तमयः संक्रामति । ऋषिः पठति, श्रृणोत ग्रावाणः" इति ।

चितिः परावाक् च एकमेव तत्त्वमित्यग्रे वक्ष्यमाणोऽयं विषयः । परमाणुषु यत्स्पन्दनम्, यद्वा तेषां परिणमनादिकं चेतनसंयोगं विना न सम्भवतीत्यनयाऽपि रीत्या तस्या व्याप्तित्वं समायाति ।

अयं विषयोऽत्रैव परिच्छेदे पूर्वं युक्त्या प्रतिपादितः ।

## पराख्यादिध्वनयः शान्त्यादिशक्तिसमरसीभूताः, तेषां योनिस्वरूपत्वं यद्वा त्रिकोणात्मकत्वम्

वामकेश्वरतन्त्रमतानुसारेण प्रकाशश्चतुरंशात्मा, तेन सह अविनाभूतो विमर्शोऽपि चतुरंशविभक्तः । प्रकाशांशा अम्बिका-वामा-ज्येष्ठा-रौद्रीत्याख्या, विमर्शांशश्च शान्ता-इच्छा-ज्ञान-क्रिया—इत्याख्यया व्यपदिश्यन्ते[1] । अम्बिकाशान्त्योः सामरस्यावस्था शान्तभावमापन्ना सती पराशक्तिः परावाग् इत्यादिनाम्ना प्रसिद्धा । अहन्तैकसमरसीभूता इयं परावागेव आत्मनः स्फुरणम् ।

उक्तञ्च योगिनीहृदयस्य चक्रसङ्केतनिरूपणे—

---

१. योगिनीहृदयदीपिकाचक्रसङ्केतनिरूपणे श्लो० १२तः २४ पर्यन्तम् एतदीयोंऽशो द्रष्टव्यः ।

आत्मनः स्फुरणं पश्येद् यदा सा परमा कला ।
अम्बिकारूपमापन्ना परावाक् समुदीरिता ॥ ३३६ ॥ इति ।

सा परमाहन्ताख्या शक्तिः कला परशिवस्य परमात्मनः पश्यन्त्यादिक्रमेण वैखरीपर्यन्तं विमर्शनं द्रष्टुमिच्छेत् । तथा परमा शान्तात्मिका अम्बिकारूपमापन्ना परावाक्, परा मातृका वा उच्यते । तदुक्तं सङ्केतपद्धत्याम्—

अनयोः सामरस्यं यत् परस्मिन्नहमि स्फुटम् । इति ।

आत्मनि अहमिति यः परिस्पन्दः, तत्र मयूराण्डरसपुच्छनखाद्यङ्गानीव निखिलं विश्वमस्फुटरूपेण स्थितम् । यदा बीजभावेन स्वस्मिन् स्थितं विश्वम् अहन्तात्मिका परावाक् स्फुटीकर्तुमुन्मुखीभवति, तदा विमर्शांशभूतायाः शान्तायाः इच्छाशक्तिरुदेति, सा च इच्छाशक्तिः वामाशक्त्या सह समरसीभूय पश्यन्तीनाम्ना व्यपदिश्यते । पश्यति सर्वं स्वस्मिन्निति या सा पश्यन्ती । पश्यन्ती वाक् इच्छावामेति शक्तिद्वयस्य समरसीभूता । अतएव इच्छाशक्तिमयी पश्यन्ती वामाशक्त्या सर्वं स्वस्मिन् पश्यति । अतः परं ज्ञानशक्तिरुदेति । सा चं ज्ञानशक्तिः ज्येष्ठाख्यशक्त्या संयुज्य मध्यमावाङ्नाम्नाऽभिधीयते । इयं वाक् विश्वस्थितेः कारणम् । अर्थात् मध्यमावाक् ज्ञानशक्तिज्येष्ठशक्त्योः समरसीभूता । अतः परं क्रियाशवती रौद्रया शक्त्या सह समरसीभूय वैखरीनाम्ना व्यवह्रियते । इदं सर्वं प्रपञ्चात्मकं वैचित्र्यं वैखरीमूलम् । पराविलासरूपा एता वामा ज्येष्ठा रौद्री अम्बिका पराः, इच्छा-ज्ञानक्रिया-शान्ताश्च एतच्छक्तिनवकमयं नवत्रिकोणचक्रम् । एतच्च योगिनीहृदयाख्ये ग्रन्थे चक्रसङ्केतनिरूपणे—

आत्मनः स्फुरणं पश्येद् यदा सा परमा कला ।—इत्यारभ्य
'वैखरी विश्वविग्रहा' इत्यन्तेन सम्यङ् निरूपितम्[1] ।

---

१. यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी ।
स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य सम्भवः ॥
आत्मनः स्फुरणं पश्येद् यदा सा परमा कला ।
अम्बिकारूपमापन्ना परावाक् समुदीरिता ॥
बीजभावस्थितं विश्वं स्फुटीकर्तुं यदोन्मुखी ।
वामा विश्वस्य वमनाद् अङ्कुशाकारता गता ॥
इच्छाशक्तिस्तदा सेयं पश्यन्ती वपुषा स्थिता ।
ज्ञानशक्तिस्तथा ज्येष्ठा मध्यमा वागुदीरिता ॥
ऋजुरेखामयी विश्वस्थितौ प्रथितविग्रहा ।
तत्संहृतिदशायां तु वैन्दवं रूपमाश्रिता ॥
प्रत्यावृत्तिक्रमेणैवं शृङ्गारवपुरुज्ज्वला ।
क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा ॥ इति ।
( योगिनीहृदयस्य चक्रसङ्केतनिरूपणे १।३६–४० ) ।

वस्तुतस्तु अस्मिन् विषये यद् रहस्यम् तद्विषये 'अकारादिध्वनेरभिव्यक्तिप्रक्रिया' इत्यत्र विशदरूपेण व्याख्यास्यते ।

परादिवाचः त्रिकोणादिरूपेण यद्वा महायोन्यात्मनापि कल्पना क्रियते ।

उक्तञ्च लुप्तागमसंग्रहे—

ह्रींकारमेव तव नाम गृणन्ति वेदाः,
मातस्त्रिकोणनिलये त्रिपुरे त्रियोने ॥
( क्रमस्तुतिः )

त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः शिवः स्मृतः ।
अविनाभावसम्बन्धस्तस्माद् बिन्दुत्रिकोणयोः ॥ इति ।
( चन्द्रज्ञानविद्या )

शान्ता अम्बिका च इत्यनयोः समरसीभूता अर्थात् परावाक् त्रिकोणे, यद्वा योनौ बिन्दुरूपा, यद्वा केन्द्ररूपा । इदं बिन्दुस्थानं नित्यं स्पन्दमयम्, पश्यन्ती चास्य त्रिकोणस्य योनेर्वा वामरेखा, वैखरी च दक्षिणरेखा । मध्यमा तु ऋजुर्भूता अग्ररेखा ( बेस ), मध्यस्थो महाबिन्दुरेव विशुद्धः । अस्माद् बहिःप्रदेशे शान्त्यतीत-शान्तिविद्याप्रतिष्ठानिवृत्तिरित्येतासां कलानाम् आभामयः क्रमो विद्यते[1] । आसां समष्टिरेव जगतो रूपम् । अतएव भूपुराद् महाबिन्दुपर्यन्तं विस्तृतं समस्तविश्व-चक्रमेव महाशक्तेर्विकासभूतम्, त्रिकोणस्य मध्यस्थितो बिन्दुस्तु विसर्गमयोऽस्तीत्यत्र नास्ति सन्देहः ।

तद्यथा योगिनीहृदयस्य चक्रसंकेतनिरूपणे—

एतच्चक्रावतारं तु कथयामि तवानघे ।
यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी ॥

स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य सम्भवः ।
शून्याकाराद् विसर्गान्ताद् बिन्दोः प्रस्पन्दसंविदः ॥ १० ॥

प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात् ।
प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम् ॥ ११ ॥ इति ।

अत्र 'विसर्गान्ताद्' इत्युक्तम् । अस्य त्रिकोणस्य प्रत्येकं रेखा पञ्चस्वरमयी । पञ्चदशस्वरात्मकस्य रेखामयस्य अस्य त्रिकोणस्य बिन्दुस्थानं विसर्गेण अकारादि-

---

१. ज्येष्ठरूपचतुष्कोणं वामारूपभ्रमित्रयम् ।
दिशान्तास्त्रिकोणञ्च शान्त्यतीताष्टकोणकम् ॥ १० ॥
( योगिनीहृदयदीपिकाचक्रसङ्केतनिरूपणम् )

कलाभिः परितः समाक्रान्तम्। इदं त्रिकोणं वैन्दवचक्रनाम्नाऽभिहितं सत् नवयोन्यात्मकम्।

दृष्टञ्चैतद् योगिनीहृदयस्य चक्रसङ्केतनिरूपणे—

वैन्दवं चक्रमेतस्य त्रिरूपत्वं पुनर्भवेत्।
धर्माधर्मौ तथात्मानो मातृमेयौ तथा प्रमा ॥ १२ ॥

नवयोन्यात्मकं चक्रं चिदानन्दघनं महत्।
चक्रं नवात्मकमिदं नवधा भिन्नमन्त्रकम् ॥ १३ ॥ इति।

अयं भावः—एतस्य त्रिकोणात्मनश्चक्रस्य पुनस्त्रिरूपत्वं भवेत्। इदमेव त्रिकोणात्मकं चक्रं सृष्टिकरणाय शक्तितत्वं, संहाराय च वह्नित्वं प्रतिपद्य तत्त्रिधाऽभूद् इत्यर्थः। एवं कृते सति नवयोन्यात्मकं चक्रं निष्पद्यते। प्रसङ्गाद् उपरिसमुद्धृते श्लोके 'धर्माधर्मौ' इत्यनेन पुण्यपापे, आत्मपदेन आत्मा अन्तरात्मा परमात्मा ज्ञानात्मकं चेति चत्वार आत्मानः, मातृमेयावित्यनेन माता जीवो मेयो ग्राह्यवर्गः। प्रमापदेन च ज्ञप्तयो गृह्यन्ते। एवमेतन्नवमयं नवयोन्यात्मकं चक्रं चिदानन्दघनम् = चित् चैतन्यकला आनन्दः पूर्णाहन्तापरिणामः ताभ्यां घनं बहिरन्तरं निरन्तरं निविडम्। चिन्मयत्वाच्च देशकालाकारैरनाकलितम्। अतएव महत्। अस्य त्रिकोणस्य स्पन्दनात् अष्टकोणं परिकल्प्यते।

उक्तञ्च योगिनीहृदयस्य चक्रसङ्केतनिरूपणे—

बैन्दवासनसंरूढसंवर्तानलचित्कलम्।
अम्बिकारूपमेवेदमष्टारस्थं स्वरावृतम् ॥ १४ ॥ इति।

शिवशक्त्योः सदाशिवतत्त्वोपरि स्थितत्वाद् बैन्दवासनसंरूढम्। संवर्तानलो लयानलः। चिदेव कला चित्कला। विमर्शात्मिका सर्ववर्णानामन्तिमा हार्धकलारूपा।

तदुक्तं सङ्केतपद्धत्याम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥ इति ॥

बैन्दवासनसंरूढसंवर्तानलचित्कले यस्मिंस्तत् तथैवं त्रिकोणम्। शिवशक्तिसामरस्यरूपमहाबिन्दुमयमध्यचक्रोत्पन्नत्वाद् अम्बिकारूपम्। अष्टारस्थम् = त्रिकोणस्पन्दत्रये सति समुत्पन्नत्वाद् अष्टकोणस्य तदिदं त्रिकोणमष्टारस्थम्। स्वरावृतम् = अकारादिबिन्द्वन्तपञ्चदशस्वरैस्त्रिधा विभक्तैराकलितरेखात्रयम्। 'अः' स्वराक्रान्तमध्यम्। अयमष्टकोणो रौद्र्याः शक्तेः स्वरूपम्, शान्त्यतीतकलया

च सततं प्रज्वल्यमानम् । अस्य प्रत्येकं रेखाः शब्दार्थमय्यः । अतएव ऋग्वेदे योन्यात्मकस्य अस्य चक्रस्य समुद्रेऽन्तःस्थितिरुक्ता । तद्यथा—

'अहं सुवे पितरमस्य मूर्द्धन् मम योनिरप्स्वन्तः समुद्रे ।
ततो वितिष्ठं भुवनान् विश्वो तां द्यावां स्पृशामि ।। इति ।
( ऋ० वे० १०।१२५।७ )

अत्र समुद्रो नाम अकारादिस्वरस्वरूपा वाक्; ऐतरेयोपनिषदि—'वाग्वै समुद्रो न वै वाक् क्षीयते न च समुद्रः क्षीयते' (५।१६) इत्युक्तेः । योन्यात्मकस्य चक्रस्य प्रत्येकं रेखायाः स्वरव्यञ्जनमयत्वात्, स्वरव्यञ्जनानाञ्च समुद्रात्मकत्वाद् उपर्युद्धृतायाम् ऋचि 'मम योनिरप्स्वन्तःसमुद्रे' इत्युक्तम् । पदानां पदवाच्यानाञ्च सामरस्यं चक्रांशेषु प्रत्यक्षतयाऽनुभूयते । सम्पूर्णे चक्रे आदिक्षान्तवर्णमाला, अथ च शिवादिक्षित्यन्तो निखिलस्तत्त्वसमूहः समभिव्यज्यते । कुण्डलिनीजागरणे सति यदा साधकः उत्तरोत्तरम् ऊर्ध्वमारोहति, अथवा इष्टदेवतास्वरूपभूतस्य चक्रस्यान्तःप्रदेशं प्रविशति, तदा अस्मिन्नेव विश्वचक्रे यात्रा प्रचलति । अकुलाद् महाबिन्दुपर्यन्तं विस्तृतस्य मार्गस्यान्तःप्रदेशे विद्यमानानामवान्तरचक्राणां समष्टिरेव विश्वचक्रम् ।

## परादिचतुर्विधध्वनीनां गुहास्वरूपम्

एतानि चक्राणि मूलाधारादीन्यङ्गानि च अकारादिध्वनीनां गुहाभूतानि । तथा श्रुतिरपि वदति—

चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति,
तुरीयं वाचो मनुष्या वदन्ति ।। इति ।

इयं श्रुतिः भगवता पतञ्जलिना महाभाष्यस्य पस्पशाह्निके व्याकरणाध्ययनप्रयोजनप्रतिपादनस्थले समुद्धृता । गुहा = गुहायामित्यर्थः । 'सुपां सुलुक्' इति सप्तम्या लुक् । गुहा = मूलाधारनाभिहृदयादीनि । यद्वा अकुलादिचक्राणि । कुलाद् अन्यद् अकुलम् । सुषुम्नामूलसंस्थितारूढं सहस्रदलकमलम् अकुलमुच्यते । तदुपरि अष्टदलपद्मोर्ध्वस्थितषड्दलं कुलपदम् ।

तदुक्तं स्वच्छन्दसंग्रहे—

अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतम् ।
रक्तं श्वेतञ्च साहस्रदलस्थं शक्तिभिर्युतम् ।।

ऊर्ध्वाधोमुखमीशानि कर्णिकाकेसरान्वितम् ।
शक्तिरूपं महादेवि कुलाकुलमयं शुभम् ॥ इति ।

अकुलाद् आज्ञाचक्रपर्यन्तं सकलत्वम्, आज्ञाचक्रतः ऊर्ध्वं बिन्दोः प्रारम्भ उन्मनापर्यन्तमंशः सकलनिष्कलः, उन्मनातः परं महाबिन्दुः निष्कलः प्रोच्यते ।

उक्तञ्च योगिनीहृदयस्य चक्रसङ्केतनिरूपणे—

आज्ञान्तं सकलं प्रोक्तं ततः सकलनिष्कलम् ।
उन्मन्यन्तं परे स्थाने निष्कलञ्च त्रिधा स्थितम् ॥ इति ।

वाचा यदुच्यते, लिख्यते च तत्सर्वं सकलं ज्ञातव्यम् । पश्यन्तीपर्यन्ताभिः वाग्भिरुच्चार्यमाणतत्तदकारादिकलाभिः सकल एव भवति । लिपिध्यानक्रमेऽपि आप्यायादिकुर्वन्नपि अम्बा ज्येष्ठा रौद्री वामाख्यलिपिकलायोगादपि सकल एव । यस्तु सर्वभेदशून्यत्वात् स्वप्रकाशानाहतपरामर्शमयः स निष्कलः । निष्कलो नोच्चार्यते, न वा लिख्यते ।

उक्तञ्च स्वच्छन्दतन्त्रस्य सप्तमपटले—

नास्योच्चारयिता कश्चित् प्रतिहन्ता च विद्यते ।
स्वयमुच्चरते देवः प्राणिनामुरसि स्थितः ॥ ५९ ॥ इति ।

वस्तुतस्तु महाबिन्दुरेव विश्वस्य हृदयम् । अयमेव महाबिन्दुः विश्वातीत-परमेश्वरस्य यद्वा शिवशक्त्योरासनम् ।

वस्तुतस्तु महाबिन्दुरेव सदाशिवः । तदूर्ध्वं चित्कला, यद्वा चिच्छक्तिः स्वतन्त्रा सती परिक्रीडति । इयं क्रीडा अहन्तास्वरूपायाः पराया वाच एव । शुक्लबिन्दु-रूपप्रकाशस्य रक्तबिन्दुरूपविमर्शस्य अर्थात् अकारहकारयोः कामकलाक्षररूपयोः परस्परं संघट्टात् चित्कलाऽभिव्यज्यते । महाबिन्दोः स्पन्दने सति परसूक्ष्मस्थूलरूप-बिन्दुत्रयं[1] पृथक् सद् रेखारूपेण परिणतिं लब्ध्वा महात्रिकोणस्य स्वरूपं भजति । अस्मादेव महात्रिकोणात् शिवादिक्षित्यन्तं विश्वमाविर्भवतीति केचिन्मन्यन्ते ।

अस्मिन् महात्रिकोणे पीठचतुष्टयं विद्यते । प्रत्येकं पीठे विश्वस्वरूपं

---

१. अकुलाद् महाबिन्दुपर्यन्तभवान्तरचक्राणां समाहार एव विश्वचक्रम् । उक्तञ्च योगिनी-हृदयस्य चक्रसङ्केतनिरूपणे—

अकुले विषुसंज्ञे च शावते वह्नौ तथा पुनः ।
नाभावनाहते शुद्धे लम्बिकाग्रे भ्रुवोऽन्तरे ॥ २२५ ॥
बिन्दौ तदर्धे·········समानोन्मनगोचरे ॥ २६ ॥
महाबिन्दौ ! पुनश्चैवं त्रिधा चक्रं तु भावयेत् ॥

भासते। पीठपदेनात्र प्रकाशविमर्शयोः मात्राणां साम्यभावो बोद्धव्यः। यथा अम्बिकाशान्तयोः सामरस्यं कामरूपपीठः, तथैव अन्यानपि पीठान् जानीयात्।

अयं विषयो योगिनीहृदयस्य चक्रसङ्केतनिरूपणे विशदरूपेण व्याख्यातः। तद्यथा—

भासनाद् विश्वरूपस्य स्वरूपे बाह्यतोऽपि च।
एताश्चतस्रः शक्त्यस्तु का पू जा ओ इति क्रमात्॥ ५१॥ इति।

विश्वं शिवादिक्षित्यन्तं नामरूपात्मकं तद्रूपस्य स्वरूपे बीजभावेन बाह्यतः सृष्ट्यात्मना भासनाद् एताश्चतस्रः शक्त्यस्तु (अम्बिकाद्याः शान्ताद्याश्चतस्रः) क्रमेण परस्परं सामरस्यमापन्नाः 'का पू जा ओ' इति क्रमात् पीठरूपेण परिणताः। का = कामरूपपीठम्, पू = पूर्णगिरिपीठम्, जा = जालन्धरपीठम्, ओ = ओड्याणपीठम्। प्रकाशविमर्शात्मितया पूर्वोक्ताश्चतस्रः शक्तयः कामरूपपूर्णगिरिजालन्धरौड्याणपीठरूपेण अभिव्यक्ता इत्यर्थः। अम्बिकाशान्तयोः समरसीभूतः कामरूपपीठः। इच्छावामयोर्मिश्रभूतः पूर्णगिरिपीठः। ज्ञानशक्तिज्येष्ठशक्त्योः समरसीभूतो जालन्धरः पीठः। क्रिया रौद्रचाख्यशक्त्योश्च मिश्रीभूतः ओड्याणपीठः। एते चत्वारः पीठाः परादिवाचामाधारभूताः क्रमशो बोद्धव्याः। अत एव परादिवाचां गुहास्वरूपाः, विश्वरूपस्यावभासनसमर्थाः। एतदेव तथ्यं यजुर्वेदे गुहानाम्ना, अथ च विश्वस्य नीडं प्रोक्तम्। तद्यथा—

वेनस्तत् पश्यन्निहितं गुहा,
सद्यत्र विश्वं भवत्येकनीडम्।
तस्मिन्निदं स च विचैति सर्वं
स ओतः प्रोतश्च विभुः प्रजासु॥ इति।
(यजुर्वेदः ३२।८)

एतेषाञ्च क्रमशः पीत-धूम्र-श्वेत-रक्तवर्णा अपि तन्त्रशास्त्रेषु व्याख्याताः। एतेषां पीठानां स्थानानि अस्माकं देहे मूलाधारादिषु प्रोक्तानि।

दृष्टञ्चैतत् पूर्वोक्तग्रन्थस्य चक्रसङ्केतनिरूपणे—

पीठाः कन्दे पदे रूपे रूपातीते क्रमात् स्थिताः।
चतुरस्रं तथा बिन्दुः षट्कयुक्तं च वृत्तकम्॥ ४२॥
अर्धचन्द्रं त्रिकोणञ्च रूपाण्येषां क्रमेण तु।
पीतो धूम्रस्तदा श्वेतो रक्तरूपं च कीर्तितम्॥ ४३॥ इति।

अत्र प्रमाणतया समुद्धृतयोः श्लोकयोः पीठानां रूपाणि वर्णाश्च प्रतिपादितानि, न केवलं स्थानम्। कामादिपीठचतुष्टयस्य कन्दं पदं रूपं रूपातीतञ्च

स्थानानि वदन्ति । कन्द नाम सुषुम्नामूलम् । कन्दशब्देन च तत्रस्था पिण्डाख्या कुण्डलिनी लक्ष्यते ।

तदुक्तं स्वच्छन्दसंग्रहे—

नयित्वा तं सुषुम्नाधःकन्दमूले च मारुतम् ।
इच्छाज्ञानक्रियारूपां कुण्डलिनीं परमेश्वरीम् ॥
प्रसुप्तभुजगाकारां मातृकारूपिणीं शिवाम् ॥ इति ।

पदं नाम हंसः । रूपं नाम बिन्दुः । रूपातीतं नाम निरञ्जनं तत्त्वम् । तदुक्तं तत्रैव ग्रन्थे—

पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्तितः ।
रूपं बिन्दुरिति ख्यातं रूपातीतं निरञ्जनम् ॥ इति ।

पिण्डपदरूपरूपातीतशब्देन तत्तत्स्थानान्याधारहृदयभ्रूमध्यब्रह्मरन्ध्राणि लक्ष्यन्ते । तेन क्रमेण तेषु स्थानेषु स्थिताः चत्वारः पीठास्तन्मयाः । एतेषां पीठानां स्वरूपं चतुरस्रादिरूपम् । चतुरस्ररूपः—कामरूपपीठम्, पूर्णगिरिपीठम् षड्बिन्दुयुक्तवृत्तरूपम्, जालन्धरपीठम् अर्द्धचन्द्ररूपम्, त्रिकोणरूपञ्च ओड्याणपीठम् । भूवायुजलतेजसां चतुर्णां क्रमशः चतुरस्रषड्बिन्दुयुक्तत्वार्धचन्द्रत्वत्रिकोणरूपत्वात् कामादिपीठानि पृथिव्यादिरूपाणि, कामादिपीठानामपि चतुरस्रादिरूपत्वात् । आकाशस्य च नीरूपत्वात् तद्रूपं नोक्तम् ।

पीतवर्णस्य कामरूपचतुष्कोणस्यापरं नाम मन इति । कामपीठात्मके मनस्तत्त्वे यदा चित्प्रतिबिम्बं समापतति तदा तन्मनस्तत्त्वं कामपीठो वा स्वयम्भुलिङ्गनाम्ना व्यपदिश्यते । लीनं बाह्येन्द्रियगोचरं चिद्रूपमर्थं गमयतीति लिङ्गम् । मनोबुद्ध्यहंकारचित्तात्मकानि कामरूपादीनि चित्स्फुरत्वाधारत्वात् पीठानि । एतेष्वन्तःकरणचतुष्टयरूपेषु तत्तद्वृत्तिचतुष्टयमयानि स्वयम्भ्वादीनि लिङ्गानि वसन्ति ।

उक्तञ्च योगिनीहृदयस्थ चक्रसङ्केतनिरुपणे—

स्वयम्भुवाणलिङ्गञ्च इतरं च परं पुनः ।
पीठेष्वेतानि लिङ्गानि संस्थितानि वरानने ॥ ४४ ॥ इति ।

वस्तुतस्तु पीतवर्णः कामपीठो महात्रिकोणस्याग्रकोणस्वरूपः । अग्रकोणातिरिक्तं कोणद्वयं तु पूर्णगिरि-जालन्धरपीठनाम्नाऽभिधीयते । पूर्णगिरिपीठाख्ये जालन्धरपीठात्मके च कोणे प्रतिफलितं चैतन्यम् इतरलिङ्गनाम्ना, अथ च वर्णलिङ्गनाम्ना व्यपदिश्यते । इतरलिङ्गं वाणलिङ्गञ्चेति द्वयं क्रमशो बुद्धेः अहङ्कारस्य च पर्यायवाचि । हृदयं भ्रूमध्यञ्च बुद्ध्यहङ्कारयोर्निवासस्थाने । महात्रिकोणस्य मध्ये

यो विन्दुः स श्रीपीठाख्यः। इदं पीठं चित्तस्वरूपम्। अत्र प्रतिफलितं ज्योतिः परलिङ्गनामव्यपदेश्यम्। एतत् सर्वं सुभगोदये प्रपञ्चितम्। तद् यथा—

पुनरेव कामपीठे तदग्रकोणे स्थिते मनोरूपे।
प्रतिफलितं तज्ज्योतिः स्वयम्भुलिङ्गसमीहितं सद्भिः॥

दक्षिणकोणेऽहङ्कृतिरूपे जालन्धरे तु सङ्क्रान्तम्।
परधाम बाणलिङ्गं जातं सङ्क्रान्त्युपाधिवशात्॥

मध्यत्रिकोणकोणे वामे श्रीपूर्णपीठमेतस्मिन्।
बुद्धिमये परतेजः प्रतिफलितं त्वितरलिङ्गतां जातम्॥

चित्तमये श्रीपीठे ज्योतिर्बिन्दौ यदस्य सङ्क्रान्तम्।
प्रतिफलितं परधाम्नः परलिङ्गं तत्प्रकीर्त्यते प्राज्ञैः॥ इति।

उपर्युक्तेषु लिङ्गेषु प्रत्येकं लिङ्गं निर्दिष्टसंस्थावद्भिर्वर्णैः समाक्रान्तम्। परलिङ्गन्तु सर्वैर्वर्णैः संश्लिष्टम्।

उक्तञ्च योगिनीहृदयस्य चक्रसङ्केतनिरूपणे—

हेमबन्धूककुसुमशरच्चन्द्रनिभानि तु।
स्वरावृतं त्रिकूटञ्च महालिङ्गं स्वयम्भुवम्॥ ४५॥

कादितान्ताक्षरोपेतं बाणलिङ्गं त्रिकोणकम्।
कदम्बगोलकाकारं थादिसान्ताक्षरावृतम्॥ ४६॥

सूक्ष्मरूपं समस्तार्णवृत्तं परमलिङ्गकम्।
विन्दुरूपं परानन्दकन्दं नित्यपदोदितम्॥ ४७॥ इति।

पीतवर्णं स्वयम्भुनामकं महालिङ्गम् अकारादिभिः षोडशस्वरैरावृतम्। बन्धूककुसुमनिभं रक्तवर्णं त्रिकोणकं वाणलिङ्गं ककारात् प्रारभ्य तकारपर्यन्तम् ये षोडशवर्णाः तैः समाक्रान्तम्। शरच्चन्द्रनिभं कदम्बपुष्पगोलकाकारम्। इतरलिङ्गञ्च थादिसान्तैः षोडशवर्णैः समावृतम्। परानन्दमयं विन्दुरूपं कन्दात्मकम् परलिङ्गं तु सर्वैः वर्णैः समाक्रान्तम्। परमपदाद् ब्रह्मणः प्रथमस्पन्दरूपेण इदमेव परलिङ्गं समुदेति।

एवं गर्भीकृताशेषवाच्यवाचकमयी परविमर्शात्मिका ब्रह्मणः प्रथमस्पन्दस्वरूपा पूर्णाहन्तात्मिका चिन्मयी परावाक् पश्यन्त्यादिकूटत्रयात्मना, अम्बिकाशान्तादीनां समरसीभूतात्मना, कामादिपीठचतुष्टयात्मना च, स्वयम्भुवादिलिङ्गरूपतया चेति अनेकरूपतया भासमानाऽपि स्वस्वरूपाद् अप्रच्युता एव। परिणामविवर्तोभयोः पक्षयोः सा कूटस्था। अतएव ऋग्वेदे—

वाचा विरूपनित्या॥ ( ऋ० वे० ८।७५।६ ) इति।

अस्यां ऋचि नित्यत्वं प्रतिपादितम्। वाग्देवीयं विरूपा सती नित्या। विगतरूपवती स्वतो विरूपा सत्यपि यस्या विगतानि निर्गतानि प्रादुर्भूतानि रूपाणि यस्या इति व्याख्यानाद् मदुक्तं पुष्यति। एतदेवानुवदति स्पन्दप्रदीपिका—

वस्तुतो भावशून्यस्य त्वग्राह्यस्य निराकृतेः।
कल्पनामात्रमेवैतद् यच्छिवव्यपदेशनम् ॥
नेत्थं विभोर्विवर्तोऽस्ति परिणामोऽस्य न क्वचित्।
अथवा द्वयमप्यस्तु तथाप्यस्य न खण्डना ॥

सिद्धनाथेन अभेदार्थकारिकासु इमे श्लोकाः प्रोक्ताः, स्पन्दप्रदीपिकायाञ्च प्रसङ्गतः समुद्धृताः। संवित्प्रकाशेऽपि प्रोक्तम्—

इति निर्मलबोधैकरूपे देहपरिग्रहः।
विवर्तपरिणामाभ्यां द्वाभ्यामप्युपपद्यते ॥
विवर्तेऽप्यतथारूपः तथाभासि त्वमच्युत।
परिणामे स एव त्वं सुवर्णमिव कुण्डले ॥ इति।

यथा भगवान् श्रीकृष्णो ब्रह्मणा गोषु गोवत्सेषु गोपबालेषु च अपहृतेषु पूर्ववद् गोवत्सादिरूपं दधानः 'वंशीविभूषितकरान् नवनीरदाभात्'—स्वरूपाद् श्रीविग्रहाद् अप्रच्युतः, गोपबालाद्यात्मना वर्तमानोऽपि श्रीकृष्णात्मना स्थितः[1]। एवं चिन्मयी परावागपि विश्वात्मना विवर्तभूता यद्वा परिणतभूताऽपि स्वरूपाद् अप्रच्युता एव। एवं त्रिकोणस्य वामपूर्वदक्षरेखास्तिस्रो विन्दवः—इत्येवं क्रमेण इच्छाज्ञानक्रिया शान्तावामाज्येष्ठारौद्रचम्बिकाः पश्यन्ती मध्यमा वैखरी पराश्चतस्रश्चतस्रो देवताः—इत्येवं तन्त्रेण सङ्कलितम्। यादृशी सृष्टिर्ब्रह्माण्डात्मिका, तादृश्येव च स्वदेहरूपाऽपि; ब्रह्माण्डस्यापि विराट्संज्ञकजीवविशेषशरीरत्वात्। अत एव अस्मदादिशरीरस्य तच्छरीरस्य चैकैव प्रक्रिया। केवलमल्पत्वमहत्त्वमात्रकृत एव भेदः। अत एव अस्मच्छरीरस्यापि चतुर्दशलोकात्मकत्वं केषुचिद् ग्रन्थेषु प्रसिद्धम्। ततश्चैताभिश्चतसृभिः शक्तिभिरेव विश्वस्य सम्पूर्णस्य सृष्टया-

---

१. यावद् वत्सपवत्सकाल्पकवपुर्यावत् करांघ्र्यादिकं,
यावद् यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरम्।
यावच्छीलगुणाभिधाकृतिवयो यावद् विहारादिकं,
सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥
स्वयमात्माऽऽत्मगोवत्सान् प्रतिवार्यात्मवत्सपैः।
क्रीडनात्मविहारैश्च सर्वात्मा प्राविशद् व्रजम् ॥
(श्रीमद्भागवतम्, स्क० १०, अ० १३, श्लो० १९-२०)

दिक्त्रयत्रयविषयत्वेन प्रकटनाद् एता एव बाह्यसृष्टौ स्वरूपसृष्टौ च वर्तन्ते। तत्र बाह्यसृष्टौ कामरूपं पूर्णगिरिः जालन्धरम् ओड्यानमिति पीठानि एतद्देवीरूपाणि लौहित्यनदादितटेषु विद्यमानानि कालिकापुराणादिषु वर्णितानि। अस्मच्छरीरेषु तु मूलाधारादिषु विद्यमानानि—इत्येवं पिण्डब्रह्माण्डयोरैक्यम्। एतत्सर्वं ध्वनिस्वरूपं यथार्थतया ज्ञातुं प्रतिपादितम्; यतो हि अकारादिध्वनिमय्या भाषायाः स्वरूपं यथार्थतया ज्ञातुं ब्रह्माण्डस्य अथ च शरीरान्तःस्थितानां तथ्यानां ज्ञानमावश्यकम्। कश्चिद् वैज्ञानिकः ध्वनेर्यद्वा भाषायाः यथार्थस्वरूपज्ञानाय भाषाविज्ञानस्यासामर्थ्यं प्रतिपादयन् इदमेव पूर्वोक्तं तथ्यमभिव्यक्तवान्[1]।

सर्वेषु ध्वनिषु 'अ' इति ध्वनिरनुस्यूतः। रौद्री शक्तिरस्य शिरः, वामा मुखम्, अम्बिका बाहुः, ज्येष्ठा च नखाग्रजा इत्येवमकारस्य अङ्गानि कल्प्यन्ते। उक्तञ्च—

आदावस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैव नखाग्रजा॥
एत हार्धकलारूपा रूपपञ्चतया स्थिताः।
अवर्णः सर्ववर्णानां न पृथग्भासते बहिः॥
इच्छा शिरःप्रदेशस्था ज्ञानञ्च तदधोगतम्॥
क्रिया पादगता ह्यस्य शान्ता हृन्मध्यगा भवेत्॥
( लुप्तागमसंग्रहे पृ० १४२ )

इत्थमुपर्युक्तदिशा अकारहकारयोर्मुखाद्यङ्गानां कल्पना क्रियते।

## परादिशक्तिद्वारा अहमिति ध्वनितत्त्वे भेदोत्पादनम्

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनैव वर्तते॥ २॥

---

1. "And yet despite such objervation......the linguistic can simply define linguistic forms and their approximate meaning. But he can not do the work of the chemist, physicist, Anthropologist. To define meaning completely and exactely even that of the simplest linguistic form should have to have a complete knowledge of the structure of universe and also of every thing going on in side the body and had of every speaker and every hearer."—
रावर्ट ए, हाल जे० आर०—लिंग्विस्टिक एण्ड योर लेङ्ग्वेज, पृ० सं १३३ इत्यत्र एतदीयोंऽशो द्रष्टव्यः।

एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ।। ४ ।।
( वाक्यपदीयस्य ब्रह्मकाण्डे )

अहंपरामर्शस्य पूर्णत्वात् स्वाभाविकत्वाच्च स पूर्णाहन्ता उच्यते । इयं पूर्णाहन्ता च निर्विकल्पज्ञानस्वरूपा । स्वातन्त्र्यशक्तेरुल्लासाद् इयमहन्ता पश्यन्त्यादिरूपत्रयं धत्ते । पश्यन्त्यादिकं प्रत्येकं स्थूलसूक्ष्मपरभेदेन त्रिविधं भवति । परमतत्त्वस्य निरंशत्वे प्रकाशस्वरूपत्वेऽपि च मुख्याभिस्तिसृभिः शक्तिभिस्तस्य विभागः सञ्जायते । मुख्यास्तिस्रः शक्तयो निम्नाङ्किताः—

(१) परा अथवा अनुत्तरा, (२) परापरा, इयमेव शक्तिरिच्छानाम्ना व्यपदिश्यते, (३) अपरा च, इयं शक्तिरुन्मेषरूपा ज्ञानशक्तिर्निगद्यते[1] ।

आसां तिसृणां समरसीभूतस्वरूपा परमेश्वरस्य पूर्णा शक्तिः । आसां मध्ये अनुत्तरा अथवा चिच्छक्तिरकारः । इच्छाशक्तिः इकारस्वरूपा । उन्मेषशक्तिः अथवा ज्ञानशक्तिः उकारात्मिका । इदं शक्तित्रयमेव 'अ इ उ' नामकं त्रिकोणम् । आद्युक्षोभे सति शक्तीनां षट्संख्याः जायन्ते । 'अ, इ, उ' इति शक्तित्रये संक्षुब्धे सति 'आ ई ऊ' इति शक्तित्रयम् अकारादिभ्यो क्रमशो जायते । अकारः आनन्दस्य, ईकारः ईशानस्य, ऊकारश्च ऊनत्वस्य वाचकः । आनन्दादिशक्तिनिचयस्वरूपाः अकारादयः, संक्षुब्धा अपि स्वस्वरूपाद् अप्रच्युताः कूटस्थाश्च ।

अतएव इमाः शक्तयः परस्परं संघट्टय अन्याः शक्तीः समुत्पादयितुं समर्थाः । इमे षट् स्वराः एव वर्णराशेर्मूलभूताः । एते अकाराद्यूकारान्ताः षट्स्वराश्च मूलस्वरनाम्ना व्यपदेष्टुमर्हाः । क्वचित्तु अकारादि-ऌकारान्ताः पञ्च ह्रस्वस्वराः, अथ च 'ए ओ' इति स्वरद्वयञ्च मूलस्वरतया स्वीकृताः ।

तद्यथा वातुलशुद्धाख्यतन्त्रस्य द्वितीयपटले—

---

१. वन्दे तामहमक्षय्यामकाराक्षररूपिणीम् ।
देवीं कुलकलोल्लोलप्रोल्लसन्तीं परां शिवाम् ।। १० ।।
( नित्याषोडशिकार्णवः, पट० १ )

सत्ता शिवस्तदंशा बामा ज्येष्ठा तथैव रौद्री स्यात् ।
एता एवानुत्तरमिच्छोन्मेषश्च समभवन् ह्रस्वाः ।। १८ ।।

उद्रेकः शक्तिः स्यादिच्छाज्ञानक्रियाश्च शक्त्यंशाः ।
दीर्घास्ता एवासन्नानन्दाश्चेशानोनता चेति ।। १९ ।।
( अमृतानन्दयोगिविरचितः सौभाग्यसुभगोदयः, प्रथमः प्रपञ्चः )

प्रकृतिः सप्तवर्णाश्च विकृतिस्तु नवार्णकः ।
अकारश्च हकारश्च ऊकारश्च ऋकारकः ॥ १२ ॥
ऌकारश्चैव एकार ओकारश्च तथैव च ।
एते सप्त स्वराः प्रोक्ताः प्रकृतिस्तु समीरिताः ॥ १३० ॥ इति ।

एते प्रकृतिभूताः ( मूलभूताः ) स्वराः, देवतात्मकाः सूर्यरश्मिनाम्ना प्रसिद्धाः । आसां मूलस्वरस्वरूपाणां देवतानां परस्परं संघर्ष एव क्रियाशक्तिः ।

आसां शक्तीनां परस्परं संघर्षादेव सृष्टिसमर्थानां द्वादशशक्तीनाँ विकासः सञ्जायते । ह्रस्वदीर्घभेदेन द्विविध ऋकारो ऌकारश्चेति चत्वारः स्वराः नपुंसकाः सृष्टिं कर्तुमसमर्थाः । अन्याश्च शक्तयः उपर्युक्तानां द्वादशशक्तीनां कुक्षिगताः । आभिः शक्तिभिर्विशिष्टः 'अ' इति ध्वनिस्वरूपः परमात्मा पूर्णशक्तिमानुच्यते । अकाराद्यात्मका इमा द्वादश शक्तयो द्वादशादित्यात्मस्वरूपाः प्रक्षीणमलाः शुद्धाः उद्रिक्तचैतन्यस्वरूपाः । आसाम् अकारादिध्वनिस्वरूपाणां शक्तीनां न किमप्यावरणम्, अर्थादिमाः शक्तयो न केनचिदपि प्रतिहन्यन्ते । चतुःषष्टियोगिन्यः आभ्यः अकारादिभ्यः शक्तिभ्य एव समुत्पन्नाः । आसां शक्तीनां समष्टिः मोक्षप्रदा अघोरा शक्तिर्विद्यते । पशूनां ( जीवानां ) बन्धनहेतुभूताश्च घोराः घोरतराः शक्तयोऽपि आभ्य एव समुत्पद्यन्ते । सृष्ट्याद्यवस्थायामासामकारादिध्वनिस्वरूपाणां शक्तीनां रूपाणि परस्परं भिन्नानि भवन्ति । अनाख्यात्मिकायामपि सृष्टौ परस्परं पृथग्रूपाः ।

यस्मिन् क्रमे सृष्टिरूपोपाधिर्नास्ति सा अनाख्या पदवाच्या । अर्थात् निरुपाधिकस्वरूपसृष्टावपि शक्तीनां विभागो विद्यते ।

इत्थम् परमाद्वयप्रथात्मकश्रेयोरूपात् सर्वेषां स्वभित्तावभासकात् परमकारणात् परद्रष्ट्रैकस्वरूपात् परब्रह्मणोऽप्रमेयो विश्वव्यापकश्च अकारादिकलाकलितत्वाभावात् सुशुद्धो महाज्ञानस्वरूपश्च यो ध्वनिर्निष्क्रान्तः स गर्भीकृताशेषवाच्यवाचकात्मको वर्णराशेः प्रत्याहारभूतः 'अहम्' इति पदवाच्यः, अदृष्टविग्रहं यत्परं ब्रह्म तद्रूपप्रसरणस्फुरणवत्, स्पन्दप्रदीपिकायां स्पन्दात्मना[1], विरूपाक्षपञ्चादिकायां स्वतन्त्रात्मना चित्स्वरूपात्मना च[2], संवित्स्तोत्रे च संविदा-

---

१. शान्तषाड्गुण्यरूपस्य यत्स्फुरत्प्रतिमोदयः ।
स चात्मबलशक्तीरश्मिद्रूपः स्पन्दसंज्ञकः ॥
( स्पन्दप्रदीपिका ( टीकायाम् ) )

२. ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति ।
एतेऽहन्तायाः किल पर्यायाः सद्भिरुच्यन्ते ॥
( विरूपाक्षपञ्चाशिका, प० १ )

त्मना[1], 'याऽहमिति सा परावाक्' इत्यादिवाक्येषु परावागात्मना प्रतिपादितम् ।

इत्थं संविदात्मनः परब्रह्मप्रथमस्पन्दभूतस्य ध्वनेर्व्याख्यानम् ऋषिभिश्छन्दोभिर्विविधैः व्याख्यातम् । परब्रह्मस्पन्दस्वरूपो ध्वनिश्चित्स्वरूपश्चेत् तर्हि त्रिकालाबाध्यत्वात् सत्स्वरूपोऽपि । यत्र सच्चित्तत्त्वयोर्व्याप्तिः, तत्राऽऽनन्दोऽपि विद्यते ।

उक्तञ्च लुप्तागमसङ्ग्रहे—

या चित् सत्तैव सा प्रोक्ता सा सत्तैव चिदुच्यते ।
यत्र चित्-सत्तयोर्व्याप्तिः तत्रानन्दो विराजते ॥
यत्रानन्दो भवेद् भावे तत्र चित्सत्तयोः स्थितिः ॥
( लुप्तागमसङ्ग्रहः, पृ० ११५ )

इत्थमियं परावाक् सच्चिदानन्दस्वरूपाऽपीत्यनेन समायाति । प्रमाणमारूढः सन् अहमिति ध्वनिः जीवाख्यां लभते, हंसात्मना च प्रतिश्वासं श्रूयते ।

---

१. संविद्रूपा परा शक्तिरभिन्ना परमेश्वरात् ।
ज्ञानशक्तिः पुनः सैव मन्त्ररूपा प्रदर्श्यते ॥
अहङ्कारः स्मृतो मन्त्रः शिवशक्त्यात्मरूपकः ।
( डा० गोपीनाथकविराजसम्पादिते लुप्तागमसंग्रहे, पृ० ६५ )

## २.

# हंसध्वनिः

**अहमित्येव हंसः**

निखिलब्रह्माण्डस्य चैतन्यप्रदानात् जीवपदवाच्योऽपि स ध्वनिः। चैतन्यप्रदानेन जीवयतीति जीवः। यदा इदन्ताया उल्लासः सञ्जातः, तदा स एव जीवनप्रदो ध्वनिः प्राणेन गुहाम् अन्तःकरणम् प्रविष्टः सन् हंस उच्यते।

तथा चात्र श्रुतिः—

स एषोऽसुः स एव प्राणः, स एष भूतिश्च स एव मृत्युश्चैवामृतञ्च।
एष ब्रह्मैष इन्द्र एष प्रजापतिः॥ (ऐ० उ०)। इति।

श्रीमद्भागवतस्य एकादशस्कन्धेऽपि—

स एष जीवो विवरप्रसूतिः, प्राणेन घोषेण गुहां प्रविष्टः।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः॥ इति।
(अ० १२, श्लो० १७)।

स ब्रह्मनिष्ठस्पन्दमयश्चिद्रूपः प्रत्याहृतसमग्रवर्णराशिः कुक्षीकृतसमग्रविश्वश्च अहन्तात्मा परावागाख्यो ध्वनिः घोषेण हंसध्वन्यात्मना प्राणेन गुहाम् अन्तःकरणं प्रविष्टः सन् एष जीवः=जीवयति, चैतन्यं प्रददातीत्यर्थः। ततश्च मनोमयम्=पश्यन्तीमयम्, सूक्ष्मं रूपम्=मध्यमावागात्मकरूपमुपेत्य मात्रा स्वरा वर्ण इत्येवं स्थविष्ठः अत्यन्तं स्थूलरूपं धृतवानित्यर्थः। यदा परमात्मनः उन्मेषभूतो ध्वनिः प्राणं प्रविष्टवान् तदा प्राणोऽपि ध्वनिमयः सञ्जातः। अतएव उपर्युद्धृते श्लोके 'प्राणेन घोषेण' इत्युक्तम्। ध्वन्यात्मकः प्राण एव हंस इत्युच्यते, प्राणस्य हंसध्वनिविशिष्टत्वात्। किञ्च पूर्वं बहुचर्चितस्य 'अहम्' इत्यत्र विमर्शाख्यो हकार एव प्राणिषु प्राणरूपेण प्रविश्य हंसात्मना नदति। उक्तञ्च—

आत्मस्थाने निराधारा द्वितीया शक्तिरैश्वरी।
बीजभूता कुण्डलिनी सार्धत्रिवलयात्मिका॥
प्राणशक्तिरियं देहे हकाराख्या नदत्यलम्।
कर्णान्तर्विवरे योगी स्थगित्वा लक्षयेत् स्फुटम्॥
बिन्दुरूपा भ्रुवोर्मध्ये संसारजननी शिवा।
लक्ष्यते योगिभिर्नित्यं भ्राजमाना स्वतेजसा[1]॥

अत्र 'प्राणशक्तिरियं देहे हकाराख्या नदत्यलम्' इत्युक्तम्। प्राणशक्तिः

---

१. डा० गोपीनाथकविराजसम्पादिते लुप्तागमसंग्रहे पृ० ६६।

प्राणस्य शक्तिः प्राणशक्तिः, न तु प्राण एव शक्तिर्यस्या स इति; 'इयम्' इति विशेषणस्य स्त्रीलिङ्गकत्वात्। प्राण एव शक्तिर्यस्याः सा इत्यपि न, निखिलविश्वसृष्टिसमर्थायाः हकाराख्यायाः शक्तेरसामर्थ्यापत्तेः। तस्मात् षष्ठीतत्पुरुषोऽयं समासः स्वीकर्तव्यः। अयमेव 'ह' इति ध्वनिः प्राणप्रविष्टः सन् नदति, स्वनदनशक्त्या च प्राणमपि सञ्जीवितं करोति। इदमेव तत्त्वं पशूनां ( प्राणिनां ) जीवनशक्तिः, तदेव बलमन्नपानादिकं चतुर्विधमाहारं पुष्णाति।

अतएव अथर्ववेदे—

स्तनयित्नुस्ते वाक् प्रजापते वृषाशुष्मं क्षिपसि भूम्यां दिवि।
तां पशव उपजीवन्ति सर्वे तेनो शेषमूर्जं पिपर्ति॥ ( १९।१।३ )।

'तां पशव उपजीवन्ति सर्वे' इत्याद्युक्तम्। ताम् = वाचम् हंसाख्यं तत्त्वम्। गर्भीकृताशेषविश्वरूपा बोधस्वरूपा शक्तिः विमर्शात्मिका अपि विद्यते, न केवलं प्रकाशात्मिका। विमर्शस्वभावत्वात् सा परमेश्वराद् अभिन्ना संविद्रूपा शक्तिः नादात्मकवर्णकुण्डलिनीरूपेण प्राणिषु स्फुरति। अतः परमन्तःकरणे वर्णकुण्डलिनीमभिभूय प्राणकुण्डलिनीरूपेण भासते। अतएव उपर्युद्धृते श्लोके 'प्राणशक्तिरियं देहे हकाराख्या नदत्यलम्' इत्युक्तम्।

स्वच्छन्दतन्त्रस्य चतुर्थे पटलेऽपि अयमेवार्थः स्फुटतया प्रतिपादितः। तद्यथा—

मन्त्रा एवं स्थिताः प्राणे हंसोच्चारस्तथोच्यते।
हकारस्तु स्मृतः प्राणः स्वप्रवृत्तो हलाकृतिः॥ २५७॥

'स्वप्रवृत्तः' इत्यस्य स्वयमेव नादामर्शरूपतां निमज्य प्राणात्मकं रूपमाविश्य स्थितः। यतः पारमेशी बोधाख्या शक्तिः विश्वं गर्भीकृत्य परा कुण्डलिका सती विमर्शरूपतया नादात्मवर्णकुण्डलिकात्मना प्राणात्मना भातीत्याम्नायः। अतः प्राण एव हंसः, यद्वा हंस एव प्राणः; शक्तिशक्तिमतोरभेदात्। स च स्वभावतः सततमूर्ध्वमधश्च प्रचलति। प्राणस्योर्ध्वमधश्च सततं सञ्चारात् प्राणो हंसः इति विमर्शात्मनाऽनुभूयते। प्राणात्मके हंसध्वनौ हकारस्त्यागधर्मा, सकारश्च समादानधर्मा ( ग्रहणधर्मा )। शतपथब्राह्मणे वाचो वसिष्ठस्य पत्नीत्वम्, प्राणानां च वसिष्ठत्वं यत् प्रतिपादितम्, तस्यात्रैव मदुक्तौ स्वारस्यम्।

तद्यथा शतपथब्राह्मणे—

सा चाह वागुवाच ( हे प्राणाः ) यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति। ( १४।९।२।१४। ) इत्युक्तम्।

प्राणोऽयं वसिष्ठः हंसात्मिका वाक् च वसिष्ठा। वसिषु तिष्ठतीति वसिष्ठः।

इदं हकाराख्यं ध्वनितत्त्वं प्राणशक्तिः। अत एव तस्य पत्नीत्वेन व्यवहार उपचर्यते। नादरूपिणोऽस्य हंसस्य स्वाभाविकोच्चार एव परिस्फुटवर्णानामुच्चारः, न तु ककारादिवर्णानां ककाराद्यात्मनोच्चारणमुच्चारः। अयं हंसात्मको वर्णोच्चारो भ्रूमध्ये बिन्दुरूपेण योगिभिरनुभूयते। अतएव 'बिन्दुरूपा भ्रुवोर्मध्ये संसारजननी शिवा' इत्यत्र 'भ्रुवोर्मध्ये बिन्दुरूपा' इत्युक्तम्। अर्थात् शिवशक्त्यात्मिका संविद्रूपा अहन्ता प्राणमाश्रित्य हंसात्मना भ्रूमध्यंगता च बिन्दुरूपतया च अनुभूयते। यद्वा 'संविद्रूपा परावागात्मिका अहन्ता प्राणगता हंसः, स च हंसो भ्रूमध्यदेशं गतो विन्दुरुच्यते—इत्येवमपि वक्तुं शक्यते; संविदात्मकहंसस्यैव भ्रूमध्ये बिन्दुरूपतया प्रतीयमानत्वात्। हंसध्वनिरेव प्राणः। अतएव प्राणप्रतिष्ठामन्त्रे 'हंसः सोऽहम्' इति पठ्यते। हंसो न केवलं प्राणशक्तिः, अपि तु जीवस्य अथ च वाङ्मनश्चक्षुः श्रोत्रादीन्द्रियाणामपि शक्तिः। शक्तिशक्तिमतोरभेदाच्च प्राणजीववाङ्मनःश्रोत्रादीन्द्रियाण्यपि हंसात्मकानि। प्राणप्रतिष्ठामन्त्रे यमित्यादयस्तु वाय्वादिबीजभूताः[1]। अहमिति चिदात्मिका परावामेव प्राणवृत्तिमाश्रित्य हंसध्वनिरूपतया प्रतिवासमनुभूयते। अत एव 'हंसः' इत्यस्य विलोमे सति 'सोऽहम्' इति निष्पद्यते।

प्रतिपादितञ्चैतत् फेत्कारिणीतन्त्रस्य प्रथमपटले—

सौम्यमन्त्राः प्रधानाख्याः संयोज्याः क्रूरकर्मणि।
आसीन्मन्त्रस्तु हंसाख्यो वर्णस्तु परमात्मनः॥ ३९॥
सोऽहमिति गतोऽद्वैतमद्वैतं हंसलोपतः।
कण्ठं भित्त्वा विनिर्यातो हंसवर्णविलोमतः॥ ४०॥

अत्र 'हंसवर्णविलोमतः' इत्युक्तम्। तथा च 'हंसः' इत्यस्य 'सः हम्' इति विलोमपाठे 'सस्' इत्यत्र सकारस्य रुत्वे 'स रु हम्' इति स्थिते 'हशि च' इति पाणिनीयसूत्रेण उत्वे गुणे च कृते 'सोहम्' इति निष्पद्यते। किञ्च उपर्युद्धृते श्लोके हंसलोपतः, हंसवर्णविलोमतः—'इत्युभयमप्युक्तम्। हंसस्य लोपे कृते च तत्स्थाने विलोमपाठे 'सोऽहम्' इति कण्ठतो यद्वा प्रतिश्वासमनुभूयते। अयं विषयोऽग्रे अस्मिन्नेव प्रकरणे प्रणवस्वरूपनिरूपणावसरे विशदरूपेण प्रतिपादयिष्यते।

फेत्कारिणीतन्त्रे अहम्, हंसपदयोरित्थं व्याख्यानम्, अथ च प्राणप्रतिष्ठामन्त्रे 'हंसः, सोऽहम्' इति पाठश्च चिन्मयं परावागाभिधं ब्रह्मनिष्ठस्पन्दभूतमहन्तत्त्वमेव घोषात्मिकां प्राणवृत्तिमाश्रित्य हंसध्वनिमयात्मनाऽनुभूयत इति सिद्धान्तं दृढीकुरुतः।

१. यं रं लं वं शं षं सं हंसः सोऽहम्।

पाणिनीयमते हिंसागत्यर्थकहन्धातोः पचाद्यचि प्रत्यये सति सकारस्य च आगमे 'नश्चापदान्तस्य झलि' (८।३।२४) इति पाणिनीयसूत्रेण नकारस्यानुस्वारे प्रातिपदिकत्वात् सौ 'हंसः' इति निष्पद्यते।

उक्तञ्च भट्टोजीदीक्षितकृतवैयाकरणसिद्धान्तकौमुद्यां 'पृषोदरादीनि यथोपदिष्टम्' (६।३।१०९) इति सूत्रस्य व्याख्यायाम्—

भवेद् वर्णागमाद् हंसः सिंहो वर्णविपर्ययात्।
गूढात्मा वर्णविकृते वर्णनाशात् पृषोदरम्॥ इति।

हंस-शब्दस्येयं व्युत्पत्तिः पूर्वोक्तार्थ एव स्वारस्यं भजति। हिंसागतयोश्चिन्मयीं परावागात्मिकाम् अहन्तां विना असम्भवात्। ज्ञानगमनप्राप्तिमोक्षाश्चेति चत्वारो गत्यर्थाः। गत्यर्थान् हिंसार्थं च समाहृत्य हन्धातुः पञ्चार्थकः। ज्ञानगमनप्राप्तिमोक्षाः आणवादिमलानां क्रोधादिशत्रूणाञ्च हिंसा परमेश्वराद् अभिन्नेन संविदात्मकेन 'हंसः', 'सोऽहम्' इति प्रकाशविमर्शात्मध्वनिनैव सम्भवति। अतः परावागाभिधमहंतत्त्वमेव प्राणवृत्तिमाश्रित्य हंसाख्यां लभते। इत्थं हंसपदस्य व्याख्यायां तान्त्रिकवैयाकरणयोरेकत्र स्वारस्यं प्रतीयते।

**हंसध्वनेरुच्चार-स्थानादयश्च**[1]

'प्राणवृत्तिमाश्रितो हंसात्मकोऽयं वर्णोच्चारो भ्रूमध्ये बिन्दुरूपतया योगिभिरनुभूयते' इति पूर्वमुक्तम्। अयं बिन्दुरविभक्तज्ञानात्मकः। निःशेषवाच्यानि अभेदरूपतया भ्रूमध्यस्थ बिन्दावेव विद्यन्ते, पुनश्च भ्रूमध्यस्थोऽयं बिन्दुः सांसारिका ये भेदाः अर्थात् जाग्रत्-स्वप्न-सुषुप्तीत्यवस्थात्रये, निःशेषभेदस्य वाचकानाम् अकारोकारमकाराणामैक्ये कृते सति यद् अविभक्तं ज्योतिर्मयं ज्ञानमुदेति तद्रूपः। योगिनां भ्रूमध्ये यदा वर्णोच्चारस्वरूपभूतो हंसात्मकः प्राणो गच्छति, तदा स निःशेषवाच्यात्मकबिन्दुरूपतयाऽनुभूयते।

उक्तञ्च स्वच्छन्दतन्त्रस्य चतुर्थे पटले—

बिन्दुशिरःसमायोगात् सुस्वरत्वं प्रपद्यते।
नादोऽस्य वदनं प्रोक्तः वदनं शब्दमीरयेत्॥ २५९॥ इति।

अत्र बिन्दुरित्युक्तम्। हंसोच्चारप्रकरणे प्रोक्तोऽयं श्लोकः। अतः प्रसङ्गाद् अत्र बिन्दुशब्दस्य मदुक्तावेव तात्पर्यम्। यदा च प्राणवृत्तिमारूढोऽनाहतध्वनिपरमार्थोऽयं हंसः भ्रूमध्यदेशमुल्लंघ्य शिरःप्रदेशस्थं (ललाटस्थानस्थितम्) अर्द्धचन्द्रं

१. आदिपदेन हंसध्वनेर्मात्रा, तदुच्चारस्थानानि, तत्ससहोगिकरणं च, हंसस्योन्मनात्मनानुभूतिः, परावाग्, उन्मना च इत्युभयमेकमेव तत्त्वम्—इत्यादयो विषया ग्राह्याः।

व्रजति, तदा बिन्दोरपेक्षया अतीव सूक्ष्मं रूपं गृह्णाति। बिन्द्ववस्थायां निःशेषाज्ञेयपदार्थानां भेदस्य प्रशमे सति तेषामभिन्नज्ञेयरूपतया मानं भवति। परन्तु तत्र ज्ञानांशस्य प्राधान्यं न भवति, ज्ञेयमेव अभेदेन प्रधानतया च भासते। किन्तु ललाटदेशस्थमर्द्धचन्द्रं यदा प्राणवृत्त्या हंसध्वनिः समाप्नोति, तदा ज्ञानांशस्याधिक्यात् प्राधान्याच्च ज्ञेयांशस्य न्यूनमेव मानम्। अतः परं यदा वर्णोच्चारात्मा हंसो निरोधिकाख्यां रेखां याति, तदा ज्ञेयभावस्य भानं सर्वथा निवर्तते। हंसश्च परिस्फुटरेखारूपेण ऊर्ध्वोन्मुखः प्रतीयते। इमां निरोधिकाख्यां रेखामुल्लङ्घ्यैव हंसात्मकः प्राणो नादनादान्तभूमिं प्राप्य तदात्मनाऽनुभूयते। परन्तु अयोगिनः एनां निरोधिकाख्यां रेखामतिक्रान्तुमसमर्थाः। नादपथप्रवेशरोधकत्वादेव अस्या रेखाया निरोधिका समाख्या। अयं नादनादान्तभूमिः ईश्वरपदाभिधः अभिमतज्ञेयभावः। अस्यां भूमौ निःशेषवाचकशब्दानामभेदज्ञानं प्रधानतया तदैव स्फुरति, यदा वर्णोच्चारात्मा हंसो निरोधिकामुल्लङ्घ्य नादनादान्तभूमिं प्राप्य तदात्मनाऽनुभूयते। निःशेषवाच्यानामभेदस्वरूपो बिन्दुः, निखिलवाचकानाञ्च अभेदात्मा नादनादान्तश्च। अतएव उपर्युद्धृते श्लोके 'शिरः समायोगात् सुस्वरत्वं प्रपद्यते' इत्युक्तम्। सुस्वरत्वं प्राप्तः सन् हंसोऽनाहतध्वनिपरमार्थरूपः। अतो ललाटमध्ये नाद एव अस्य मुख्यमङ्गम्। अनाहतध्वनिस्वरूपं ललाटे नादान्तात्मनाऽनुभूयमानं हंसं ब्रह्मरन्ध्रतले योगिनः समीरयन्ति। एवं पुरुषः क्षेत्रज्ञः चिन्मयोऽहन्तारूपः प्रकाशविमर्शात्मकः, अथ च शिवशक्त्यात्मकः परावागाख्यो ध्वनिः ब्रह्मादीनां मार्गभूतैः हृत्कण्ठभ्रूमध्यललाटस्थानैः मध्योर्ध्वारोहणक्रियया सर्वजन्तुषु चरन् 'हंसः' उच्यते।

उक्तञ्चैतत्तत्रैव ग्रन्थे—

अनेनैव च योगेन हंसः पुरुष उच्यते।
ब्रह्मविष्णवीशमार्गेण चरन् वै सर्वजन्तुषु॥ २६०॥ इति।

शिव एव यद्वा प्रकाशविमर्शसमरसीभूतः आत्मा एव सर्वजन्तुषु प्राणवृत्ति गतः सन् 'हंसः' उच्यते।

उपर्युद्धृतस्य ग्रन्थस्य सप्तमपटले—

शिवो धर्मेण हंसस्तु सूर्यो हंसः प्रभान्वितः। (७।२९)
आत्मा वै हंस इत्युक्तः प्राणो हंससमन्वितः॥ (७।२९) इति।

अयं हंसः सर्वजन्तुषु प्राणवृत्तिमाश्रितः सन् अयत्नादेव सर्वत्र प्रवर्तते। सर्वेषां नियामकत्वाद् अस्योच्चारयिता न कश्चिद् विद्यते; अनाहतध्वनिपरमार्थत्वात् स्वयमेव प्राणिनां हृद्देशं सञ्चरति। सर्वकर्तृत्वेन प्रमातृरूपत्वाच्च अस्य कोऽपि प्रतिहन्ता न विद्यते। अतएव एतत्पदपरिशीलनाभ्यासेन प्राणवृत्ति गतस्य

हंसस्य उर्ध्वाधः आरोहणक्रियायाश्चिन्तनेन च झटिति परमशिवतामाविशन्ति योगिनः।

नादान्तं त्यक्त्वा यदा हंसध्वनिसमन्वितः प्राणः शक्तिस्थानं ब्रह्मविलं समायाति, तदा स हंसः आनन्दस्पर्शात्मनाऽनुभूयते। ततः परम् ऊर्ध्वप्रवेशयुक्त्या व्यापिनीपदं गतः सन् हंसात्मकः प्राणो व्यापकत्वात्मनाऽनुभूयते। स्तवकेन सहितो यत्र केशानां सम्बन्धः, तत्रैव व्यापिनीपदम्। व्यापिनीपदमुल्लङ्घ्य समनापदं मन्तव्याभावात् मननमात्ररूपं प्राप्य तदात्मनाऽनुभूयते। शिखाभिर्यत्र केशानां सम्बन्धः, तदेव समनापदम्, ततोऽप्यूर्ध्वं शुद्धात्मरूपो मननोल्लंघनस्वभावो हंसः, उन्मनाशक्त्याश्रयेण समनापदमुल्लंघ्य विशुद्धात्मना प्रकाशविमर्शसमरसीभूताऽहन्तास्वरूपब्रह्मात्मनाऽनुभूयते। समनापदपर्यन्तं यदा हंसोच्चारः, तदा सर्वाः क्रियाः क्रमेणैव जायन्ते। तद्यथा भ्रूमध्यस्थं बिन्दुगतो हंसध्वनिसमन्वितः प्राणः ज्ञेयात्मना ततः परं ललाटदेशस्थमर्धचन्द्रं गतः सन् ज्ञानात्मनाऽनुभूयते। एवं समनापर्यन्तं सर्वाः क्रिया क्रमशो जायन्ते। परन्तु उन्मनाशक्त्या यदा परमशिवतत्त्वं व्रजेत्, क्रमस्योल्लङ्घनाद् युगपदेव समग्रविश्वभेदेन प्रकाशते। अयमभेदव्यापार उन्मनाशक्तेर्व्यापारः। अर्थाद् उन्मनाशक्तिरभेदप्रकाशवती। यदा परावाग्रूपम् अहन्तैकसमरसीभूतं परब्रह्म हंसः स्वोच्चारशक्त्या व्रजति, तदा तस्य कुत्रापि सञ्चारो न भवति, सर्वत्र व्यापकत्वात्। सञ्चारश्च तस्यैव भवति, यः सङ्कोचस्वभावो व्यापकश्च। अव्यापक एव स्वाव्याप्यदेशं सञ्चरति। यदा च प्राणात्मको हंसो हृदि स्थितः, तदा अव्यापकः। सृष्टिकर्ता विष्णुनाभिजकमलोत्पन्नेन ब्रह्मणा अधिष्ठितं यावत् स्थानं तावदेव तिष्ठति; हृदयस्य ब्रह्माधिष्ठितत्वात्। अतो योगिनां प्राणो हृदयस्थानाद् भ्रूमध्यदेशं सञ्चरितुं यतेत्। 'बिन्दुश्चैवेश्वरः स्वयम्' इत्युक्त्या भ्रूमध्यदेशं गतः सन् प्राणात्मको हंसः ईश्वराधिष्ठितं यावत् स्थानम्, तावद् व्याप्नोति, तदात्मना च अनुभूयते। एवं क्रमशः उत्तरोत्तरं पदं प्राप्य तत्तदात्मना प्राणाश्रितो हंसध्वनिर्व्याप्नोति[1]।

परमशिवतत्त्वं गतः सन् हंसस्तु सर्वत्र व्याप्नुवन् सर्वात्मनाऽनुभूयते, परमात्मनः सर्वत्र व्यापकत्वात्। एवं चित्स्वरूपमहन्तैकसमरसीभूतं परमात्मानं गतः सन् प्राणात्मको हंसः सर्वत्र व्यापकत्वात् तद्व्याप्यस्थानाभावात् सञ्चारहीनः सञ्जायते। तस्य च अविद्यात्मकसङ्कुचितप्रसरणं निवर्तते। षट्त्रिंशतत्त्वात्मना, अथ च विश्वात्मना च हंसः स्फुरति।

---

१. यत्र यत्र चरेत् प्राणस्तत्तद् रूपमवाप्नुयात्॥ ३८५॥
यत्र यत्रावतिष्ठेत् तां तां गतिमवाप्नुयात्॥ ३८६॥

एतत्सर्वं स्वच्छन्दतन्त्रस्य चतुर्थपटले प्रतिपादितम्[1] ।

एवं सर्वव्यापको हंसध्वनिरेव सर्वजन्तुषु प्राणकुण्डलिनीरूपेण परिस्फुरति । अयं प्राण एव हंसः । प्राणस्य ऊर्ध्वमधः सञ्चाराद् हंसध्वनेः स्वभावतः स्फुरणात् तन्मयत्वात् । प्राणोऽपि हंसपदवाच्यः । हं च तत् सञ्च इति हंसः परस्परसमस्तापन्नशिवशक्तिरूपः । अनाहतध्वनिपरमार्थस्य हंसस्येमं सञ्चारं यद्वा उच्चारं हसकहा एव जानाति । हंसं च तत्कञ्च इति हसकम् । अहन्तैकसमरसीभूतं परावाग्रूपं शिवशक्त्यात्मकं ब्रह्म इति हंसकपदस्यार्थः । ब्रह्मणि तु ककारस्यार्थः 'कं ब्रह्म' इति श्रुतेः यद्वा चिदचिद्विशिष्टं ब्रह्मेति हंसकपदार्थः । हसकं हन्ति जानातीति '"हसकहा' । संविदात्मकं परावाग्रूपोऽहमिति ध्वनिमयं ब्रह्मैव व्यापकस्वभावं परित्यज्य हंसध्वनिमयप्राणरूपं स्वीकृत्य हृद्-भ्रूमध्यादिस्थानेषु सङ्कोचात्मनाऽनुभूयते । सङ्कोचस्वभावं गतः स हंसश्च उन्मनाशक्त्या परमात्मतत्त्वं स्वस्वरूपं प्राप्य व्यापकरूपेणानुभूयते योगिभिः । अतएव तत्र तत्र शाब्दिकग्रन्थेषु 'सर्वे सर्वार्थवाचकाः' इति, योगिदृष्टया तेषां सर्वशब्दानां सर्वार्थानाञ्च सदा आविर्भावात् । हंसश्च परमहंसो भवति । अनाहतध्वनिस्वरूपस्य हंसस्योपर्युक्तव्याख्यानेन परावाग्रूपा प्रकाशविमर्शसमरसीभूताऽहन्ता एव प्राणवृत्तिं गतः सन् हंसध्वनिः प्राणनापरपर्यायो जीवः स्मृतः । ध्वनिसतत्वः प्राणश्च शिवत्वं गतः सन् तदात्मनाऽनुभूयते । अतएव निर्विकल्पकसमाध्यनन्तरं परावृत्तैर्योगिभिरपि स्वानुभूतं शब्दैरेव प्रकाश्यते, तत्र शब्दातिरिक्तस्य सर्वथाननुभवात् । एष हंसोच्चारो हंसयोगनाम्नाऽप्यभिधीयते ।

उपर्युक्तव्याख्यानेन हंसस्य मात्राः, तासाञ्च हृदयादिस्थानैः सह योगो भवति—इत्येवं ज्ञायते । अकारहकारोकारबिन्द्वर्धचन्द्रनिरोधीनादनादान्तशक्तिव्यापिनी समनेति हंसध्वनेर्मात्राः, उन्मना तु अमात्रः । आसां सञ्चारस्थानानि क्रमशो हृदयकण्ठ-भ्रूमध्य-ललाटाग्र-ललाटाग्रान्त-मूर्धान्तानीति तु नादनादान्तानाम् प्राणचाराश्रयभूतषट्त्रिंशद् अङ्गुलरन्ध्रान्तःशक्तिः, त्वक्शेषकेशदेशौ च व्यापिनीसमनयोः, ततश्चोर्ध्वमुन्मनायाः स्थानम् । हंसस्योपर्युक्तानां मात्राणांमध्ये अकारहकारौ द्वावेकतः स्थितौ । यथा मारुताम्बरयोर्विभक्तिर्नास्ति, तथा अनयोरपि बोद्धव्यम् ।

---

१. शक्तितत्त्वे लयं याति विज्ञानेनोर्ध्वतां व्रजेत् ।
व्यापिनीं समनां त्यक्त्वा व्रजेत् उन्मनया शिवम् ॥ २६१ ॥
शिवतत्त्वगतो हंसो न चरेद् व्यापको भवेत् ।
हंसोच्चारः समाख्यातः कारणैश्च समन्वितः ॥ २६२ ॥ इति ।
(स्व० त०, प० ४ ॥ )

उक्तञ्च स्वच्छन्दतन्त्रस्य चतुर्थे पटले—

मात्रा संख्या च योगाश्चाधुना हंसस्य कथ्यते।
अकारश्च हकारश्च द्वावेकतः स्थितौ ॥ ३४९ ॥
विभक्तिर्नानयोरस्ति मारुताम्बरयोरिव।
एकमात्रः, सम्प्रविज्ञेयो हृदयात् सम्प्रवर्तते ॥ ३५० ॥

अकारोऽनुत्तरशक्तिविमर्शात्मा हकारश्च शाम्भवविमर्शनस्वरूपः शिवशक्त्योश्चाभेदाद् एतौ खवायुवद् एकत्र ऐक्येन स्थितौ। प्रतिश्वासं स्वयमुच्चरतोऽज्विहीनस्य हकारस्य शिरोरेखारूपाकारकलानुप्रवेशात्, प्रतिश्वासमनाहतध्वनिपरमार्थस्य हंसस्य मात्राभूतोऽकारयुक्तो हकार एकमात्रः। हृद्देशे च तस्य सम्यक् प्रवृत्तिः, यत्र ब्रह्मा चतुर्विंशतितत्त्वैः सह स्थितः नाभेरूर्ध्वं द्वादशाङ्गुलान्ते कण्ठाधस्तात् षडङ्गुलेऽवधिभूते यो मध्यदेशस्तत्र चतुरंगुलो हृदयदेशः। अत्र हृदयदेशे प्राणभूतो हंसः एकमात्रं हकाररूपं दधत् [1]प्रकृत्यन्तचतुर्विंशतितत्त्वविशिष्टब्रह्मात्मना चरति। अन्तःश्वसनक्षणे प्रतिश्वासं हंसघटको "ह" इति ध्वनिः स्वतः समुच्चरितो भवति। एवमग्रेऽपि समूहनीयम्।

हंसध्वनेर्मात्राभूत उकारस्तु द्विमात्रः। द्विमात्रकस्य ऊकारस्य तु उच्चाररस्थानं कण्ठः। अत्र उच्चारस्थानपदेन सञ्चारस्थानं ग्रहणीयम्, न तु वर्णाभिव्यक्तिजनककण्ठताल्वादिस्थानानि, 'उपूपध्मानीयानामोष्ठौ' इति, स्वच्छन्दतन्त्रे चतुर्थं पटले—'ऊकारस्तु द्विमात्रो वै कण्ठस्थाने समुच्चरेत्' ( श्लो० ३५१ )—इत्यनयोर्विरोधापत्तेः। अत्र ब्रह्माद्यधिष्ठितेषु हृदयादिस्थानेषु हंसध्वनेर्मात्रा संख्या, तदात्मना सञ्चारोऽनुभूतिश्च प्रतिपाद्यविषयीभूताः, न तु वर्णाभिव्यक्तिजनकस्थानानि प्रतिपाद्यानि। अष्टाङ्गुलपरिमाणकः कण्ठः अत्र पुमादिकलान्तेन[2] तत्वषट्केन संयुक्तो विष्णुस्तिष्ठति द्विमात्रोऽकारस्वरूपोऽनाहतध्वनिपरमार्थो हंसः, कण्ठस्थाने षट्तत्त्वविशिष्टविष्णवात्मना सञ्चरति।

अयं द्विमात्रः अकारः प्रतिश्वासं समुच्चरतो हंसध्वनेः चरणभूतः। यदा 'ह' इति ऊकारेण युक्तो भवति, तदा ऊकार एव ऊर्ध्वाधः सञ्चारकत्वाच्चरणरूपः। हंसस्य मात्राभूतो मकारस्तु त्रिमात्रः। यदाहं स स्तालुमध्यं गतः, तदा तस्य ऊकारस्य सञ्चारः। अष्टाङ्गुलपरिमितकण्ठाद् ऊर्ध्वं चतुरङ्गुलपरिमाणकं तालुस्थानम्। अत्र रुद्रो व्यवस्थितः।

---

१. प्रकृतिः, बुद्धिः, अहङ्कारः, मनः, श्रोतम्, त्वक्, चक्षुः, जिह्वा, घ्राणः, पाणिः, पादः, पायुः, उपस्थः, शब्दः, स्पर्शः, रूपम्, रस-गन्धः, आकाशः, वायुः, अग्निः, जलम्, पृथ्वी।

२. कला, विद्या, राजः, कालः, नियतिः, पुरुषः।

अयं भावः—प्रतिश्वासं हंसः कथमुच्चार्यते—इत्येवं स्वारस्यमस्य व्याख्यानस्य। श्वासनिःसरणवेलायाम् ऊकारेण सह 'ह' इति ध्वनिरुच्चरितो भवति। अन्तःश्वासस्य बहिर्निःसरणाख्य उच्छ्वासश्च ऊ-स्वरेण जायते। ऊ-स्वरेण सह हृदयात् कण्ठस्थानं गत्वा तालुस्थानं यदा श्वासो लभते, तदा तालुस्थानस्य नासिकामूलस्य समीपे स्थितत्वात् बिन्द्वात्मकानुस्वाररूपविशिष्टः 'ह' इति समुच्चरितो भवति। यदा च श्वासोऽन्तः प्रविशति तदा 'स' इति स्वभावतः उच्चार्यते। एवम् 'अ ऊ म्' इति वर्णत्रयेण युक्तः सन् हंसः प्रतिश्वासं स्वतः समुच्चार्यते।

उक्तञ्चैतत् तत्रैव—

अकारेण यदा युक्तः, ऊकारचरणेन तु।
मकारमात्रया युक्तो वर्णोच्चारे भवेत् स्फुटः॥ २५८॥ इति।

अकारेण स्वरविहीनहकारस्याभिव्यक्तिहेतुना शिरोरूपेण ऊकारचरणेन= अकार एवोर्ध्वाधःसञ्चारकत्वाच्चरणरूपः, तेन। तथा बिन्द्वाद्यनुस्वाररूपमकारमात्रया यदा युक्तः, तदा योऽयम् अनाहतध्वनिपरमार्थस्वरूपस्य हंसस्य नित्यप्रवृत्तः उच्चारः, स एव स्फुटो वर्णोच्चारः। प्रणवानुलग्नश्च प्रतिश्वासं हंसः समुच्चरितो भवति; प्रणवेऽपि 'अ ऊ म्' इत्येतेषां वर्णानां विद्यमानत्वात्।

अयं विषयः प्रणवध्वनिनिरूपणावसरे व्याख्यास्यते।

बिन्दुस्तु अर्धमात्रकः तस्य च उच्चारोऽनुस्वारात्मकः। तदुच्चारस्थानं भ्रूमध्यदेशः। भ्रूमध्यदेशस्तु अङ्गुलिद्वयपरिमाणकः। शुद्धविद्येश्वराख्यतत्त्वद्वयेन अयं देशोऽधिष्ठितः। अर्धचन्द्रः पादमात्रः। निरोधी च मात्राया अर्द्धपादात्मिका। अनयोश्चोच्चारो ललाटाग्रतदग्रभागात्मनि भवति। नादनादान्तौ च मात्रायाः षोडशकांशौ। तयोरुच्चारणस्थानं तु मूर्द्धान्तं विद्यते। भ्रूमध्याद् ऊर्ध्वम् एकादशाङ्गुले अर्द्धचन्द्रादिनादान्तस्य श्रीसदाशिवोऽधिष्ठाता। तत्त्वव्यवस्थादृष्टया तु निरोध्यन्तमीश्वरस्य, नादनादान्तब्रह्मबिलपर्यन्तं सदा शिवतत्त्वस्येति बोद्धव्यम्। हंसस्य मात्राभूता शक्तिस्तु द्वात्रिंशदंशा, प्राणचारस्य यत् षट्त्रिंशदङ्गुलम्, तदन्ते चास्याः सञ्चारः। तत्र अनाश्रिताख्यः शिवः स्थितः। व्यापिनी समना च—इत्युभौ मात्रायाश्चतुःषष्टयंशभूतौ। अर्थाद् व्यापिनी द्वात्रिंशदंशा, समना च द्वात्रिंशदात्मा-इत्युभे मिलित्वा चतुःषष्टयंशात्मिके। व्यापिन्याः सञ्चारः त्वक्शेषे, समनायाश्च केशदेशे। त्वक्शेष-केशदेशयोरपि शिव एव व्यवस्थितः। शक्ति-व्यापिनी समनाश्चैताः सर्वाः शिवतत्त्वभूमयः शिवाख्यकारणाधिष्ठिताः। अयं शिवः परमशिवाद् भिन्नः।

एवं प्राणात्मकस्यानाहतध्वनिपरमार्थस्वरूपस्य हंसस्य कारणषट्कास्पद-स्थानषट्कप्रमाणं मात्रासंख्यां तद्योगञ्च प्रमाणपुरःसरं परमहंसप्रतिपादितं विजानीयात्। हंसस्य परमशिवाधिष्ठितं सप्तमं समनातः परम् उन्मनाशक्त्या लब्धुं योग्यं यत्परमतत्त्वम्, तत्तु अमात्रम्, प्रमाणपरिवर्जितञ्च[१]। इदञ्च तत्त्वं प्राणात्मको हंसो हृदयादिग्रन्थिभेदक्रियया समुपलभते। ग्रन्थीनां भेदो नाम हृदयादिस्थानेषु हंसात्मकध्वनेः स्पष्टरूपेण तत्तदात्मनाऽनुभूतिः, सम्यग् विकल्पोच्चारः, स्वयमेवोर्ध्वप्रसारश्च परमतत्त्वं गतश्च हंसः परो हंसः 'अहमेव परो हंसः' इत्येवमनुभूयते।

उक्तञ्चैतत् तत्रैव—

तद्वदेवाभिमानस्तु कर्तव्यो देशिकोत्तमैः।
अहमेव परो हंसः शिवः परमकारणम्॥ ३९९॥

तद्वत्=परमपदवद्, अभिमानः=प्रकाशविमर्शसमरसीभूतः संविदात्मकपरावागाख्यस्य गर्भीकृताशेषवर्णराशिनिखिलविश्वस्य पूर्णाहम्भावस्य विमर्शः कर्तव्यः। पूर्वं परमध्वनिस्वरूपा संविच्चित् स्पन्दाद्यनेकाख्यया प्रतिपादिता पूर्णाहन्ता एव परो हंसः। सा च पूर्णाहन्ता उन्मना पराविद्या इत्याख्ययापि प्रसिद्धा।

तद्यथोक्तं स्वच्छन्दतन्त्रस्य चतुर्थपटले—

तस्मात् सा तु पराविद्या यस्माद् अन्या न विद्यते।
विन्दते ह्यत्र युगपत् सार्वज्ञादिगुणान् परान्॥ ३९५॥

परान्=अभेदरूपान् सर्वज्ञत्वादीन् यतो युगपद् अत्रोन्मनायामत्र योगिवरो लभते, तत इयं परा विद्या, 'विद्लृ लाभे' इत्येवमर्थानुगमात्। एतयैव विश्वक्रोडीकाराद् अस्माद् अन्या परा विद्या न विद्यते। एवं परावाक् पूर्णाहन्तोन्मना पराविद्या इत्येकमेव तत्त्वम्, उन्मनाशक्त्या इव पूर्णाहन्तात्मिकया परयावाचाऽपि अशेषविश्वस्य क्रोडीकाराद्।

तद् यथा स्वच्छन्दभैरवे—

शिवादिविग्रहात् पूर्णात् सर्वकारणकारणात्।
ध्वनिरूपं परं सूक्ष्मं शुद्धं सकलतेजसाम्॥ १॥

वाग्रूपं प्रसृतं तत्त्वमुन्मनाशक्तिकेवलम्॥

परावाग् यद्वा पराशक्तिरेव उन्मनाख्यां लभते।

---

१. एतत् सर्वं स्वच्छन्दतन्त्रस्य चतुर्थपटले ( २४२ श्लो० तः ३५५ श्लो० पर्यन्तम् ) प्रतिपादितम्।

एतच्च तथ्यं योगकुण्डल्युपनिषदि प्रथमाध्यायेऽपि प्रतिपादितम् । तद् यथा—

ज्वलनाघातपवनाघातैरून्निद्रितोऽहिराट् ।
ब्रह्मग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यतः ॥ ८५ ॥
रुद्रग्रन्थिं च भित्त्वैव कमलानि भिनत्ति षट् ।
सहस्रकमले शक्तिः शिवेन सह मोदते ॥ ८६ ॥
सैवावस्था परा ज्ञेया सैव निर्वृत्तिकारणी ॥ इति ।

विसतन्तुनिभा कुण्डलिनीशक्तिः योगक्रियया ज्वलनाघातोद्भूतपवनाघाताद् उन्निद्रिता सती ब्रह्मादिग्रन्थित्रयं भित्त्वा मूलाधारकन्द ( नाभिजननेन्द्रियमध्यदेशः ) नाभिहृदयकण्ठभ्रूमध्येति षट् कमलानि यद्वा मूलाधारनाभिहृदयकण्ठतालुभ्रूमध्येति षट् कमलानि भित्त्वा सहस्रारं गता सा शक्तिः शिवेन सह मोदते । स्वकल्पितं भेदप्रपञ्चं ग्रसित्वा निर्विशेषब्रह्मविद्यारूपमासाद्य स्वयमपि निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना या अवस्था प्रोक्ता, सैवावस्था परा । किञ्च, मनस उद्गता यद्वा मनसः परा उन्मना । परावागपि मनसः परा चिन्मात्रस्वरूपा । समनाशक्तिश्च पश्यन्ती वाक्स्वरूपा । मनसा सह या सा समना मनोविषयीभूता शक्तिः समना प्रोच्यते । पश्यन्ती वागपि मनोविषयीभूता । इत्थमुभयोः परावाक्उन्मनयोः पश्यन्तीसमनयोः स्वरूपैक्यं ज्ञायते ।

अनाहतध्वनिपरमार्थस्य हंसस्य च पूर्णाहन्ता एव स्वरूपम् । हंसरूपे ज्ञाते सति परमपदलाभान्नरः कृतार्थो भवति । अस्य प्रतिश्वासं समुच्चरतो हंसध्वनेः अभ्यासार्थं त्रिविध उच्चारः । त्रिविधोच्चारे अभ्यस्ते सति उन्मनादिपदानां स्वयमेवोपलब्धिर्भवति ।

उक्तञ्च स्वच्छन्दतन्त्रस्य षष्ठे पटले—

अकृतार्थो नरस्तावद् यावद् हंसं न विन्दति ।
प्रणवेन समायुक्तं कृतार्थं इति निर्दिशेत् ॥ ३३ ॥

अतश्च— उच्चरेच्च ततो ज्ञात्वा उच्चरेत्तं वरानने ।
उच्चारस्त्रिविधो देवि हंसस्य समुदाहृतः ॥ ३४ ॥

इदमेव हंसतत्त्वम् अजपागायत्रीनाम्ना विदुषां लोके प्रसिद्धम् ।

तद्यथा योगचूडामण्युपनिषदि—

हकारेण बहिर्याति सकारेण विशेत् पुनः ॥ ३१ ॥
हंस हंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ॥
षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः ॥

एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा ।
अजपा नाम गायत्री योगिनां मोक्षदा सदा ।। ३३ ।। इति ।

हंसस्य त्रिविध उच्चारः स्वच्छन्दतन्त्रस्य चतुर्थपटले षष्ठपटले च प्रतिपादितः । तद्यथा—

अकारेण यदा युक्त उकारचरणेन तु ।
मकारमात्रया युक्तो वर्णोच्चारे भवेत् स्फुटः ।। २५८ ।। ( प० ४ )
हकारोकारसंयुक्तो बिन्द्वन्ते तु तृतीयकः ।
सृष्टिन्यासैव तूच्चारः संहारयोग उच्यते ।। ३५ ।। ( प० ६ )

'ह' इति लुप्तविभक्तिकोऽनाहतस्वरूपदर्शनाय । तेन 'ह' इति यः स्वयमुच्चरद्रूपो हंसः, स अकारेण उकारेण च वर्णाभ्यां युक्तः, तदुपरि च बिन्दोरन्ते समीपे तृतीयकः इत्यनुस्वाररूपो मकारोऽनेन सम्बद्धः । एवमेतदन्तो य उच्चारः, अर्थात् अकारयुक्तः प्रथमः, उकारयुक्तो द्वितीयः, मकारयुक्तश्च तृतीय उच्चारः । अर्थात् 'ह' इति स्वयमुच्चरद्रूपो यो हंसः, तत्र 'ओम्' इति बोध्यम् । तद्यथा— 'हंसः, सोऽहम्, हंसो हंसः' इति स्वतः समुच्चरितो भवति । तत् कथमिति चेत् 'हंसस् हंसस् हंसः' इत्यत्र अज्रहितस्य 'स' इत्यस्य 'ससजुषोरुः' इति पाणिनीयसूत्रेण रुत्वे 'हशि च' इत्युत्वे 'हंस उ हंस उ हंसः' इति स्थिते सकारघटकाकारोकारयोर्गुणे सति 'हंसो हंसो हंस' इति समुच्चार्यते । 'आद्गुणः' इति गुणीभूते ओकारे अकारोकारौ संश्लिष्टौ, हकारोपरि च बिन्दुरूपेण मकारो विद्यते । तेन—

हकारोकारसंयुक्तो बिन्द्वन्ते तु तृतीयकः ।। ३५ ।।
( स्व० त०, प० ६ )

इत्यत्र यदुक्तं तदनुसारमेवेदमुच्चारणमिति । 'अ उ म्' इति वर्णत्रयमेव हंसध्वनिमयं प्राणं सञ्चारयति, तेन सर्वाः क्रियाः निष्पद्यन्ते ।

अत एव ऋग्वेदे 'ध्वनितत्त्वं यद्वा वाक्तत्त्वमेव सर्वक्रियाप्रवर्तकम्— इत्युक्तम् । तद्यथा—

मया स अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उपक्षिपन्ति श्रुधि श्रुतं श्रद्धिवं ते वदामि ।। इति ।
( ऋ० वे० १०।१२५।४ )

यः अन्नमत्ति, यो विपश्यति, यश्च प्राणिति यः शृणोति, स मया वाक्तत्त्वेन ( ध्वनितत्त्वेन ) एव सर्वं निष्पादयते ।

अकारोकारमकारयुक्तं प्रतिश्वासं स्वत उच्चरन्तं मन्त्रस्वरूपं हंसं कथमुच्चरेदिति स्वच्छन्दतन्त्रस्य षष्ठपटले निरूपितम् । तद्यथा—

एवमादिक्रमेणैव मन्त्रमुच्चारयेद् बुधः ।
बिन्दुस्थं त्रितयं कृत्वा वक्त्रमुद्घाटयेत्ततः ॥ ३६ ॥

अकारादिक्रमेण मन्त्ररूपतां प्राप्तं हंसध्वनिमुच्चारयेत् । त्रितयं मकारान्तं बिन्दुस्थं कृत्वा तदिदमव्याप्तिसारं सम्पाद्य अर्थात् 'सोऽहं सोऽहम्' इत्येवं कृत्वा नादोच्चारणार्थं षण्मुखीमुद्रया वक्त्रमुद्घाटयेत् । वामदक्षिणहस्तांगुष्ठाभ्यां वामदक्षिणकर्णयोः, वामदक्षिणतर्जनीभ्याञ्च नेत्रयोः, मध्यमाभ्यां नासिकयोश्च पिधानं कृत्वा षण्मुखीमुद्रा उच्यते । षण्मुखीमुद्रां दिव्यकरणं विधाय ईषद् वक्त्रं समुद्घाटच अकारादियुतं हंसस्योच्चारणं प्रोक्तम् । अनया रीत्या अभ्यासे कृते सति नादनादान्तस्याभिव्यक्तिर्जायते । एवं कृते सति व्यापिन्यादीनामपि अभिव्यक्तिर्भवति ।

यद्वा पूरककुम्भकरेचकदिव्यकरणक्रियाभिः ध्वनिसतत्त्वस्य हंसस्योच्चारणाभ्यासः कर्तव्यः; यतो हि क्रियाकरणसम्बन्धादेव मन्त्रवीर्यसारो हंसो यथार्थरूपेण समुच्चारयितुं शक्यते, नान्यथा ।

उक्तञ्चैतत्तत्रैव चतुर्थपटले—

यत्र यत्र भवेदिच्छा ज्ञानं तत्र प्रवर्तते ।
क्रियाकरणसम्बन्धात् तत्त्वस्योच्चारणं भवेत् ॥ ३५९ ॥

क्रियाकरणहीनस्य न चैवोच्चारणं भवेत् ।
क्रियाकरणभेदेन सा चैव त्रिविधा स्मृता ॥ ३६० ॥

क्रियेत्यनेन ऊर्ध्वरेचकपूरकयोः, करणपदेन च अग्रे प्रतिपाद्यमानस्य दिव्यकरणस्य ग्रहणं बोद्धव्यम् । सर्वप्रथमं पूरकं कृत्वा कुम्भकेन द्वाराणि नाडीश्च रोधयेत् । कुम्भकदशायाञ्च सुषुम्नाख्यां मध्यनाडीं विचिन्तयेत् । अनया रीत्या सङ्कोचविकासधर्मशीलानि अपानशक्तिप्रवाहवशाद् अधोमुखानि हृदयादिपद्मानि ऊर्ध्ववाहोन्मुखीभवन्ति । एवं कुम्भकादनन्तरं दिव्यं करणं कृत्वा 'अ उ म्' इति वर्णत्रययुतं हंसाख्यं तत्त्वम् उच्चरन् रेचकं कुर्यात् । जिह्वाग्रं सङ्कोच्य किञ्चिद् ऊर्ध्वं समुत्थाप्य तालुके योज्या, किन्तु कथमपि तत्र स्पर्शो न कर्तव्यः, वक्त्रं प्रसार्य ओष्ठयोरपि परस्परं स्पर्शो न स्यात् । दृष्टिश्च नाधो नाप्यूर्ध्वं कर्तव्या । तस्याः तारकश्च निश्चलः स्यात् । कायश्च अर्थात् मेरुदण्डश्च अविकृततया समुन्नतो भवेत् । इदमेव च दिव्यकरणस्य लक्षणम् । परमस्पन्दस्वरूपस्य पूर्णाहमात्मकस्य परसंविदो लाभे उपायभूतत्वादिदं करणं दिव्यं प्रोच्यते ।

दिव्यकरणस्येदं लक्षणं स्वच्छन्दतन्त्रमनुसृत्य प्रोक्तम् । तद्यथा—

करणं तु ततः कृत्वा लक्षणं तस्य वै शृणु ।
जिह्वा तु तालुके योज्या किञ्चिदूर्ध्वं न संस्पृशेत् ॥ ३६५ ॥

ईषत्प्रसार्य वक्त्रं तु किञ्चिद् ओष्ठौ न संस्पृशेत् ।
दन्तपङ्क्ती तथैवेह दृष्टिश्चाधोर्ध्ववर्जिता ॥ ३६६ ॥
कायं समुन्नतं कृत्वा करणं दिव्यमुच्यते । इति ।

( स्व० त०, प० ४ )

खेचरी मुद्रापि उन्मनापदं समुपलभते । तद्यथा नित्याषोडशिकार्णवतन्त्रस्य विंशतितमस्य श्लोकस्य अर्थरत्नावलीसंवलित-ऋजुविमर्शिनीटीकायाम्—

चिबुकं योजयित्वा तु षोडशस्वरमण्डले ।
चन्द्रसूर्यानिरोधेन मूलशक्तिनिकुञ्चनात् ॥
रसनामन्तरा कृत्वा अनच्के धारयेन्मनः ।
एषा सा खेचरी मुद्रा उन्मनात्वं प्रयच्छति ॥ इति ।

विवेकमार्तण्डे च—

कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ इति ।

अत्र खेचरीमुद्राया लक्षणं प्रोक्तम् । 'चिबुकं योजयित्वा तु' इत्यादिश्लोकैरपि खेचर्या लक्षणं प्रोक्तम् । तेन खेचरीमुद्रा अनेकविधा भवतीति ज्ञायते ।

दिव्यकरणं विधाय हंसध्वनेरुच्चारस्य अभ्यासकालेऽन्तःकरणादिस्थानेषु स हंसो विभिन्नशब्दात्मना श्रूयते । तद्यथा—

भित्त्वा हृत्पद्मग्रन्थिं तु ततः शब्दः प्रजायते ।
यदाऽऽकाशसमायोगाद् घोषशब्दोपमो भवेत् ॥ ३७० ॥

( स्व० त०, प० ४ )

घोषशब्दस्य लक्षणम्—

श्रवणाङ्गुलिसंयोगाद् यः शब्दः सम्प्रवर्तते ।
दीप्रवह्निस्वनाभोगः स नादो घोष उच्यते ॥

हंसात्मा प्राणशक्तिर्यदा हृदयदेशं भित्त्वा हृद्देशे तदात्मनाऽनुभवं कृत्वा कण्ठदेशं गतः, तदा स घोषः भ्राम्यति । कण्ठदेशस्य भेदनकाले च हंसात्मा शब्दो धुगधुगायते । कण्ठदेशात्तालुदेशं यदा गच्छति, तदा तालुग्रन्थिभेदनकाले घुमघुमात्मकः शब्दः प्रजायते । तालुमध्यदेशं त्यक्त्वा बिन्दुस्थानं भ्रूमध्यदेशं गते हंसे स्फोटात्मकः शब्दः प्रभवति । अनभिव्यक्तवर्णरूपस्फुटत्वाद् शब्दकल्पः स्फोटः । बिन्दुभेदनकाले एष स्फोटात्मकः शब्दो घुमघुमानुकृतिरुच्चरति । बिन्दुं भित्वा अर्धचन्द्रं भिद्यतो हंसस्य ललाटे झिमझिमाकृतिः शब्दो जायते । अर्धचन्द्रात् परं

निरोधिन्या भेदने सिमसिमाकृतिः, ततः परं नादनादान्तं गते हंसात्मके प्राणे तु वंशशब्दसमः, सुदुर्भिदस्य ब्रह्मरन्ध्रस्य भेदनकाले च शुमशुमाकृतयः शब्दाः प्रजायन्ते। ब्रह्मरन्ध्रात् परं शक्तिमध्यगतो हंसात्मा प्राणो वंशनादान्तसन्निभो भवति।

उक्तञ्च स्वच्छन्दतन्त्रस्य चतुर्थपटले—

भिद्यतो ब्रह्मरन्ध्रस्य शब्दः शुमशुमायते।
शक्तिमध्यगतः प्राणो वंशनादान्तसन्निभः॥ ३८२॥ इति।

शक्तिस्थानस्पर्शाद् वंशनादान्ततुल्यः शब्दो भवति, न तु शक्तिस्थानभेदाद्। शक्तिस्थानभेदनकाले तु शुमशुमः सन् शब्दः शाम्यति।

उक्तञ्च तत्रैव—

तां तु वै भेदयेच्छक्तिं दुर्भेद्यां सर्वयोगिनाम्।
भिद्यते च यदा शक्तिः शान्तः शुमशुमस्ततः॥ ३८३॥ इति।

शक्तिं भित्वा व्यापिनींगतः सञ्चरन्तीनां पिपीलिकानामिव स्पर्शप्रथारूपो भवति, व्यापिनीसमनान्तञ्च त्यक्त्वा। परविमर्शमयमुन्मनापदं गतः सन् सर्वात्मना स्फुरति[1] हंसः।

अयं भावः—प्राणमाश्रितस्य अस्य हंसस्य द्विविधोच्चारः—१-स्वाभाविकः, २-प्रायत्निकश्च। स्वाभाविकश्च उच्चारः प्रतिश्वासं स्वतः, 'हंसः, सोऽहं हंसः' इति। प्रायत्निकश्च उच्चारो दिव्यकरणेन भवति। दिव्यकरणेन प्रायत्निके समुच्चारे सत्येव बिन्द्वादिक्रमेण परावागात्मकस्य चिन्मयस्योन्मनापदस्य प्राप्तिरित्यवधेयम्।

अत्रेदमवधेयम्—'भिद्यते च यदा शक्तिः शान्तः शुमशुमस्ततः' इत्यत्र 'शान्तः' इति यदुक्तम्, तस्य प्रवृत्तिस्थानकरणाभिघातमात्रादेव शब्दवृत्तिः शाम्यति, अर्थात् शक्तिदेशात् परं स्थानं करणाभिघातं विनैव सूक्ष्मरूपेण शक्तिस्फुरतात्मना ध्वनिर्भवत्येव। अतएव स्वच्छन्दतन्त्रस्य दशमपटले—

अधः शक्त्या विनिर्गत्य यावद् ब्रह्माणमूर्ध्वतः।
नाड्या ब्रह्मविले लीनस्त्वव्यक्तध्वनिरक्षरः॥ १२३५॥
नदते सर्वभूतेषु शिवशक्त्या त्वधिष्ठितः। इति।

अत्र 'ब्रह्मविले लीनः' इत्यस्य श्रीक्षेमराजकृतोद्द्योताख्यटीकायाम्—"यद्यपि ब्रह्मविले लीनः' इत्युक्तम्, तथापि लयोऽस्य सूक्ष्मतररूपेण शक्तिस्फुरत्तात्मनावस्था-

---

१. एतत्सर्वं स्वच्छन्दतन्त्रस्य चतुर्थपटले श्लो० ३६९तः प्रारभ्य ३९४पर्यन्तं निरूपितम्, तत्र एतदीयोंऽशो द्रष्टव्यः।

नम्, अतएव 'शिवशक्त्या त्वधिष्ठितः' इत्युक्तम्। न तु 'अत्यन्तं नाश इत्यक्षर उचितैवोक्तिः'' इत्युक्तम्। किञ्च, शिवेन शक्तिव्यापिनीसमनेऽपि भूमित्रयम् अधिष्ठितम्। ब्रह्मबिल एव सर्वथा लीने सति समनापर्यन्तं तदभावाच्च तस्य शिवशक्त्या त्वधिष्ठितत्वं कुतः स्यात्! किञ्च, व्यापिनीं गते सति हंसध्वनिमये प्राणे सञ्चरन्तीनां पिपीलिकानामिव स्पर्शः प्रोक्तः। स्पर्शे च स्पन्दनं भवत्येव। स्पन्दश्च ध्वनिसतत्त्व एव भवतीति पूर्वं बहुशः प्रतिपादितम्।

उन्मनाऽपि परविमर्शमयी अहन्तैकसमरसीभूता परावागात्मिका। सा एव च समनाव्यापिनीशक्तिर्नादाद्यात्मना स्फुरति। एतत्सर्वम्—

उपादानं तु तत्प्रोक्तं संक्षुब्धं समवायतः॥

( स्व० त० प०, ११।४ )

इत्यस्य श्रीक्षेमराजाचार्यकृतोद्द्योताख्यटीकायां प्रतिपादितम्। अतस्तदनुसारेण परमशिवाधिष्ठितोन्मनाख्या शक्तिरपि संविदात्मकध्वनिमयी। एवं रीत्या शक्तिभेदे सति 'भिद्यते च यदा शक्तिः शान्तः शुभशुभस्ततः' इत्यत्र 'शान्तः' इति यदुक्तम्, तस्य सूक्ष्मतररूपेण शक्तिस्फुरत्तात्मनाऽवस्थानमेवार्थः समुचितः। अहन्तैकसमरसीभूता परमेश्वरादभिन्ना संविदात्मिका परावाक्, अथ च उन्मना–इत्युभयमेकमेव तत्त्वम्। अयं विषयः पूर्वं प्रमाणपुरःसरं प्रतिपादितः। मूलाधारे निवसन्ती परावागेव शिरसि सहस्रारे निवसति। शिरसि ऊर्ध्वसहस्रदलकमलात् प्रारभ्य मूलाधारपर्यन्तम्, यद्वा मूलाधारात् सहस्रदलकमलात् प्रारभ्य शिरः-प्रदेशस्य सहस्रदलकमलपर्यन्तं व्याप्ता–इत्युभयमपि वक्तुं शक्यते।

अयं भावः—शरीरे परावागात्मकस्य ध्वनेः निवासभूतं स्थानद्वयं विद्यते—१. मूलाधारः, २. शिरःप्रदेशश्च। उभयत्र सहस्रदलकमलं विद्यते। मूलाधारे परावागाख्या, शिरःप्रदेशे सहस्रदलकमले च उन्मनाख्या। परन्तु संविदात्मिकायाः परायाः वाचः साक्षात्कारो दिव्यकरणेन हंसोच्चारविधिना भवतीति बोध्यम्।

**कालशक्तेः सर्वेषां ग्रहाणाञ्च उदयो हंसध्वनितत्त्वाधीनः**

अहमिति ध्वनितत्त्वं प्राणमाविश्य हकारेण बहिर्गच्छत्, सकारेण च अन्तः प्रविशत् कालं कलयति। कालस्य सत्ता हंसाख्यध्वनितत्त्वाधीना। अतएव श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डे—

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः॥ ३॥ इति।

अस्यां कारिकायां यस्येत्युक्तम्। अत्र स्वस्वामिभावसम्बन्धे षष्ठी। यस्य शब्दब्रह्मणः अध्याहितः आरोपितः कलाभेदः ( निमेषादिक्रियोपहितनानात्वं

यस्यास्ताम् ) अध्याहितकलां कालशक्तिम् उपाश्रिताः जन्मादयः—जायते, अस्ति, विपरिणमते, वर्द्धते, ह्रसति, नश्यति—इत्येवंरूपाः षड्विकाराः भावभेदस्य=भावः परमार्थरूपं सत्तात्मकं ध्वनितत्त्वम् ( शब्दतत्त्वम् ) तस्मिन् यो भेदः, तस्य योनयः कारणानि भवन्ति।

परन्त्वस्य कालस्य कलना बिन्दुसहितस्य हकारसकारात्मकस्य ध्वनेरुदयादेव जायते। कालोऽप्यस्य ध्वनितत्त्वस्याधीनतां स्वीकरोति। हानसमादानधर्मा सूर्योऽपि हंसः; धर्मसाम्यात्। स्वातन्त्र्यात्मना स्वभावेन त्यागग्रहणधर्मा विश्वसर्गसंहारकारी यथा चासौ हंसः, तथा सूर्योऽपि स्वप्रकाशेन अन्वितः सन् रसग्रहणत्यागधर्मा हंसः। सर्वप्राणिनामुरसि प्राणमाश्रित्य सञ्चरन्नयं हंसः स्वाविर्भावास्तक्रियाभ्यां जन्मादिविकारषट्कक्रमेण भूतवर्तमानादिभेदेन वहन् विश्वं कलयति।

उक्तञ्च स्वच्छन्दतन्त्रस्य सप्तमपटले—

शिवो धर्मेण हंसस्तु सूर्यो हंसः प्रभान्वितः॥ २९॥
आत्मा वै हंस इत्युक्तः, प्राणो हंससमन्वितः।
तस्योदयात् कलेत् कालो ग्रहाणामुदयो भवेत्॥ ३०॥

किञ्च, आकाशमण्डले स्वररश्मिभिः प्रदीप्यमानस्य हंसात्मकस्य बाह्यसूर्यस्योदयास्तक्रियाभ्यामहोरात्रं भवति। तथैव शरीरान्तःप्रदेशेऽनाहतध्वनिपरमार्थस्वरूपस्य हंसस्योदयास्तक्रियाभ्यां षट्त्रिंशत्प्राणचारदेशेऽहोरात्रं जायते। परमतत्त्वं परमेश्वरं लब्धुम् उन्मनापर्यन्तं हंसोच्चारो दिव्यकरणेन क्रियते। अत्र तु शरीरान्तःप्रदेशेऽहोरात्रज्ञानाय प्राणसञ्चारः सम्पाद्यते। अतोऽत्र दिव्यकरणपूर्वकं प्राणात्मकहंसोच्चारणस्य विधिर्नापेक्ष्यते। प्राणसमन्वितो हंसो हृदयदेशात् प्रसूय ब्रह्मरन्ध्र-पर्यन्तं सञ्चरति। सर्वप्राणिषु हृदयदेशाद् ब्रह्मरन्ध्रपर्यन्तं देशः स्वाङ्गुलपरिमाणानुसारेण षट्त्रिंशदङ्गुलिपरिमाणकः। हंसस्य षट्त्रिंशदङ्गुलिपरिमाणके सञ्चारे गमनागमने उभे अपि क्रिये भवतः। अनाहतध्वनिपरमार्थस्वरूपहंसान्वितः प्राणात्मकः सूर्यो हृदयदेशाद् उदित्य ब्रह्मरन्ध्रेऽस्तो भवति। इदमेव शरीरान्तःप्रदेशे दिनमुच्यते। अपानरूपश्चन्द्रश्च ब्रह्मरन्ध्राद् उदित्य हृदयदेशेऽस्तं प्रयाति। इयमेव आध्यात्मिकी रात्रिर्बोद्धव्या। इमावेव सूर्यचन्द्रोदयास्तौ। अपानशब्देनात्र यो वायुः अन्तः श्वस्यते स बोद्धव्यः। प्राणशब्देन च हृदयदेशाद् नासिकामार्गेण बहिर्निर्गच्छन् वायुर्बोद्धव्यः।

यदा हृदयदेशात् हंसध्वनिसमन्वितः प्राणः उत्तिष्ठति, तदा प्रातः कालः सञ्जायते। एवं क्रमशः कण्ठादिदेशं गते सति हंसे पूर्वाह्णमध्याह्नापराह्णसायमित्येते काला जायन्ते। यदा च प्राणे ब्रह्मरन्ध्रमस्तं गच्छति, तदा अपानः समुदेति, सायङ्कालश्च प्रवर्तते। कण्ठतालुकण्ठहृदयदेशान् क्रमशो गते सति

अपानरूपचन्द्रे पूर्वरात्रिः, मध्यरात्रिः, अपररात्रिः—इत्येते काला जायन्ते। यदा च अपानरूपश्चन्द्रो हृदयदेशेऽस्तं गच्छति, तदा हंसात्मा प्राणः हृद्देशे समुदेति। एवं शरीरान्तर्देशे रात्रिंदिवा च चक्रवद् भवतः। हृदयाद् ब्रह्मरन्ध्रपर्यन्तं प्राणसञ्चारे यः कालः परिसमाप्यते, स कालः षोडशतुटिपरिमाणकः प्रोच्यते। ब्रह्मरन्धाद् हृदयदेशपर्यन्तश्च प्राणसञ्चारे तावानेव कालः परिसमाप्यते। सपादद्व्यङ्गुलपर्यन्तं प्राणसञ्चारे यः कालः परिसमाप्यते, स तुटिनाम्ना प्रोच्यते।

उक्तञ्चैतत् तत्रैव—

तुटयः षोडश प्राणे पूर्वं हि कथिता यया।
बाह्येनैव तु कालेन ते लवाः परिकीर्तिताः ॥ २७ ॥ इति।

याः पूर्वं चतुर्थपटले सपादद्व्यङ्गुलोदयपरिमाणाः षोडश तुटयः उक्ताः, ताः। इदं शरीरान्तःप्रदेशे ( आध्यात्मिकस्य ) तुटेर्लक्षणम्, न तु बाह्यस्य। एवं प्राणीया तुटिर्बाह्यतुटिश्च परस्परं भिन्ना। बाह्यतुटेर्लक्षणं शास्त्रेषु प्रतिपादितम्[1]।

प्राणीया तुटिः बाह्यलवेन समा, बाह्यतुटिश्च प्राणीयतुटचर्धे पर्यवस्यति। इत्थञ्च बाह्यः क्षणः प्राणीयतुटेस्तुर्योऽशः।

शरीरान्तःप्रदेशे प्राणीयाभिश्चतसृभिः तुटिभिः यामः प्रोच्यते। तथा बहिर्वद् शरीरान्तःप्रदेशेऽपि दिनचतुर्थभागो यामः प्रहरः। चतुर्भिः प्रहरैर्दिनम्, अथ च तावद्भिरेव प्रहरै रात्रिः। तदित्थं सङ्कलय्य अष्टभिर्यामैरहोरात्रं विज्ञेयम्। एषु प्रहरेषु च प्रातः सायं सन्ध्याद्वयस्यापि अन्तर्भावो बोद्धव्यः। हृदयदेशे हंसमये प्राणे विचरति सति प्रथमः प्रहरः, तालुमध्ये मध्याह्नो द्वितीयः प्रहरः[2]। द्वितीयप्रहरे कृता जपहोमादयो मोक्षदाः।

भ्रूमध्यस्य त्र्यङ्गुलमूर्ध्वं ललाटदेशं सञ्चरति हंसे तृतीयः, अथ च ब्रह्मरन्ध्रं सञ्चरति प्राणे चतुर्थः प्रहरः। चतुर्थप्रहरान्ते हंसध्वनिमयप्राणसूर्योऽस्तमेति। सूर्येऽस्तं गते सति तुटचर्धे सायं सन्ध्या भवति[3]।

---

१. मानुषाक्षिनिमेषास्य अष्टमांशः क्षणः स्मृतः।
क्षणद्वय तुटिर्ज्ञेया तद्द्वयं तु लवः स्मृतः ॥ ९९ ॥
( स्व० त०, प० ११ )

२. द्वितीय ऊर्ध्वे विज्ञेयो मध्याह्नस्तालुमध्यतः।

३. चतुर्थान्ते तु देवेशि प्राणसूर्यः सदास्तगः।
ततोऽस्तमयसन्ध्यात्र तुट्यर्थं तु भवेत् प्रिये ॥ ३६ ॥
( स्व० त० प० ७ )

एवमुपर्युक्तक्रमेण रजन्यामपि चतुर्षु प्रहरेषु अपानचन्द्राख्यहंसात्मकः प्राणः सञ्चरति। ब्रह्मरन्ध्रदेशे ललाटदेशे तालुमध्ये हृदये च क्रमशः प्रथमादिप्रहरा रात्रेर्बोद्धव्या। हंसात्मके अपानचन्द्रे हृदयदेशं प्राप्ते सति प्रभातसमयः। अत्रापि च रात्रिदिवसयोः सन्ध्याकालः तुटचर्द्धपरिमाणकः।

तदित्थमध्यात्मिका तुटिः, लवो निमेषः, काष्ठाः कलाः, मुहूर्ताः अहोरात्रः, पक्षो मासः, ऋतुः, अयनम्, वत्सरः, युगः, मन्वन्तरः, कल्पो महाकल्पः परार्धश्च एते सर्वे प्राणसमन्विते हंसध्वनौ व्यवस्थिताः। प्राणसमन्वितहंसध्वनिनियन्त्रितै-रेभिः लवनिमेषाहोरात्रादिकालक्रमैः सर्वेषां जन्मादयो नियन्त्रिताः।

वस्तुतस्तु ध्वनितत्त्वाख्यं परं ब्रह्मैव सामान्यरूपं विशेष रूपञ्च समग्रं क्रियाकलापं दधाति। इदञ्च तथ्यं पोषयति श्रीभर्तृहरिः वाक्यपदीयस्य तृतीयकाण्डे जातिसमुद्देशे—

सैव भावविकारेषु षडवस्थाः प्रपद्यते।
क्रमेण शक्तिभिः स्वाभिरेवं प्रत्यवभासते॥ ३६॥ इति।

सैव परमसत्तैव, भावविकारेषु भावस्य परमार्थरूपस्य सत्तात्मकस्य, विकारेषु जन्मादिषु उत्तरोत्तरक्रमेण जायमानेषु सत्सु षडवस्थाः (पूर्वोक्ताः षडवस्थाः) प्रपद्यते। न केवलं प्रपद्यते, अपितु क्रमेण स्वाभिः शक्तिभिः जन्मादिक्रियारूपेण प्रत्यवभासतेऽपि। इत्थञ्च स्वाभिरेव शक्तिभिरव्यतिरिक्ताभिर्जन्मादिरूपतया अवभासते।

तदेव ध्वनितत्त्वाख्यं ब्रह्म सर्वभावेषु समानरूपं सत्तात्मकम्; अन्यस्य तद्व्यतिरिक्तस्याभावात्। तदेव हंसाख्यं ब्रह्म सर्वभावेषु मृषात्मसु सुसमानरूप-सत्तात्मकमनुगतमस्ति, येन सर्वे भावा मिथ्याभूता अपि सत्त्वेन प्रतीयन्ते।

भौमाद्या ये ग्रहास्तेऽपि प्राणशक्त्यात्मके यद्वा हंसध्वनिमये प्राणे उदयं यान्ति[1]। यो ग्रहो यस्मिन् वारे प्रहरे च बहिरुदेति, स एव ग्रहोऽन्तरपि तस्मिन्नेव प्रहरे समुदेति। अर्थात् यस्य ग्रहस्य बहिर्वारः स प्रथमे प्रहरे बहिरिव अन्तरपि हंसयुते प्राणे समुदेति। प्रत्येकं ग्रहा दिनेऽर्धेऽर्धे प्रहरे एवं रात्रावपि तथैव समुद्यन्ति। यो ग्रहो दिने यस्मिन् प्रहरार्धे प्राणात्मके हंसे चरति, स एव ग्रहस्तस्मिन्नेव

---

१. भौमाद्याश्च ग्रहा ह्येवं चरन्ति प्रविभागशः।
प्राणे चाप्युदयन्त्येते प्रहरे प्रहरे प्रिये॥ ४२॥
वेलावारो भवेद् यस्य स चरेत् प्रहरद्वयम्।
राहुश्चरति सोमेन केतुश्चरति भास्वता॥ ४३॥

प्रहरार्द्धे रात्रावपि चरति। वारभागिनस्तु द्विगुणमिति स्थितेऽहोरात्रं प्रहरद्वयम्, तदन्येषामहोरात्रम् अहोरात्रं प्रहरमात्रं उदेति। अत्रैव मध्ये सोमेन सह राहुः सूर्येण सह केतुश्चरति, न तु ग्रहान्तरवद् व्यतिरिक्तः।

इत्थं ग्रहाणां बहिरिव अन्तरपि हंसध्वनिमये प्राणे समुदयात्। ते प्राणान् प्रभावयन्ति। आकाशस्थग्रहाणाञ्च हंसेन सह सम्बन्धः। अतो ग्रहे कुथिते सति दुःखम्, प्रसन्ने सति सुखमनुभूयेते।

प्राणात्मके हंसे लोकपालगणेश्वरभैरवादयश्च सर्वे ग्रहान् अनन्तादिनागाँश्च सम्यग् अधिष्ठाय राशिभिर्नक्षत्रैश्च सह अर्हनिशम् उद्यन्ति। किञ्च पञ्चदश तिथयोऽपि बहिरिव अन्तःप्राणमाश्रिताः। हृद्देशे तुटचर्द्धम्, अथ च ब्रह्मरन्ध्रदेशे तुटचर्द्धमिति द्वयं सयोज्य तुटिपरिमाणको यः कालः, तं विहाय। यास्तु मध्ये पञ्चदश तुटयः, ता एव प्रतिपदादितिथ्यः[1]।

अत ऊर्ध्वञ्च यत्तुटचर्द्धपूर्वमहोरात्रोदये पूर्वापरसन्ध्यात्वेनोक्तम्, स एवेह विश्रमः पक्षसन्धित्वेन कीर्त्तितः। ता एव पञ्चदशतुटयः पक्षाः। यदा च हंसात्मा प्राणः शक्तिं विशति, तदा कृष्णपक्षे अमावस्यातिथिर्जायते। शक्तेर्मध्योर्ध्वभागे तुटचर्द्धं हंसो वा तिष्ठति, स एव कालः पक्षसन्धिर्ज्ञेयः। हंसस्य गत्यनुसारेणैव सूर्यचन्द्रग्रहणं जायते। यदा तिथिच्छेदस्तदा सूर्यग्रहणम्।

प्रतिपदोऽमावस्याभागसम्मेलने सति हंसात्मकं प्राणमध्यं यदा अपानरूपश्चन्द्रः प्रविशति, तदा चन्द्रसञ्चारी राहुः सूर्यस्पर्शस्रावयुतं चान्द्रम् अमृतं पीत्वा अपानरूपं चान्द्रबिम्बं मुञ्चति, इदमेव च प्राणीयम् ( आध्यात्मिकम् ) सूर्यग्रहणमुच्यते। चन्द्रराहुसूर्याश्चैते त्रयो ग्रहा यदा समवायेन दृश्यन्ते, तदा महाग्रहणमुच्यते।

अस्मिन् काले कृतं स्नानदानादिकमनन्तफलदं भवति। अर्थात् प्राणापाने समे कृत्वा स्नानादिक्रियाः अनन्तफलवत्यो भवन्ति।

प्राणापानसन्धिस्थाने हृत्पद्मे सूर्यग्रहणं जायते। सूर्यग्रहणे पार्वणेन्दुकलया सूर्यः संस्पृश्यते। एवमेव अधश्चोर्ध्वं सञ्चरति प्राणहंसे मकरादिराशयः समुद्यन्ति[2]। हंसोऽनाहतनादोऽन्तःकरणे, बहिस्तु सूर्यः। रश्मिभिरन्तर्मुखीभूताभि-

---

१. तुटचर्द्धं चाप्यधश्चोर्ध्वं विश्रमः प्रकीर्तितः।
मध्ये पञ्चदशोक्ता यास्तिथयस्ताः प्रकीर्तिताः॥ ६२॥
( स्व० त०, प० ७ )

२. मासि राश्युदये ह्येष अधोर्ध्वप्राणसञ्चरे।
हृदयाद्दयस्थानात् सङ्क्रान्तिर्मकरे स्थिताः॥ ६३॥

विमर्शमयीभिरिन्द्रियदेवीभिरन्तः, बहिस्तु प्रभाभिः गर्भस्थम् अर्थाद् शक्त्यन्तर्गतं कारयेत्। इत्थश्च शरीरान्तर्देशे प्राणहंसे सर्वोऽपि कालः, ग्रहाः, राशयः, समुद्यन्ति। एषां कालग्रहादीनां याः सर्वा उदयादिरूपाः क्रियाः, ताः सर्वाः परमसत्तात्मिकाः।

किञ्च, एतेषां ग्रहादीनाम् उदयास्तादिक्रियाणां यः क्रमः, सोऽपि परमसत्तात्मकः, सर्वासां क्रियाणां क्रमस्य परमसत्तात्मकत्वात्।

एतच्च तथ्यं शब्दतत्त्वपारावारीणः श्रीभर्तृहरिरपि स्वकीये वाक्यपदीये (तृतीयकाण्डे जातिसमुद्देशे) पोषयति। तद्यथा—

आत्मभूतः क्रमोऽप्यस्याः यत्रेदं कालदर्शनम्।
पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम् ॥ ३७ ॥

---

षडङ्गुलान्यधस्त्यक्त्वा कुम्भे संक्रमते पुनः।
कण्ठोर्ध्वे द्व्यङ्गुलं त्यक्त्वा मीने संक्रमते पुनः ॥ ९४ ॥

गलोर्ध्वाद् यावत् तालवन्तं त्यक्त्वा मेषेऽथ संक्रमेत्।
नासान्तं यावत् संक्रान्तिरङ्गुलानि षडेव हि ॥ ९५ ॥

एषा वै त्रिषु संक्रान्तिरुत्तरे संव्यवस्थिता।
जपहोमार्चनध्यानान्महाभ्युदयकारिका ॥ ९६ ॥

नासाग्रचं तु परित्यज्य प्राणहंसो वृषे चरेत्।
षडङ्गुलानि सन्त्यज्य संक्रमेत् मिथुने पुनः ॥ ९७ ॥

शक्त्यन्तं यावदध्वानं संक्रान्तिर्मिथुने स्मृता।
मकराच्च समारभ्य मिथुनान्तं च सुव्रते ॥ ९८ ॥

उत्तरायणमत्रैतद् ऐहिकी सिद्धिवर्जिता।
स्नानं ध्यानं तथा दानं पूजाहोमजपादिकम् ॥ ९९ ॥

साधकाद्यैः कृतं यच्च सहस्रधानेकधा भवेत्।
इह जन्मनि नाप्नोति परत्रैवोपतिष्ठते ॥ १०० ॥

दिनानि तत्र वदन्ते मकरान् मिथुनान्तिकम्।
तत्काले संहरेद् वीर्यं बगत्यस्मिँश्चराचरे ॥ १०१ ॥

हंसो रश्मिभिराकृष्य गर्भस्थं कारयेत्तु तम्।
गर्भस्थानेकधारूपं यद् गृहीतं पुरातनम् ॥ १०२ ॥

( स्व० त०, प० ७ )

योऽयं क्रियाणां क्रमः सोऽपि आत्मभूतोऽस्याः सत्तायाः । न केवलं ताः क्रिया एव; क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्याभावात् । क्रमाख्या हि कालशक्तिः ब्रह्मणो जन्मवस्तुपदार्थेषु जन्मादिक्रियाद्वारकमेव पौर्वापर्येणावभासते, नापरो द्रव्यभूतः कालः । भवतु नाम क्रमाख्या कालशक्तिः क्रमवद्भ्योऽनतिरिक्ता, व्यतिरिक्ता वेति नात्र मम काचिद् विचिकित्सा, किन्तु कालशक्तेरुदयः प्राणसमन्वितस्य हंसध्वनितत्त्वस्याधीनः ।

बाह्योऽपि कालो बाह्यसूर्यात्महंसेन नियन्त्रितः । अतएव कालः 'अध्याहितकलां यस्य' इत्युक्त्या शब्दब्रह्मणः स्वतन्त्रा शक्तिः, तदधीना च । यश्च हंसाख्यं सकलेश्वरं ध्वनितत्त्वं ध्यायेत् स कालशक्तिमपि जयेत् ।

उक्तञ्च—

ध्यात्वा कालेशस्वच्छन्दं हंसं वा सकलेश्वरम् ।
नासिकारन्ध्रमार्गस्थः स सृजेत् संहरेज्जगत् ॥ २०७ ॥
एवं शरीरजे काले मृत्युं चाशुभमेव च ।
ज्ञात्वा योगी जयेन्मृत्युमशुभान्यवशेषतः ॥ २०६ ॥

कालस्यापि शासकत्वात् कालेशो हंसाख्यो ध्वनिसतत्त्वः । सर्वस्य शासकत्वादिदमेव वाक्तत्वं सर्वेषां भरणपोषणकर्तृ ।

एतच्च तथ्यं न केवलं व्याकरणदर्शनम् आगमशास्त्रं वा पुष्णाति, अपि तु निगमोऽपि अत्र साक्षीभूतः । तद्यथा—

अहं रुद्रेभिर्वसुभिश्चराम्यहम् आदित्यैरुत विश्वेदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥

( ऋ० वे० १०।१२५।१ )

अहमेव स्वमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तम् ऋषिं तं तं ॥

( अ० वे० १०।१२।४ )

अत्र 'मित्रावरुणोभा बिभर्मि,' 'यं कामये तमुग्रं कृणोमि'—इत्यादिभिरस्य सर्वनियन्तृत्वं प्रतिपादितम् । अनाहतध्वनिपरमार्थस्य प्राणहंसस्येत्थं व्याख्यानं स्वच्छन्दादितन्त्रेषु बहुशः प्रतिपादितम् । विस्तरभयाद् सम्पूर्ण तद् व्याख्यानं प्रकृतेऽनुपयोगि ।

अहमनाहतध्वनिपरमार्थो हंसो प्राणमाश्रित्य नाडीमाध्यमेनैव सञ्चरति । अस्माकं शरीरे प्राणवहाः प्रधाना दश नाड्यः । यथा—

इडा[1] च पिङ्गला[2] चैव सुषुम्ना[3] च तृतीयका।
गान्धारी[4] हस्तिजिह्वा[5] च पूषा[6] चैव यशस्विनी[7] ॥ १५ ॥
अलम्बुसा[8] कुहूश्चैव[9] शंखिनी[10] दशमी स्मृता।
एताः प्राणवहाः प्रोक्ताः प्रधानाः दश नाडयः ॥ १६ ॥

वायूनाञ्च संज्ञाभेदः—

[1]प्राणोऽ[2]पानः [3]समानश्च उदानो[4] व्यान[5] एव च।
नागः[6] कूर्मोऽथ[7] कृकलो[8] देवदत्तो[9] धनञ्जयः[10] ॥ १७ ॥ इति ॥

दशानां नाडीनां मध्ये नाडीत्रयं परं प्रधानं विद्यते। विन्दुप्रधानः (ज्ञानशक्तिप्रधानः) प्राणस्तदात्मिका पिङ्गला दक्षनाडी, क्रियाशक्तिप्रधानोऽपानस्तदात्मिका इडा वामनाडी। अत्र क्रियाशक्तिपदेन नादो बोद्धव्यः। तयोर्मध्ये सुषुम्ना परेच्छाशक्तिस्फुरत्तारूपा। इमास्तिस्रो नाड्यः साधकानां हितावहाः सन्ति[1]।

परावाग् इच्छाज्ञानक्रियामयी प्रोक्ता। इदं नाडीत्रयम् इच्छाज्ञानक्रियामयपरावागात्मकमिति तात्पर्यं बोद्धव्यम्। सा च परावाक् प्राणहंसात्मना प्रधानतया अस्मिन् नाडीत्रये प्रविचरति। प्राणमाश्रितस्य हंसात्मनो ध्वनेः सञ्चारोऽयत्नादेव स्वतः सर्वदा प्रवर्तते।

अनाहतध्वनिपरमार्थस्वरूपो हंसो निखिलं वाच्यवाचकक्रममुल्लङ्घ्य परमभेदसारमन्त्रवीर्यात्मना स्फुरति। अस्य च न कोऽपि उच्चारयिता प्रतिहन्ता[2] च। सर्वकर्तृत्वेन परममातृस्वरूपः। उच्चारयितुः प्रतिहन्तुश्चाभावाद् अयं हंसः

---

१. जपतश्च वरारोहे जपसिद्धिमवाप्नुयात्।
दशानां तु परं देवि नाडीत्रयमुदाहृतम् ॥ १९ ॥
बिन्दुनादात्मके द्वे वै मध्ये शक्त्यात्मिका स्मृता।
हृच्चक्रे वै समाख्याताः साधकानां हितावहाः ॥
(स्व० त०, प ७)।

२. मनोऽप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम्।
यथा प्रवर्तते प्राणस्त्वयत्नादेव सर्वदा ॥ ५८ ॥
नास्योच्चारयिता कश्चित् प्रतिहन्ता न विद्यते।
स्वयमुच्चरते हंसः प्राणिनामुरसि स्थितः ॥ ५९ ॥
(स्व० त०; प० ७)

'अनाहतः' इत्युद्घोष्यते। इतरवर्णवत् स्थानकरणाभिघातेन न अभिव्यज्यते, किन्तु स्वत एव। स चायमनाहतध्वनिपरमार्थस्वरूपो हंसः, प्राणिनामुरसि जीवनस्यापि जीवनभूतः सन् विराजते। केचिदेव तपोधना एतत्सत्तां समाविशन्ति। प्राणाश्रितमिदं च हंसाख्यं ध्वनितत्त्वं वैयाकरणानां मतानुसारेण प्राणशक्तिरुक्ता।

उक्तञ्च श्रीभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते॥ ११७॥ इति।

अत्र 'तस्य प्राणे च या शक्तिः' इति यदुक्तम्, तत्र प्राणशक्तिपदेन 'आत्मा वै हंस इत्युक्तः प्राणो हंससमन्वितः' इति पूर्वोक्त्या हंसस्यैव ग्रहणं बोद्धव्यम्। वर्णपदमन्त्रकलाभुवनतत्त्वमयम् अध्वषट्कमपि प्राणहंसे संस्थितम्। अयं हंसध्वनिसतत्त्वः प्राणः सूक्ष्मस्थूलभेदेन द्विविधः। स्थूलः प्राणषट्त्रिंशदङ्गुलपरिमितदेशे सञ्चरति। किन्तु सूक्ष्मः प्राणः प्राणिनां देहे आपादान् मूर्द्धपर्यन्तं समधिष्ठितः सन् सर्वत्र व्यापकः। अयं सूक्ष्मः प्राणः चित्, संवेदनसंविद्—इत्यादिनामभिः प्रसिद्धः। अस्मिन्नेव संवित्प्राणे अध्वषट्कस्य संस्थितिर्बोद्धव्या।

**हंसध्वनिसतत्त्वः प्राणस्तत्त्वाध्वा**

अयं संवित् प्राण एव तत्त्वाध्वा। उक्तञ्च स्वच्छन्दतन्त्रस्य चतुर्थे पटले—

अध्वषट्कं यथा प्राणे संस्थितं कथयामि ते॥ २४१॥
आपादान् मूर्द्धपर्यन्तं चितेः संवेदनं हि यत्।
भुवनाध्वा स विज्ञेयस्तत्त्वाध्वा च तथैव हि॥ २४२॥ इति।

विशेषेषु सामान्यतया यत्स्फुरति तत्तत्त्वमित्यभिधीयते। तद् यथा मृत्तिकापाषाणादिषु यत् काठिन्यम् आभासते तत् पृथ्वीतत्त्वम्। सामान्यस्याभासश्च संवित्प्राण एव जायते। अतः स संवित्प्राणस्तत्त्वाध्वाऽप्युच्यते। किञ्च, प्राणापानादिविशिष्टासु वृत्तिषु संविदेव सामान्यतया आभासते। अतः प्राणापानादीनां सामान्यं स्वरूपं संविदेव। संवित् शक्तिः सङ्कुचितरूपं स्वीकृत्य प्राणात्मना देहं व्याप्य स्फुरति। आपादान् मूर्द्धपर्यन्तं काठिन्यादिरूपेण भासमानः संवित् प्राणे भुवनाध्वा। कलाध्वादयोऽपि अत्रैव स्थिताः।

तदुक्तं चैतत्तत्रैव ग्रन्थे—

"हंसात्मके प्राणे कलाध्वस्थितिमाह—

कलाकलितसन्तानः प्राणः सञ्चरते सदा।
निवृत्तिश्च प्रतिष्ठा च अधो भागे प्रवर्तिते ॥ २४३ ॥

विद्याशान्तिस्थता चोर्ध्वे शान्त्यतीतास्त्वविष्ठिताः।
तदतीतः परो भावः तदूर्ध्वं पदमव्ययम् ॥ २४४ ॥

एवं बिन्दुकला ज्ञेया नादशक्त्यात्मिकाश्च याः।
व्यापिन्याद्यात्मिका याश्च व्याप्यव्यापकभेदतः" ॥ २४५ ॥ इति।

एवं कलाभुवनतत्त्वानामिव वर्णपदमन्त्राणामपि स्थितिः संवित् प्राण एव। एतदुपोद्बलकं प्रमाणं यथा—

वर्णाः शब्दात्मकाः सर्वे जगत्यस्मिँश्चराचरे।
स्थिताः पञ्चाशता भेदैः शास्त्रेष्वानन्त्यकोटिषु ॥
शब्दात् प्राणः समाख्यातः तस्माद् वर्णस्तु प्राणतः।
उदयन्त्येते लयं यान्ति यत्र शब्दो लयं गतः ॥ ३२४८ ॥
( स्व० त०, प० ४ )

आनन्त्येषु कोटिशास्त्रेषु अकारादिपञ्चाशता भेदैः चरे अचरे च अव्यक्ताक्षरात्मना वर्णाः स्थिताः। ते च वर्णाः शब्दात्मकाः, शब्दनरूपाः। शब्दोऽपि प्राणस्यात्मा। अतः प्राणो ध्वनि सतत्त्वः, ध्वनिरूपादेव प्राणाद् वर्णा जायन्ते। यत्र च शब्दात्मा ( शब्द एव आत्मा यस्य स शब्दात्मा ) प्राणो लयं याति, तत्रैव वर्णा लीयन्ते। इत्येवं ध्वनिसतत्त्वे प्राण एव वर्णाध्वा स्थितः। प्राणस्य ध्वनिसतत्त्वं हंसद्वारैव बोद्धव्यम्। अत एव पूर्वं 'हंस एव प्राणः' इत्युक्तम्।

वर्णा इव पदानि मन्त्राश्चापि ध्वनिसतत्त्वे प्राणे स्थिताः। यतो हि तेऽपि वर्णात्मकाः।

उक्तञ्चैतत् तत्रैव—

वर्णाध्वैवं समाख्यातः पदाध्वा प्रोच्यतेऽधुना ॥ २५ ॥
एकाशीति पदान्येव विद्याराजस्थितान्यपि।
वर्णात्मकानि तान्यत्र वर्णाः प्राणात्मकाः स्थिताः ॥ २५२ ॥
मन्त्रैकादशिका या तु सा च हंसे व्यवस्थिता।
पदैकादशिका सा च प्राणे चरति नित्यशः ॥ २५४ ॥

एतानि च पदान्याह—

अकारश्च उकारश्च मकारो बिन्दुरेव च।
अर्द्धचन्द्रो निरोधी च नादो नादान्त एव च ॥ २६४ ॥
शक्तिश्च व्यापिनी चैव समनैकादशी स्मृता। इति।

इत्थं वर्णाः, पदानि, मन्त्राश्च ध्वनिसतत्त्वे प्राणहंसे स्थिताः। अयं च हंसः प्राणिषु प्रतिश्वासोच्छ्वासं स्वतः समुच्चरितो भवतीति पूर्वं बहुशः प्रतिपादितम्। स च हंसः प्रणवानुलग्नतयैव समुच्चरितो भवतीत्यपि प्रतिपादितम्। अतः सोऽपि ध्वनितत्त्वान्तर्गतत्वाद् अत्र प्रतिपाद्यविषयीभूतः ॥



## ३.

# प्रणवध्वनिः

### प्रणवहंसयोरभेदः, प्रणवानुलग्न एव हंसः समुच्चरति

प्रणवोऽपि हंस इव प्राप्तमहत्त्वप्रसरः; प्रणवस्य हंसानुलग्नत्वात् तयोरभेदाच्च। अत एव श्रीस्कन्दपुराणान्तर्गते प्रणवकल्पे श्रीप्रणवदिव्यसहस्रनामस्तोत्रे 'प्रणवो हंसः' इत्युक्तम्। तद्यथा—

स्थपितः ककुभश्चैव वन्यः कक्ष्यः पतञ्जलिः।
सूतो हंसो विहन्ता च कपर्दी च पिनाकवान् ॥ ४१ ॥ इति।

पतन्ति अञ्जलयो यस्मिन् सर्वजनानां नमस्कार्यत्वाद् इति पतञ्जलिः। हंसः परमात्मा हिरण्मयः, 'पुरुष एव हंसः' इति श्रुतेः।

हंसिने वेदिने तस्मै चतुर्वक्त्राय ब्रह्मणे।
नमो ऋचाय ब्राह्माय ब्रह्मणे परमेष्ठिने ॥ ९९ ॥

हंसोऽस्यास्तीति हंसी, तस्मै हंसिने। हंसस्य प्रणवानुलग्नत्वात् प्रणवो हंसयुतोऽस्त्येव। किन्तु प्रणव-रामयोरपि नास्ति भेदः।

अतएव प्रणवकल्पे प्रणवसहस्रनामस्तोत्रे—

रामाय रामदेहाय पावनाय पवित्रिणे।
यस्य कस्य स्वरूपाय जगद्रूपाय ते नमः ॥ १०१ ॥ इति।

अत्र 'रामाय' इत्युक्तम्। हंसानुलग्नतयोच्चार्यमाणः, 'ॐ' इति प्रणवः प्रतिप्राणि अन्तर्नदति।

### प्रणव एव च सूर्यः

उक्तञ्च साम्बपञ्चाशिकायाम्—

ओमित्यन्तर्नदति नियतं यः प्रतिप्राणि शब्दः,
वाणी यस्मात् प्रसरति परा शब्दतन्मात्रगर्भा।
प्राणापानौ वहति च समौ यौ मिथो ग्रासंसक्तौ,
देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये ॥ २ ॥ इति।

अत्र प्रणवात्मकस्य सूर्यस्य स्तुतिः कृता। प्रणवस्य सूर्यमण्डले निवासात् सूर्योऽपि प्रणवः। उक्तञ्च—

प्रत्यग्रूपाय दिव्याय रविमण्डलवासिने।
पुरुषेष्वधिवासाय तारकाय नमो नमः ॥ १८ ॥ इति।

यस्मात् प्रणवसूर्यात् शब्दतन्मात्रगर्भा आदिक्षान्तशब्दसामान्यमात्रा अविभागज्योतिर्मयी परावाणी प्रसरति, अर्थात् प्रणवशक्तिरेव मूलाधारे स्थितां परां वाणीं स्वरव्यञ्जनात्मना उन्मेषयति, तं प्रणवात्मकं परमादित्यं सपदि प्रपद्ये ।

प्रणवतत्त्वमेव सर्ववादान् प्रबाध्य साधकान् विशुद्धं मार्गं प्रदर्श्य वेदतत्त्वमवगमयति । तत्र वेदविषये एकत्विनां द्वैतिनाञ्च रुचिवैचित्र्याद् बहवो मार्गाः अवलम्बिताः । अद्वैतिनः—'एकमेवाद्वितीयम्' 'आत्मैवेदं सर्वम्' इत्यादिश्रुतिबलेन जीवब्रह्मणोरैक्यं ब्रह्मातिरिक्तत्वेन जगतोऽभावं मन्यमानाः 'द्वा सुपर्णा य आत्मनि तिष्ठन्' इत्यादिद्वैतबोधकश्रुतीनां भेदानुवादकत्वेन हीनबलत्वाद् बाध्यत्वमाचक्षते । द्वैतिनस्तु--प्रत्यक्षविरोधेनाद्वैतश्रुतयः उपचरितार्था जगत्यास्थानिवृत्तये वैराग्योत्पादिकाः । द्वैतश्रुतयस्तु प्रत्यक्षसम्वादेन सत्यार्थाः । एवं स्वविकल्पजा अनेके प्रवादा प्रवर्तिताः । मोक्षमार्गावलम्बिनां साधकानाञ्च कृते उद्भ्रान्तिजनकाः । प्रणवात्मकं ध्वनितत्त्वं तु सर्ववादाविरोधि सद् असन्दिग्धं सन्मार्गं प्रदर्शयति ।

उक्तञ्चैतद् वाक्यपदीयस्य ब्रह्मकाण्डे—

सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा ।
युक्ता प्रणवरूपेण सर्ववादाविरोधिनी ॥ ९ ॥ इति ।

तत्र = वेदे, सर्ववादाविरोधिनी = द्वैताद्वैतादिवादाविरोधिनी, एकपदागमा= एकं पदं प्रणवरूपम् आगमः = बोधकं यस्याः सा । तथा च श्रुतिः "ओमित्येकाक्षरमुद्गीथमुपासीतेति" इति । प्रणवरूपेण प्रकर्षेण नौति स्तौतीति प्रणवः, प्रणवो हि ब्रह्म स्तौति इति प्रणवेन ब्रह्मणस्तादात्म्यात् प्रणव एव ब्रह्म, तेन युक्ता विद्या एव, अर्थाद् यस्यां विद्यायां प्रणवः सा एव, विद्या विशुद्धिः सम्भ्रान्तिरहिता, सत्या च । यथा मार्गो ग्रामाद् ग्रामान्तरं गच्छति, एवं प्रणवविद्या सर्ववादान् संस्पृशती असम्भ्रमयंश्च साधकान् ब्रह्म प्रापयति । यथा ग्रामाणां परस्परं न सारूप्यम्, कश्चिद् ग्रामः कयाचिद्रीत्या वसति, अन्यश्च तद्भिन्नया रीत्या । ग्रामाणां संस्थितिः परस्परं भिन्ना, परन्तु ग्रामाद् ग्रामान्तरं गच्छन् मार्गस्तु एक एव । स च एक एव मार्गो विरूपान् अनेकग्रामान् अतिक्रामति, अतो मार्गो ग्रामाणामविरोधी । एवं द्वैताद्वैतादयोऽनेके वादाः परस्परं विरुद्धाः, किन्तु प्रणवतत्त्वं सर्वान् वादान् ग्रामं मार्ग इव अधिगमयन् परमतत्त्वं प्रापयति । अतः प्रणवविद्या सर्ववादाविरोधिनी । द्वैताद्वैतादयः सर्वे एनां विद्यां स्वीकुर्वन्ति ।

छान्दोग्योपनिषदि 'प्रणव एव सूर्यः' इति सुस्पष्टं प्रतिपादितम् । अयं प्रणवात्मकः सूर्यः सर्वदा रोति ( नदति ) अत एव रविरिच्युच्यते । अस्य प्रणवस्य स्वरूपद्वयम्—

१. एकेन स्वरूपेण आकाशे रश्मिभिः प्रकाशते। प्रणवात्मकस्य सूर्यस्य एते रश्मयो ग्रामाद् ग्रामान्तरं गतो मार्ग इव लोकाल्लोकान्तरं व्याप्ताः। एभी रश्मिभिः प्रतिशरीरं स्थितानि नाडीचक्राणि सम्बद्धानि। हंसात्मा जीवः स्वकर्मानुसारं मृत्युकाले नाडीसम्बद्धसूर्यरश्मिद्वारा विभिन्नान् लोकान् गच्छति। योगिनस्तु मूर्द्धस्थानं गतया सूक्ष्मनाड्या सम्बद्धेन रश्मिमार्गेण सूर्यमण्डलं गत्वा ब्रह्माण्डद्वारभूतं तञ्च भित्त्वा परं पदं यान्ति। यद्यपि सर्वे लोकाः सौररश्म्यन्तर्गताः, सूर्यस्य भुवनकोशकेन्द्रत्वात्; तथापि सूर्यमण्डलप्रवेशाभावात् रविमण्डलमतिक्रान्तुमयोगिनोऽसमर्थाः। किञ्च विजीहर्षवो योगिनः सूर्यरश्मिमाध्यमेन स्वाभीष्टलोकं प्रविश्य यथेच्छं विहरन्ति।

२. द्वितीयस्वरूपेण तु रश्मीन् संहृत्य सर्वेषां हृदि तिष्ठति। इदमेव प्रणवस्य विशुद्धं स्वरूपम्। एकमात्रस्य प्रणवस्याभिध्यानात् पार्थिवो लोकः प्राप्यते। ह्रस्वादिमात्राभेदेन प्रणवध्वनिः पञ्चविधः—इत्यग्रे प्रणवभेदनिरूपणावसरे प्रतिपादयिष्यते। सूर्यपुराणे—

नत्वा सूर्यं परं धाम ऋग्यजुःसामरूपिणम्।

इत्युक्त्या वेदत्रयं सूर्यः, यद्वा सूर्यो वेदत्रयमयः, प्रणवश्च वेदस्य घनीभूतप्रकाशः, तर्हि सूर्यः प्रणवस्यैव बाह्यस्वरूपभूतः।

**प्रणवस्य भेदाः**

अयं प्रणवः पञ्चविधः। तदुक्तं स्वच्छन्दतन्त्रस्य षष्ठे पटले—

ह्रस्वाकारबिरिञ्चिजागरधरित्र्याद्या हि ये पञ्चकाः,
शक्त्याद्याश्च तथैव शङ्करनुतेः पूर्णविमर्शात्मनः।
ये प्राप्तप्रणवाभिधाः कुशलवल्लेऽशेपि विश्वप्रथाः,
तं पञ्चप्रणवं स्मरामि सततं स्वच्छन्दधामाप्तये॥ इति।

पञ्चानां मध्ये प्रत्येकं प्रणवो ह्रस्वाकारादीनां समाहारभूतः। ह्रस्वदीर्घप्लुतसूक्ष्मसूक्ष्मतरोच्चारणभेदेन एकं पञ्चकम्। अकारोकारमकारबिन्दुनादाख्यवाचककलानां द्वितीयं पञ्चकम्। तद्वाच्यानां ब्रह्म-विष्णु-रुद्रेश-सदाशिवानां तृतीयं पञ्चकम्। तदधिष्ठेयधराप्रकृतिमायेश्वरसदाशिवतत्त्वानां चतुर्थं पञ्चकम्। वर्णोच्चारयित्रवस्थानां जागरस्वप्नसुषुप्तितुर्यतुर्यातीतानां पञ्चमम्। इति।

एवमयं प्रणवः पञ्चपञ्चकसंयुक्तः। स्थूलाः शक्तिव्यापिन्यादिकलाः तद्वाच्यतदुच्चारणकलादिरूपाश्च सूक्ष्मदशाः प्रणववाच्याः। प्रकर्षेण नूयते स्तूयते अभेदपरमार्थतया विमृश्यते अशेषविश्वनिर्भरं पारमेश्वरं रूपं येन स प्रणवो निष्कलनाथः। तदभिन्नव्याप्तिकः ओकारोऽपि। यथा मृगमदकुलकस्य एकदेशलेशो

मृगमद एव उच्यते, तथैव अकारादिकलानां मध्ये प्रत्येकं प्रणववाच्यम्। अयं प्रणवः प्रतिश्वासम् उच्चारोन्मीलितहंसपदानुलग्नात्मकत्वात् सततमुच्चार्यते। तत्र 'हंसानुलग्नः प्रणवात्मको ध्वनिः सकलमन्त्ररहस्यार्थमयः'—इत्येवं भावनया प्रणवस्य यो जपः, स एव सकलमन्त्राणां यथार्थजपः। तत एव सिद्धिर्जायते।

उक्तञ्चैतत् तत्रैव ग्रन्थे—

जपित्वाऽक्षरलक्षं तु बहुरूपस्य सुव्रते!
पञ्चप्रणवसंयोगाज्जपतः सिद्ध्यति ध्रुवम् ॥ ३ ॥
मुच्यते न तु सन्देहो भेदनात् प्रणवस्य तु।
ह्रस्वं दीर्घं प्लुतं सूक्ष्ममिति सूक्ष्मं परं शिवम्।
प्रणवं पञ्चधा ज्ञात्वा भित्त्वा मोक्षो न संशयः ॥ इति।

षण्मुखमुद्रया ह्रस्व-दीर्घ-प्लुत-सूक्ष्मातिसूक्ष्मस्वरूपं प्रणवमुच्चारयेत्। षण्मुखमुद्रां विधाय कुम्भकेन श्वासमन्तः प्रपूर्य रेचकं कुर्वन् कञ्चित् कालं मात्रात्रयात्मकः प्लुतः, ततः परं मात्राद्वयात्मको दीर्घः, ततः परं ह्रस्वः, ततश्च ततोऽपि सूक्ष्मः, ततः परमतिसूक्ष्मः प्रणवः परस्परमनुलग्नतया उच्चारणीयः। अकारादिवाच्यब्रह्मादिस्वरूपविमर्शेन प्रादुर्भूतं व्याप्तिरूपं ज्ञानमेव प्रणवस्य भेदनम्। प्रणवध्वनिमुच्चरन् सूक्ष्मातिसूक्ष्मयोः बिन्दुनादयोरुपरि अर्द्धचन्द्रादि-नादनादान्तादिदशा अपि अनुसर्तव्याः। अर्थाद् रेचकेन सह प्रणवमुच्चरन् यावान् स्थूलो ध्वनिः स्यात्, तावत एव स्थूलतत्त्वस्य ध्यानम्। स्थूलध्वनेरनन्तरं क्रमशो ध्वनिः सूक्ष्मो भवति, सूक्ष्मे ध्वनौ सूक्ष्मतत्त्वस्य ध्यानम्। अतिसूक्ष्मे ध्वनौ च उन्मनापदं स्मर्तव्यम्। एवम् उन्मनापदासादनेन परं भावस्वरूपं ज्ञात्वा मोक्षमेति।

उक्तञ्च स्वच्छन्दतन्त्रस्य चतुर्थे पटले—

सूक्ष्मसूक्ष्मतरैर्भावैरेवमेवं त्यजेत् प्रिये ॥ २६७ ॥

प्रणवस्य प्लुताद्यतिसूक्ष्मान्तध्वनिभिर्निखिलं चित्तमलं विधूयते। चित्तञ्च परिमार्जितं भवति। ध्वनिद्वारा न केवलं आन्तरिकमलस्य विशोधनरीतिः, अपि तु पराश्रव्यध्वनिद्वारा वस्त्रादिमलमपि प्रक्षाल्यते[1]। पराश्रव्यध्वनिरपि अव्यक्तात्मकः। यदि ध्वनिद्वारा वस्त्रमलं विधूयते, तर्हि प्रणवध्वनिद्वारा कथं न चित्तमलं विधूयेत! अत्र नूतनैर्ध्वनिवैज्ञानिकैरपि सुदृढो विश्वासः कर्तव्यः। ह्रस्वाकारादयो ये पञ्च प्रणवाः, त अपररूपाः। अन्यतन्त्रसिद्धान्तवैलक्ष्येण पररूपा अपि पञ्च प्रणवाः। तद्यथा—

१. "कपड़ों की, विशेषतः ऊनी कपड़ों की, धुलाई पराश्रव्यध्वनि से बहुत ही उत्तम और शीघ्र होती है"—श्री ललितकिशोरसिंह, एम० एस-सी० कृत, ध्वनिविज्ञान, पृ० सं० २३४।

परमात्मा शिवो हंसस्त्वपरेण समन्वितः ।
परतः प्रणवान् पञ्च पुनरेव वदाम्यहम् ॥ २५ ॥

शक्तिश्च व्यापिनी चैव समनात्मा च निष्कलः ।
उन्मना च तथा देवि प्रणवाः पञ्च कीर्त्तिताः ॥ २६ ॥

तदेतावतो विश्वस्य भित्तिभूतः—

परतः परमो हंसः सर्वं व्याप्य व्यवस्थितः ।
( स्व० त०, प० ६ )

यो निर्णीतचरः परमो हंसः स परतः, प्रकृष्टतया परापरभेदभिन्नं प्रणवपञ्चकं, तद्द्वारेण च विश्वं स्थित इति । स एव परमोपादेयः । तदभेदविमर्शमयत्वेन निष्कलभट्टारकोऽपि ।

एते वै प्रणवाः, पञ्च परापरविभागशः ॥ २७ ॥
( स्व० त०, प० ६ )

परापरविभागशः पञ्चपञ्चात्मकाः प्रणवा हंसे तिष्ठन्ति । अनयोर्मध्ये केवलमपर एव प्रणवः पञ्चपञ्चात्मकः । परन्तु प्रणव एकः पञ्चात्मकः । परापरप्रणवस्य सम्पर्कात् हंसोऽपि परापरस्वरूपकः । हंसेन च एते प्रणवाः प्रणामिताः । अर्थाद् यथा विमर्शो हंसध्वन्यनुसन्धानाद् अनुभूयते, तथा प्रणवेनापि; हंसेन तस्यानुलग्नत्वात् । सर्वत्र व्याप्तोऽपि हंसः प्रणवयोगं विना अभिव्यक्तो न जायते, किन्तु एक एव अद्वितीयः, सर्वमन्त्रवीर्यभूतः अविचलद्रूपः । अतएव अनुच्चार्यः । न केनचित् प्रतिनियतेन रूपेण स्थितः । यदा च प्रणवघटकेन ऊस्वरेण संयुज्यते हंसः, तदा ऊर्ध्वं तालवादिस्थानमारोहति । महामायाविमोहितधियः प्रतिश्वासं स्वतः उच्चरितमिममनाहतध्वनिपरमार्थस्वरूपं न जानन्ति ।

प्रतिप्राणि स्थितो हंसात्मा जीवो निर्गुणसगुणभेदेन द्विविधः । प्रणवरहितो हंसो निर्गुणः, अयं निर्गुणो हंसः स्वातिरिक्तस्याभावाद् एकः, नित्यत्वाच्च कालवर्जितः ।

ऊकारात्मकेन प्रणवेन युक्तः सन् सगुणः प्रोच्यते । ऊकारोऽपि अकाराकारमकारनादबिन्दु इति पञ्चप्रणवान्तर्गतत्वात् 'प्रणवः' उच्यते । यद्वा, अत्र ऊकारो नादबिन्द्वादीनामपि उपलक्षणम् । पञ्चमः षष्ठश्च स्वरौ उपलक्षणतया च नादबिन्द्वादयः प्रणवाः, प्रणवस्य च गुणाः । एते नादबिन्द्वादिगुणा अनाहतनादस्य ऊर्ध्वाधःप्रसरणहेतुधर्माः शक्तिरूपाः । उक्तञ्चैतत्—

षष्ठश्च पञ्चमश्चैव तस्य देवि गुणाः स्मृताः ।
सगुणः सकलो ज्ञेयो निर्गुणो निष्कलः शिवः ॥

सकलो ग्रहसंयुक्तो निष्कलो भावमाश्रितः।
सकले जप्यमाने तु जप्तो भवति निष्कलः॥
( स्व० त०, प० ६ )

ग्रहसंयुक्तः=अकारोकारमकाराद्युच्चारणयुक्तः। भावमाश्रितः=उन्मनाख्यभावमाश्रितः। तदित्थमनाहतध्वनिपरमार्थस्वरूपो हंसः प्रणवश्च परस्परमनुलग्नत्वात् परापरस्वरूपैक्याच्च एकमेव तत्त्वम्। अपरप्रणवेन युक्तत्वाद् हंसस्य अपरं स्वरूपं स्वीक्रियते, प्रणवरहितश्च परमुन्मनारूपं स्वरूपम्—इत्येवं हंसः परापरविभागेन स्वरूपवान्। प्रणवस्यापि अपरं स्वरूपं पञ्चपञ्चात्मकम्। परस्वरूपं तु शक्त्याद्युन्मनान्तमिति प्रणवोऽपि स्वरूपवान्। उभयोश्च परस्परमनुषक्तत्वाद् ऐक्यम्।

**प्रणवानुलग्नहंसात्मना अनुभूता एव मन्त्राः सिध्यन्ति**

यावत्कालमनाहतध्वनिपरमार्थस्वरूपहंसात्मना मन्त्रस्योच्चारणं न स्फुरति तावत्कालं मन्त्राः न सिद्धिप्रदाः। यथार्थस्वरूपज्ञानमेव शब्दसंस्कारः, न तु केवलं सन्धिक्रियाकारकसंशोधनम्। शब्दानां यथार्थस्वरूपज्ञानञ्च अनाहतध्वन्यात्मना तेषां स्फुरणम्। अनया रीत्या संस्कृते सति शब्दः स्वर्गे लोके च कामधुग् भवति, नान्यथा। केवलं व्याकरणप्रक्रियया संस्कृतः शब्दो न यथाकामं कामधुक्, किन्तु अल्प एव। अतएव भगवता पतञ्जलिना महाभाष्यस्य पस्पशाह्निके उक्तम्—

'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवति' इति।

अत्र 'सम्यग्ज्ञातः' इत्युक्तम्। शब्दानाञ्च सम्यग्ज्ञानम् अनाहतध्वन्यात्मना हृदि तेषां स्वतः स्फुरणमेव; समेषां शब्दानामनाहत एव प्रतिष्ठितत्वात्।

एतदुपोद्बलकं प्रमाणं यथा—

तन्त्रमन्त्राश्च वर्णाश्च प्रतिष्ठां यान्ति नान्यथा।
तस्य बोधाद् विमुच्यन्ते अहिकञ्चुकवत् प्रिये॥ ३१॥
( स्व० त०, प० ६ )

मन्त्रा मालामन्त्रसम्बन्धिनो मातृकावर्तिनश्च वर्णाः सर्वे अनाहत एव प्रतिष्ठिताः। नहि परां स्फुरतां विना कस्यापि स्फुरणं घटते। उक्तञ्च श्रीस्पन्दे 'तदाक्रम्य बलं मन्त्राः' (२।१०) इत्यादि। अत्रेदं बोद्धव्यम्–यस्याः अहमित्याख्या सा एव प्राणमाश्रिता हंसाख्यां लभते। वस्तुतस्तु 'याऽहमित्युदिता सा परावाक्' इत्युक्तम्। अहमिति, हंसश्च—इत्युभयमप्येकमेव तत्त्वम्। प्रणवेऽपि अहम् हंसः 'सोऽहम्' इति ध्वनितत्त्वानुषक्तत्वाद् अभिन्नः। हकारसकारयोरपि प्रकाशविमर्शात्मकशिव-

शक्तिस्वरूपतत्त्वात्। अतः 'हंसः, अहम्' इत्युभयोर्मन्त्रवीर्यत्वप्रतिपादने न कोऽपि विरोधः। यावन्तं कालं देहाद्यहन्तां विहाय परावाक्स्वरूपपूर्णाहन्तात्मना यद्वा हंसात्मना स्फुरणं न जायते, तावन्तं कालं न मन्त्रसिद्धिः। मन्त्राः शरदभ्रवदेव निरर्थकाः। उक्तञ्च—

आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत्।
गुरोर्लक्षणमेतावद् आदिमान्त्यं निवेदयेत्॥

देहादेश्चिदात्मनि अहन्तारूपे परभैरवे समावेशनरूपप्रणिपातं कृत्वा अनाहतध्वनिपरमार्थस्वरूपे हंसे मन्त्रस्य भूयो विमर्श एव जपः।

उक्तञ्च स्वच्छन्दतन्त्रस्य द्वितीये पटले—

वाङ्निरुद्धः सुचित्तात्मा राजीवासनसंस्थितः।
मूलमन्त्रं समुच्चार्य नादे लीनं विचिन्तयेत्॥ १३८॥

राजीवासनसंस्थितः = पूर्वोक्तदिव्यकरणाधिरूढः, वाङ्निरुद्धः = पश्यन्त्यादिरूपा वाक् अहन्तैकसमरसीभूता परविमर्शमयी कृता येन सः वाङ्निरुद्धः। मूलमन्त्रम् = सकलं निष्कलं वा प्रणवम्, समुच्चार्य = सम्यक् अक्षरसन्तानमिति क्रमेण ऊर्ध्वं चारयित्वा 'नास्योच्चारयिता कश्चित्' इति रीत्या नित्योदितस्फुरतात्मनि लीनम् तन्मयीभूतं विशेषेण तदनुप्रवेशात्मना तन्मन्त्रं चिन्तयेत्। मन्त्रमनाहतध्वनिपरमार्थस्वरूपप्रणवानुलग्नहंसात्मनि ध्वनौ विमृशन् मन्त्रदेवतामपि सम्यग् आत्मैक्येन चिन्तयेत्। एवं शुद्धबोधात्मकत्वेनाऽन्तर्बाह्योदयाद् एकोऽपि जपो लक्ष्यसंख्याकः।

तदुक्तं जयायाम्—

एकस्य मन्त्रनाथस्यान्तर्बाह्योदितस्य च।
यदैक्यं तं जपं विद्धि लक्ष्यसंख्याधिकं मुने॥ २६॥ इति।

एवं सर्वेषां वर्णपदमन्त्राणां यथार्थस्वरूपं प्राणात्मा प्रणवानुषक्तो हंसः, पूर्णाहन्ता च। तस्मिन् विज्ञाते सति मन्त्राः, मन्त्राधिपैः सह किङ्करत्वं गच्छन्ति। अयमेव वर्णपदवाक्येषु विशेषेषु सामान्यतयाऽनुभूयमानत्वाद् ध्वनितत्त्वम्। अक्षरमात्रे ध्वन्यंशोऽनुभूयत एव। अतएव ताल्वादिध्वनिधर्माणां वर्णेष्वनुभवः। स ध्वनिः सर्ववर्णपदोपादानभूतो नादनाम्नाऽपि प्रोच्यते। तस्मिंश्च कारणीभूते नादे सर्वे वर्णाः सूक्ष्मरूपेण वर्तन्त एव। बीजे फलपुष्पादिवत्। किञ्च, सर्वासु भाषासु ध्वनेरतिरिक्तं न किमपि तत्त्वम्। या भाषा स्वज्ञानविषयीभूता तस्यां ध्वनिमयानि वर्णपदवाक्यानि श्रूयन्ते, किन्तु यथा भाषया अपरिचिता वयम्, तत्र केवलं ध्वनिमात्रं ज्ञायते। त्वरापूर्वकमुच्चार्यमाणासु तु हिमाचलपर्वतीयादिभाषासु अथ

च आंग्लजर्मनवैदेशिकभाषासु तत्तद्भाषानभिज्ञेन ध्वनिमात्रमनुभूयते। काकादि-पक्षिणोऽपि यां भाषां प्रवदन्ति, तत्र ध्वनिमात्रं विमृश्यते। एवं ज्ञाताज्ञातासु भाषासु ध्वनिः सामान्यतयाऽनुस्यूतः। सामान्यतयाऽनुस्यूतत्वाच्च ध्वनिरेव समासां भाषाणां तत्त्वम्। स च ध्वनिः प्राणमाश्रितोऽनाहतपरमार्थस्वरूपो निखिलवेद-प्रपञ्चभूतो मन्त्रवीर्यात्मा पूर्णाहन्तात्मा हंसः। हंसविद् यद्वा प्रणववित् सर्वभाषां अथ च सर्वभूतरुतं जानाति। अयं ध्वनिः अव्यक्तेषु शब्देषु, अथ च अकारादिवर्ण-विशेषेषु सामान्यतया श्रूयते। अत एते मातृका वर्णाः ध्वनिपदवाच्याः॥

४.

# लोकमातृका ध्वनयः

## अकारादिध्वनीनां वर्गभेदनिरूपणम्

उन्मनापदं प्राप्तेः पूर्णाहन्तात्मनाऽनुभूयमानस्य 'सोऽहं हंसात्मना स्वतः समुच्चरतः' हृद्देशेऽनाहतनादाख्यया अथ वैयाकरणसम्प्रदाये अन्तःस्फोटाख्यया लब्धप्रतिष्ठस्यास्य ध्वनेः मरीचिरूपाः सर्वे वर्णाः, सर्वेषु लोकेषु सर्वं व्याप्य प्रसृताः। अन्तर्नादात्मकस्य सूर्यस्य मरीचिरूपाः सर्वे वर्णाः अष्टवर्गेषु विभक्ताः। तद् यथा—

| | | |
|---|---|---|
| १. अवर्गः | = | अकारादयः षोडशस्वरूपाः। |
| २. कवर्गः | = | कादिङान्तः |
| ३. चवर्गः | = | चादिञान्तः |
| ४. टवर्गः | = | टादिणान्तः |
| ५. तवर्गः | = | तादिनान्तः |
| ६. पवर्गः | = | पादिमान्तः |
| ७. यवर्गः | = | 'य र ल व' इति चत्वारो वर्णाः |
| ८. शवर्गः | = | 'श ष स ह' ,, ,, ,, |

वर्णानामयं विभागः तान्त्रिकदृष्टया। वैयाकरणसम्प्रदाये तु कादिमान्ता ध्वनय एव कवर्गादिनाम्ना अभिधीयन्ते। एतेषां सम्प्रदाये कादयः पञ्च वर्गाः। तान्त्रिकास्तु कवर्गाद्यतिरिक्ता ये अकारादयस्तेऽपि अवर्गादिनाम्ना अभिहिताः। तद् यथा उपर्युक्तम्। युक्तं चैतत् प्रतिभाति। यतो हि वर्गो नाम संघः, समूह इति, यथा ककारादयो ध्वनयः एकस्यां पंक्तौ पठिताः, तेषामादिभूतो यः कवर्णः, स वर्गस्तन्नाम्नाभिधीयते। एवमकारादयः स्वराः, यकारादीनि व्यञ्जनानि च, स्वपंक्तिघटकेषु प्रथमवर्णभूता ये अकार-यकार-शकाराः, तन्नामवर्गेण अभिधीयन्ताम्।

वस्तुतस्तु सवर्णानामेव एकस्मिन् वर्गे गणना समीचीनेति दृष्टया वैयाकरणैः स्थानप्रयत्नयोरैक्येन सावर्ण्यात् ककारादिवर्णानामेव कवर्गादिनाम्नाभिधानं स्वीकृतम्। अकारादीनां तु अवर्गाख्या न समीचीना; आभ्यन्तरप्रयत्नैक्येऽपि स्थानभेदात् सावर्ण्याभावाच्च। तान्त्रिकैस्तु उपासनादृष्टया तत्तद्वर्णाधिष्ठातृदेवतानामैक्यमादाय वर्गभेदः कृतः। तद् यथा अकारादिषोडशस्वराणामधिष्ठात्री महालक्ष्मीः, अतः षोडशस्वरा अवर्गनाम्ना अभिधातुमर्हाः।

**स्वरव्यञ्जनानां बीजयोनिरूपता, तेषामधिष्ठातृदेवीनां प्रकृतिविकृत्योश्च वर्णनम्**

आगमशास्त्रेषु अकारादयः षोडश स्वरा बीजनाम्ना, कादिव्यञ्जनानानि च योनिनाम्ना प्रसिद्धाः। स्वराः भैरवस्वरूपाः, व्यञ्जनानि च भैरवीरूपाणि। स्वयं राजमानतया शब्दनस्वभावतया च विश्वाक्षेपेण अकारादयः स्वराख्यां लभन्ते। एते स्वरा एव कादिव्यञ्जनानां प्रसारस्य, अथ च उल्लासस्य हेतुभूतत्वाच्च बीजव्यपदेशाः, परसंवित् स्फारस्य भेदभूताः अत एव भैरवः। कादीनां तु स्वरव्यङ्ग्यत्वेन व्यञ्जनता, अकारादिस्वरसंसर्गेण जगत्कारणत्वाद् योनिता। वर्गरूपतया संहारेण क्षकारेण च भैरवीत्वमिति बोध्यम्।

उक्तञ्च स्वच्छन्दतन्त्रस्य प्रथमे पटले—

आदिः षोडशभेदेन साक्षाद् वै भैरवः स्मृतः।
कवर्गश्च-टवर्गौ च त-प-याः शस्तथैव च॥ ३२॥

संहारेण समोपेतौ योनिर्वै भैरवी स्मृता।
मातृका भैरवं देवमवर्गेण प्रपूजयेत्॥ ३३॥

वर्गघटका एते अकारादयो ध्वनयः देवताभिरधिष्ठिताः प्राणिनामुरसि कामक्रोधादिभावं समुत्थापयन्ति। अवर्गः कादिमान्ताश्च पञ्च वर्गाः, यवर्गः, शवर्गश्च क्रमशो महालक्ष्मीः, कमलोद्भवा, महेशानी, कुमारिका, नारायणी, वाराही, ऐन्द्री, चामुण्डा—इत्येताभिः दैवीभिरधिष्ठिताः।

उक्तञ्चैतत्तत्रैव—

भैरवी कादिना पूज्या मातृवर्गैः प्रपूजयेत्।
अवर्गे तु महालक्ष्मीः कवर्गे कललोद्भवा॥ ३४॥

चवर्गे तु महेशानी टवर्गे तु कुमारिका।
नारायणी तवर्गे तु वाराही तु पवर्गिका॥ ३५॥

ऐन्द्री चैव यवर्गस्था चामुण्डा तु शवर्गिका।
एताः सप्त महामातॄः सप्तलोकव्यवस्थिताः॥ ३६॥

यद्यप्यत्र 'एता अष्ट महामातॄः' इति वक्तव्यम्; तथाप्यत्र सप्तभिरेव प्रविभज्य पूजयेत्, नारायणी-महालक्ष्म्योरैक्यात् तवर्गेणैव महालक्ष्म्या अपि पूजनात्। वर्गगणनानुसारेण तु नारायणी एव महालक्ष्मीत्याख्यया अपि अवर्गे तिष्ठति। तेन अकारादिहकारान्ता मातृका वर्णाः अष्टवर्गेषु विभज्यन्ते। उक्तञ्च—

अष्टवर्गविभिन्ना च विद्या सा मातृकैव तु।
(स्व० त०, प० १०।११४४)।

अष्टवर्गविभिन्ना तु विद्या सा मातृका परा।
( स्व० त०, प० ११।५५ )

इयं मातृका पराविद्या, मातृकाघटका वर्णाः अशेषवाच्यवाचकात्मक-जगत्स्वरूपाः, अकारादिवर्णेभ्य एव तत्त्वभुवनादीनां समुत्पन्नत्वात् पदवाक्यात्मना च वाचकत्वात् वर्गादिभेदोऽयं सम्प्रदायभेदादेव भिन्नः, नैव तस्मात् प्रतिपाद्ये वैफल्यविचिकित्सा।

अस्या मातृकायाः पराविद्यात्वमुक्तं स्वच्छन्दतन्त्रस्य एकादशे पटले—

नास्ति दीक्षासमो मोक्षः न विद्या मातृकापरा।
न प्रक्रियापरं ज्ञानं नास्ति योगस्त्वलक्ष्यकः ॥ ११९ ॥

शब्दार्थप्रतिपादका एते सर्वे अकारादिवर्णाः शिवशक्तिमयाः। एतेषां मध्ये ककारादिक्षकारान्ताः सर्वे वर्णाः समष्टिरूपेण, अथ च व्यष्टिरूपेण षट्त्रिंशत्तत्त्वानां विग्रहभूताः शिवस्वरूपिणः। अकारादिविसर्गान्ताश्च स्वराः शक्तिस्वरूपाः।

उक्तञ्चैतत् मातृकाहृदये—

ककारादिक्षकारान्ता वर्णास्ते शिवरूपिणः[1]।
समस्तव्यस्तरूपेण षट्त्रिंशत् तत्त्वविग्रहाः॥
अकारादिविसर्गान्ताः स्वराः षोडश शक्तयः।
नित्या षोडशिकात्मानः परस्परमयीयुताः॥
शिवशक्तिमया वर्णाः शब्दार्थप्रतिपादकाः।
शिवः स्वरपराधीनो न स्वतन्त्रः कदाऽप्यसौ॥
स्वराः स्वतन्त्रा जायन्ते न शिवस्तु कदाचन।

वातुलशुद्धाख्यतन्त्रमतानुसारेण अकारादि-क्षान्ताः प्रकृति-विकृति-कला-विकलेति नामभिः प्रोच्यन्ते। येभ्यो ध्वनिभ्यः स्वभिन्नध्वनीनामभिव्यक्तिः, ते ध्वनयः प्रकृतिभूताः। समभिव्यक्ताश्च ध्वनयो विकृतिभूताः। तद्यथा—

प्रकृतिः सप्तवर्णाश्च विकृतिस्तु नवार्णकः।
अकारश्च इकारश्च उकारश्च ऋकारकः॥
ऌकारश्चैव एकार ओकारश्च तथैव च॥ १२॥
एते सप्त स्वराः प्रोक्ताः प्रकृतिस्तु समीरिता॥
( वातुलशुद्धाख्यतन्त्रम्, प० २ )

---

१. डा० गोपीनाथकविराजसम्पादिते लुप्तागमसंग्रहे, पृ० १०७।

अकारादीनां दीर्घरूपसप्तस्वराः, अथ च अं अः इति स्वरद्वयं सम्मेल्य नवस्वरा विकृतयः प्रोच्यन्ते। अकारादिह्रस्वस्वरेभ्यो दीर्घस्वराणामभिव्यक्तिरेव विकृतिशब्दवाच्यार्थः। तन्त्रशास्त्रेषु एते प्रकृतिविकृतिभूताः स्वराः कलानाम्नाऽप्यभिधीयन्ते। कलापर्यायवाचकाश्च शब्दाः निम्नाङ्किताः—

कला मात्रा स्वरा जीवाः प्रकृतिर्विकृतिस्तथा।
प्राणात्मनौ च देही च कलापर्यायवाचकाः॥ १७॥

( वातुलशुद्धाख्यतन्त्रम्, प० २ )

ककारादीनामथ च यकारादीनां प्रकृतिभूतौ—अकारः ओकारश्च। इमानि ककारादिव्यञ्जनान्येव विकलाभिधानि। तदुक्तम्—

ककारादिक्षकारान्ताः वर्णाश्च विकलाः स्मृताः।
ककारादीनि वर्णानि अकारे तु समुद्भवाः॥ १९॥
ओकारे तु समुद्भूताः यकाराद्या दश स्मृताः॥ इति।

## प्रकृतिविकृतिविषये तथ्यातथ्यविचारः

एवं वर्णाद् वर्णान्तरस्य समभिव्यक्तिस्तान्त्रिकैः प्रतिपाद्यते। वस्तुतस्तु अकारादिषु सर्वेषु ध्वनिषु सर्वे ध्वनयः सन्निहिताः। सर्वेभ्योऽकारादिध्वनिभ्यः सर्वे ध्वनयः समभिव्यक्तुं शक्यन्ते; सर्वेषां ध्वनीनामेकमूलकत्वात्, मध्यमानादपर्यन्तमेकरूपत्वाच्च। अत एव शाब्दिकैः मध्यमानादात्मक-आन्तरस्फोटाङ्गीकारैः वाक्यवर्णपदभेदा नाङ्गीक्रियन्ते। अतः सर्वो ध्वनिः सर्वध्वनिस्वरूपात्मकः।

यथा मूलरूपायाः परायाः वाचः सर्वेषु अक्षरेषु व्यापकत्वात् परावाक् तेषां प्रकृतिः, यथा च जगति सर्वोऽपि पदार्थः सर्वेषु वाच्यार्थेषु सूक्ष्मरूपेण विद्यते, तथैव ध्वनिविषयेऽपि बोद्धव्यम्। अत एव स्वच्छन्दतन्त्रस्य चतुर्थपटले—

वाच्यवाचकयोगतः।
कलान्तर्भाविनस्ते वै विकृत्याद्याश्च ताः स्मृताः॥

इत्यस्य टीकायाम्—

"वस्तुतश्चेयमक्रमेव पारमेश्वरी शक्तिः स्फुरति, तत्रापि स्वस्वातन्त्र्याद् दर्पणनगरवत् क्रममप्यादर्शयति। क्रमेऽपि च पूर्वपूर्वमुत्तरत्र व्यापकतया स्थितं मृदिव घटादौ, उत्तरमुत्तरं तु पूर्वत्र शक्त्यात्मना स्थितं वृक्ष इव स्वबीजे सर्वं सर्वात्मकमेव। अतः पञ्चतत्त्वदीक्षायामनाश्रिततत्त्वपर्यन्ता भूतव्याप्तिर्भविष्यति।"

इत्यत्र 'सर्वं सर्वात्मकमेव' इत्युक्तम्।

अयं भावः—सूक्ष्मरूपेण समेषां पदार्थानां सर्वत्र सत्ता विद्यते। परन्तु

यत्र यस्य मात्रा इतरापेक्षया प्रचुरतया प्रस्फुटति, स एव पदार्थोऽभिव्यक्तः सन् इन्द्रियगोचरीभवति। इतरश्च रूपं नाभिव्यज्यते, तस्य मात्रायाः प्रचुरतया स्फुरणाभावात्, स्फुरन्त्या मात्रया च अभिभूतत्वात्। अतः सर्वेषां पदार्थानां सूक्ष्मरूपेण सर्वत्र विद्यमानत्वाद् अभिव्यक्तिक्षमसाधनद्वारा यत्र कुत्राऽपि कोऽपि पदार्थः अभिव्यक्तुं शक्यते। व्यावहारिके जगति यं पदार्थं येन रूपेण पश्यामः, तस्य पदार्थस्य तद्रूपम् आपेक्षिकसत्तावद्। यं पदार्थं यथावयवं जानीमः, स पदार्थः तावानेवेति न केनापि अवगन्तव्यम्। लोहधातुखण्डः केवलं लोह एवेति न तत्र सर्वा प्रकृतिः सूक्ष्मरूपेण सन्निहिता; परन्तु लोहभावस्य प्राधान्याद् अन्ये सर्वे पदार्थाः तत्र तिरोहिताः। अत एव अदृश्याः। लोहधातौ किमपि तिरोहितं सुवर्णादितत्त्वं प्रबोद्धय लोहधात्वपेक्षया तस्य वृद्धिं कुर्यात् तर्हि तस्य पदार्थस्य ( लोहधातुरूपेण प्रतीयमानस्य ) पूर्वं रूपम् अभिभूतं सद् अनभिव्यक्तं भवति। उद्भूतानां सुवर्णादीनां भावानां प्राबल्याच्च लोहधातुः सुवर्णादिनामरूपाभ्यामेव ज्ञायते। पारसमणिसम्पर्काच्च लोहधातोः सुवर्णात्मना प्रतीतिरिति तु लोके प्रसिद्धमेव। वस्तुतस्तु लोहधातुः सुवर्णात्मना न परिणीयते, किन्तु लोहधातुतत्त्वं सुवर्णतत्त्वेन अभिभूतं सत् तिरोहितं जायते। सुवर्णतत्त्वञ्च अभिव्यक्तं सद् दृष्टिगोचरीभवति। पदार्थे दृश्यमानरूपमभिभूय तदभिन्नरूपप्रकाशनमेव पातञ्जलयोगशास्त्रे जात्यन्तरपरिणामनाम्ना प्रोच्यते।

उक्तञ्च पातञ्जले योगदर्शने —

'जात्यन्तरपरिणामः प्रकृत्यापूरात्' इति। ( यो० सू० ४-२ )

अत्र 'परिणाम'पदेन प्रतीयमानरूपस्य तिरोहितभावः। अप्रतीयमानस्य च अभिव्यक्तिरित्येवाऽर्थो ग्रहीतव्यः।

उपरि प्रतिपादितः अभिभूताभिव्यक्तिरूपजात्यन्तरपरिणामवादो ध्वनिविषयेऽपि समूहनीयः। यम् अकारादिध्वनिं वयं श्रोत्रेण गृह्णीमः, स तथारूप एव इति न, किन्तु तत्र एकस्मिन् ध्वनौ सर्वे ध्वनयः सन्निहिताः। यदि सर्वेषां पदार्थानां प्रकृतिः सर्वत्र व्याप्ता, अतएव सर्वोऽपि पदार्थः सर्वत्र अभिव्यक्तुं शक्यते; तर्हि सर्वेषां वर्णपदमन्त्रवाक्यानामपि प्रवृत्ति या परावागाख्या सा सर्वत्र अकारादिध्वनिषु व्याप्ता। अतो यस्मात् कस्मादपि ध्वनेः सर्वे ध्वनयोऽभिव्यक्तुं शक्यन्ते। यथा कस्यचित् पदार्थस्य दृश्यमाने रूपेऽभिभूते सति अन्यद् रूपम् अभिव्यज्यते; तथैव अकारादिध्वनेः श्रूयमाणं यद्रूपम्, तदभिभूय विवक्षितध्वन्यात्मना अभिव्यक्तुं शक्यते। अतएव भाषानुवादकन्त्रेण[1] एक एव वर्णः

१. 'युनाइटेड स्टेट आफ आर्गनाइजेसन' इत्यत्र विद्यमानम् ट्रान्सलेटरमशीनाख्यं यन्त्रमेव भाषानुवादकयन्त्राभिधम्।

स्वस्वरूपभिन्नानेकवर्णात्मना युगपदेव अभिव्यज्यते। भाषानुवादकयन्त्रेण यस्यां कस्यामपि भाषायां क्रियमाणं भाषणं युगपदेव अनेकासु भाषासु अनूद्यमानं श्रूयते। यदि अकारादिध्वनीनां मूलप्रकृतेः आपूरणात् (व्यापकत्वात्) सर्वो ध्वनिः सर्वात्मको न स्यात्तर्हि भाषानुवादकयन्त्रस्य साफल्यं न स्यात्। सर्वेषामकारादिध्वनीनां सर्वात्मकत्वादेव तेषां शिवात्मकताऽपि समीचीना। एवं सर्वेषामकारादिध्वनीनां सर्वमयत्वेऽपि तेषां प्रकृतिविकृतिभेदेन विभाजनं गौणमुख्यप्रतिपादनार्थम्, तान्त्रिकसम्प्रदायपरम्परानिर्वाहार्थञ्च।

वस्तुतस्तु सर्वेषाम् अकारादिध्वनीनां सर्वमयत्वेऽपि परस्परं सर्वेषां प्रकृतित्वप्रतिपादने गौरवम्। अतः समेषां वर्णानां परावाग्रूपमेकमेव मूलं स्वीकर्तव्यम्। सा एव परामातृका कण्ठताल्वादिस्थानेभ्यः अकाराद्यात्मना स्फुटति। सर्वेषां लोकानां समुत्पादकत्वाद् इमे अकारादि-हान्ता ध्वनयो मातृकापदेन व्यवह्रियन्ते। सर्वेषु ध्वनिषु विशिष्टा शक्तिरस्तीत्ययं विषयः कामधेनुतन्त्रे, प्रत्यभिज्ञादिशास्त्रेषु च बहुशः चर्चितः।

तद्यथा प्रत्यभिज्ञाशास्त्रे—

'सवर्णेन अण्डत्रयं व्याप्तम्' इति।

अर्थात् सवर्णेन निखिलं जगद् व्याप्तम्।

परात्रिंशिकातन्त्रे तु सकारः तृतीयब्रह्मात्मना स्मृतः। तद्यथा—

'तृतीयं ब्रह्म सुश्रोणि' इति।

तृतीयं ब्रह्म 'सद्' इति गीतायां ब्रह्मणस्त्रिविधेन निर्देशेन समुपलभ्यते। तद् यथा—

'ॐ तत् सद् इति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः॥

(भ० गी० अ० ७, श्लो० २३)

एवमन्यत्र वर्णानामपि स्वरूपं कामधेनुतन्त्रे विशदरूपेण व्याख्यातम्। तत्र एतदीयोंऽशो द्रष्टव्यः। अकारादिवर्णाः न केवलं ध्वनिस्वरूपाः श्रुतिमात्रगोचराः, प्रत्युत तेषु विश्वस्य सृष्टिस्थितिसंहाराणां शक्तितत्त्वानि सन्निहितानि।

## अकाराद्यक्षराणि नीलपीतादिवर्णवन्ति, अत्र पातञ्जलमहाभाष्यस्य सम्मतिः, नीलपीतादिवर्णवशाद् निद्राद्यवस्थावाप्तिश्च

अकारादिध्वनिभिर्नीलपीतादिचित्राण्यपि निर्मातुं शक्यन्ते, ध्वनीनां नीलपीतादिवर्णविशिष्टत्वात्। परन्त्वियं क्रिया उद्बोधितशब्दशक्तिभिर्विद्वद्भिरेव सम्भाव्यते, न तु सर्वैः। लोके यथा नीलपीतादिबर्णविशिष्टा एव पदार्था भवन्ति,

नीलपीतादिरूपहीनो न कोऽपि पदार्थः, तथैव ध्वनयोऽपि नीलपीतादिवर्णवन्तः। नीलपीतादिगुणविहीनो न कोऽपि ध्वनिः। विषयैरनुपप्लुतचेतसो महर्षयः इमं विषयं स्वज्ञानचक्षुषा सम्यक्तयाऽनुसंहितवन्तः।

तद्यथा मातृकाविवेके—

'अकाराः सर्वदेवत्वं रक्तं सर्ववशङ्करम्॥

इत्यादिना प्रत्यक्षं वर्णविशेषः उक्तः।

'सर्वे वर्गाः शुक्लाः' इत्यपि क्वचित्। सुभगोदयतन्त्रस्य चन्द्रकला-व्याख्यायां तु—

अकाराद्याः स्वरा धूम्राः सिन्दूरास्तु कादयः।
डादिफान्ता गौरवर्णाः अरुणा पञ्चवादयः॥
लकाराद्याः काञ्चनाभाः हकारान्त्यौ तडिन्निभौ।

वातुलशुद्धाख्यतन्त्रस्य द्वितीये पटले तु प्रत्येकमकारादिध्वनेः नीलपीतादि-रूपाण्युक्तानि। तद्यथा—

अकारः सर्वदैवत्वं रक्तं सर्वं वशीकरम्।
अकारः स्यात् परा शक्तिः स्वेदमाकर्षणं भवेत्॥ ३३॥

इकारो विष्णुदैवत्यं श्यामं रक्षाकरं भवेत्।
मायाशक्तिरितीकारः पीतं स्त्रीणां वशीकरम्॥ ३४॥

उकारो वासुदैवत्यं कृष्णं राज्यवशीकरम्॥ इत्यादि।

प्रमाणतया उपर्युद्धृताः श्लोकाः अकारादिध्वनीनां नीलपीतादिगुणप्रति-पादनपराः। इदञ्च नीलपीतादिरूपम् अकारादिध्वनीनां यद् उच्चार्यमाणं श्रोत्रेण च गृह्यमाणं स्वरूपम् तस्यैव, न तु हस्तपादादिविशिष्टस्य देवतात्मकस्य यद्वा लिप्यात्मकस्येति बोद्धव्यम्। अकारादिध्वनीनां हस्तपादाद्यवयवविशिष्टे शरीरमपि भवति।

क्वचित्तु एकस्यैव अक्षरस्य वर्णभेदो दृश्यते।

तद्यथा मातृकाविवेके—

अकारः सर्वदेवत्वं रक्तं सर्ववशङ्करम्'॥ इति।

अत्र अकारो रक्तवर्णः। सुभगोदयतन्त्रस्य चन्द्रकलाव्याख्यायाम्—

अकाराद्याः स्वरा धूम्राः। अत्र अकारो धूम्रवर्णः। एवम् एकस्यैव अकारस्य आचार्यभेदेन वर्णभेदो दृश्यते। क्वचित्तु 'सर्वे वर्गाः शुक्लाः' इत्येवमपि प्रोक्तम्।

वस्तुतस्तु विचार्यमाणे सति अत्रोद्घृतेषु आप्तवाक्येषु न कोऽपि विरोधः। यत्र 'सर्वे वर्गाः शुक्लाः अकाराद्याः स्वरा धूम्राः' इत्येवं रीत्या अकारादिध्वनीनां वर्णनिर्देशः समुपलभ्यते, तत्र समष्टिरूपेण समेषां अकारादिध्वनीनां वर्णनिर्देशो बोद्धव्यः। न तु व्यष्टिरूपेण प्रत्येकं ध्वनेः समेषां नीलपीतकृष्णहरितादिवर्णानां समरसीभूतः श्वेतवर्णः। यतो हि समेषां नीलपीतादिरङ्गानां मिश्रणे कृते सति श्वेतवर्णाः समुत्पद्यन्ते। सूर्यस्य केचिद् रश्मयो रक्ताः, केचिच्च पीताः। एवं सूर्यः सर्ववर्णविशिष्टवान्। सूर्ये समेषां नीलादिवर्णानां समरसो विद्यते। अत एव खे दृश्यमानः सूर्यः श्वेतो दृश्यते। अकारादि-हान्ताः मातृकाघटका वर्णाः केचिन्नीलाः, केचिच्च पीताः। समेषु वर्णेषु समरसीभूतेषु सर्वे वर्गाः समष्टीभूतनीलपीतादिरश्मिस्वरूपः सूर्य इव श्वेतवर्णविशिष्टा महर्षिभिरनुभूताः। एवं यत्र 'अकाराद्याः स्वरा धूम्राः' इत्येवं प्रोक्तम्, तत्र अकारादीनां समष्टिरूपेण वर्णनिर्देशो बोद्धव्यः। यथा लोके सूर्यस्य नीलपीतादिषु रश्मिषु सत्स्वपि समष्टिरूपेण 'सूर्यरश्मयः श्वेताः'—इत्येवं सामान्येन व्यवह्रियते, तथैव श्वेतनीलपीतादिषु स्वरेषु सत्स्वपि तेषां समष्टिरूपेण 'अकाराद्याः स्वरा धूम्राः' इत्येवं निर्देशः कृतः। यत्र अकारादिध्वनीनां वर्णविषये महर्षिवाक्येषु मतभेदो दृश्यते, तत्र अनया दिशा निभालनीयः।

वस्तुतस्तु अकारादिध्वनयो रागद्वेषादिभावानामपि समुत्थापकाः; ज्ञानस्य शब्दानुविद्धत्वात्। अतस्ते सर्वे ध्वनयो हृद्गतभावनया प्रभाविताः। भावनानुसारेण ध्वनयोऽपि नीलपीतादिवर्णवन्तः समभिव्यज्यन्ते। क्रोधे समुदिते सति प्रोच्चारिता ध्वनयो रक्ताभाः स्युः। शान्ते समुदिते सति पीता यद्वा श्वेताः। अयं सिद्धान्तः अकारादिध्वनीनां वर्णविषये महर्षीणां मतभेदेन पुष्यते। ध्वनीनां हृद्गतभावैः सह अविनाभूतः सम्बन्धो विद्यते।

ऐतरेयोपनिषदि एतदेव तथ्यं प्रतिपादितम्। तद्यथा—

'वाक् च मनश्च देवानां मिथुनम्'। ( ५।३३ )

जैमिनीयोपनिषदि च—

'तस्य एषा कुल्या यद्वाक्'। ( जै० उ०, ब्रा० १।५८।३। )

'वागिति मनः' ( जै० उ०, ब्रा० ४।१२।१८ ) इत्याद्युक्तम्।

अकारादिध्वनीनां नीलपीतादिवर्णवत्तां शब्दवैज्ञानिकाः सम्यक्तया जानन्ति। वायसफिगर्जाख्यग्रंथस्य[1] लेखिका मिस वट्सहयूजो लन्दननगरस्थे लार्ड

१. डॉ० चमनलालगौतमस्य 'मन्त्रविज्ञान प्रथमखण्डः'—इत्याख्ये ग्रन्थे ३३तमे पृष्ठे एतदीयोंऽशो द्रष्टव्यः।

लिटनशिल्पसदने शब्दविज्ञानस्य स्फारं ( चमत्कारं वा ) प्रादर्शयत। सा विदुषी स्वनिर्मितम् इडोफोनाख्यं सङ्गीतयन्त्रं वाद्यविधिना अवादयत्। सङ्गीतयन्त्रनिःसृतैर्ध्वनिभिः नीलपीताद्यनेकरूपाणि निर्मितानि। सा एकदा स्वसङ्गीतयन्त्रं वादयन्ती डेजीनामकं पुष्पं सङ्गीतयन्त्रोद्भूतध्वनिनाऽरचयत्। केन प्रकारेण सङ्गीतयन्त्रस्य वादनेन डेजीनामकं पुष्पं निर्मितमित्यस्य व्याख्यामपि सा कृतवती। अतः परं पैनसी नामकं पुष्पम्, मत्स्यमकराद्यनेकेषां समुद्रोत्पन्नानां जीवानाम्, वृक्षपाषाणादीनां च रूपाणि सा स्वसङ्गीतयन्त्रध्वनिना निर्मितवती[1]।

उपर्युद्धृतेन विवरणेन निश्चीयते—'अकारादिध्वनयो नीलपीतादिवर्णवन्तः, तैः सह हृद्गतभावानाम् अविनाभूतः सम्बन्धः' इति। यदि अकारादिध्वन्तो न स्युः, तेषां हृद्गतभावैः सह सम्बन्धो न स्यात्तर्हि इडोफोनयन्त्रान्निःसृतैः सङ्गीतध्वनिभिः पुष्पादीनाम् अनेकवर्णचित्रं निर्मितं न स्यात्।

किञ्च, फ्रांसदेशवास्तव्या एका विदुषी शब्दविज्ञानस्य परीक्षणं कृतवती। एकदा सा कैथोलिकमतस्यानुयायिनं रोमदेशवास्तव्यम् आस्तिकजनं धार्मिकं गीतं श्रावयितुमामन्त्रयत्[2]। तया आहूतः स धार्मिकं गीतमगायत। भक्तियुतैर्धार्मिकसङ्गीतध्वनिभिः चित्रपटे स्वक्रोडे शिशुं सन्निवेशितवत्याः कस्याश्चित् स्त्रियाश्चित्रं निर्मितम्। यस्याः स्त्रियाश्चित्रं निर्मितम् सा मरियमाख्या, तस्याः क्रोडं समुपविष्टस्य यस्य शिशोश्चित्रम्, तस्या शिशोर्नाम ईशा इति। फ्रांसदेशवास्तव्यया विदुष्या आहूतः स ईशाख्यस्य ईश्वरस्य स्तुतिं कृतवान्। अतो भक्तियुक्तहृद्गतभावप्रभावितसङ्गीतध्वन्यनुरूपमेव चित्रं चित्रफलके प्रादुरभूत्।

एवमन्यदपि सा विदुषी शब्दविज्ञानस्य परीक्षणं कृतवती। एतत्सर्वं विवरणम् अकारादिध्वनीनां नीलपीतादिवर्णवत्त्वं पोषयति। किन्तु ध्वनिद्वारा इयं क्रिया सर्वैः कर्तुं न शक्यते, उद्बोधितशब्दशक्तिभिरेव तादृक्कार्यं सम्पादयितुं शक्यम्। शब्देषु बोध्यबोधकरूपा अथ च जगत्सृष्ट्यादिकर्तृत्वरूपाः स्ववाच्यार्थानुरूपचित्रनिर्माणसक्षमरूपाश्चेति विविधाः शक्तयः सन्निहिताः। यः शब्दनिष्ठां यां शक्तिं साधनद्वारा उद्बोधितवान् स तच्छक्तिजन्यं तदेव कार्यं सम्पादयितुं क्षमः। किञ्च प्रत्येकं परमाणुषु विद्यमानमपि विद्युत्तत्त्वं वयम् उपलब्धुम्, अथ च व्यक्तीकर्तुमसमर्थाः। किन्तु इलेक्ट्रानपरिपूरितपरमाणुभ्यो वैज्ञानिका विद्युद्धाराः प्रादुर्भावयन्ति। एवमकारादिध्वनेः शक्तिविषयेऽपि बोद्धव्यम्। अनभिज्ञो जनः सत्यामपि सामग्र्यां कार्यं कर्तुं न क्षमः।

---

१, २. डॉ० चमनलालगौतमस्य 'मन्त्रविज्ञान, प्रथमखण्ड'—इत्याख्ये ग्रन्थे ३३तमे पृष्ठे एतदीयोंऽशो द्रष्टव्यः।

अकाराद्यक्षराणां नीलपीतादिवर्णवत्त्वपोषकाणि अपराण्यपि प्रमाणानि विद्यन्ते। नादादेव बिन्दोः समुत्पत्तिं स्वीकुर्वन्ति तान्त्रिकाः। बिन्दुश्च दशधा।

उक्तञ्च स्वच्छन्दतन्त्रस्य एकादशे पटले—

नादाद् बिन्दुः समुत्पन्नः सूर्यकोटिसमप्रभः।
स चैव दशधा ज्ञेयो दशतत्त्वफलप्रदः॥ ९॥
दशधा वर्णरूपेण दशदैवतसंयुतः। इति।

तच्च दशधात्वं निम्नोक्तम्—

सितं रक्तञ्च पीतञ्च कृष्णं हरितपिङ्गलम्।
नीलं विचित्रवर्णं तु स्फटिकाभं मनोरमम्॥
( स्व० त०, प०१२, श्लो० १५४ )

स्फटिकाभम् = स्वच्छम्। मनोरमं तु 'चन्द्रमण्डलसङ्काशम्' १५६तमश्लोके इत्यादिवक्ष्यमाणरूपमुपादेयम्। अत्र नादादेव दशवर्णवतो बिन्दोः समभिव्यक्तिः। यतो नादे एते नीलपीतादिवर्णाः विद्यन्ते, अतो नादोऽपि नीलपीतादिवर्णयुतः। नादे सूर्य इव समेषां नीलपीतादिवर्णानां समाहारात् स स्फटिकवत् स्वच्छः। तत्र नीलपीतादिवर्णानामभावे सति दशवर्णवतो बिन्दोः समुत्पत्तिरसम्भाव्या; यो हि नादो दशवर्णयुतं बिन्दुरूपं दधाति, स एव नादो वायुमाध्यमेन कण्ठताल्वादिभ्योऽकाराद्यात्मनाऽभिव्यज्यते। दशवर्णवतो नादस्यैव स्वरव्यञ्जनात्मनाऽभिव्यक्तेः सत्त्वाद् ध्वनयोऽपि नीलपीतादिवर्णवन्तः।

अकारादिध्वनीनां नीलपीतादिरूपवत्त्वं पतञ्जलिरपि स्वीकरोति। एतच्च 'सरूपाणामेकशेष एकविभक्तौ' ( १।२।६४ ) इति पाणिनीयसूत्रस्थान्महाभाष्यात् प्रतीयते। तत्र हि—

'गुणानाम्, केषाम्? शब्दस्पर्शरूपरसगन्धानाम्। सर्वाश्च पुनर्मूर्तयः, एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः। यत्राल्पीयांसो गुणाः, तत्रावरतस्त्रयः—शब्दः, स्पर्शः, रूपमिति। रसगन्धौ न सर्वत्र' इत्युक्तम्।

यत्र पृथ्वीजलतेजोवाय्वाकाशेषु अल्पीयांस एव शब्दादयो गुणा भवन्ति, तत्र अवरतः सततं शब्दः, स्पर्शः, रूपम् इति त्रयो गुणा भवन्ति। अल्पीयसि गुणे सति रसगन्धयोर्न प्रतीतिः। यत्र शब्दस्याभिव्यक्तिः जायते, तत्र स्पर्शः रूपञ्च'—इति गुणद्वयमेव जायते। दृश्यते च लोके शब्दाभिव्यक्तौ कण्ठताल्वादिषु स्पर्शः। प्रातिशाख्यादिषु च तेषां नीलपीतादिरूपमपि प्रतिपादितम्। एवं शब्द-स्पर्शरूपाणां साहचर्यं बोद्धव्यम्। अत्र रूपपदेन शब्द-स्पर्शसाहचर्याद् नीलपीतादिरूपाण्येव

गृह्यन्ते, न तु शब्दस्य अकाराद्यानुपूर्विरूपम्। घटादिशब्दवाच्यार्थकम्बुग्रीवादिरूपं, प्रदीपोद्द्योतकारैरपि एवमेवात्र स्वीकर्तव्यम्। यद्यप्याकाशे स्पर्शस्य वायौ च रूपस्याभावः, तथापि आकाशवायुतेजसाम् अथ च गुणानां शब्दस्पर्शरूपाणामवरतः सम्बन्धस्य सत्त्वात् 'नीलो घटः' इत्यत्र घटनीलयोरपृथक्त्वाभाव इव तादात्म्यात् परस्परं गुणाक्रान्तत्वं बोद्धव्यम्।

किञ्च, किञ्चिद्विवक्षायां मूलाधारात् स्फुरिता विद्युद्धारा सुषुम्नामार्गेण उद्गच्छन्ती शिरःप्रदेशस्थं सार्धचन्द्रं विग्लापयति। ततश्च प्रतिवर्णमुच्चारणक्षणे अमृतबिन्दवो निपतन्ति। अमृतमयः सार्धचन्द्रश्च स्वच्छः, श्वेतवर्णश्च। श्वेतवर्णः समेषां नीलपीतादिवर्णानां समरसीभूत इति पूर्वं विदितचर एव जातः। रक्तविद्युद्धारासोमयोश्च परस्परं सङ्घर्षे सति श्वेतार्द्धचन्द्रात् क्षरितनीलपीतादिवर्णसम्पर्काद् अकाराद्यक्षराण्यपि तादृशानि दृष्टानि सूक्ष्मदृष्टिभिर्महर्षिभिः। शेषभासितमहाभाष्ये 'तपरस्तकालस्य' ( पा० सू० १।१।७० ) 'इत्यस्मिन् सूत्रे शब्दोच्चारणविचारणायां त्रयः पदार्थाः निर्दिष्टाः सन्ति–एका वृत्तिः, अपरो ध्वनिः, तृतीयश्च स्वरः। तत्र द्रुत-मध्यम-विलम्बितभेदेन त्रिविधा वृत्तयः। अत्र कैयटेन द्रुतवृत्त्योच्चारणे अमृतस्य नवबिन्दूनाम्, अथ च मध्यमवृत्तोच्चारणे च द्वादशबिन्दूनाम्, विलम्बितवृत्त्या च उच्चारणे षोडशबिन्दूनां भावो व्याख्यातः। अयं विषयो अकारादिध्वनीनां लिपिस्वरूपव्याख्यावसरे विशदरूपेण व्याख्यास्यते।

नीलपीतादिगुणविशिष्टानाम् अकारादिध्वनीनां ग्रहराशिनक्षत्रादिभिः सह, अथ च ग्रहाणां सर्वप्राणिजीवनेन सह सम्बन्धस्य सत्त्वात् सर्वे प्राणिनः आकाराद्यक्षरैः परतन्त्रीकृताः, जगतो ग्रहाधीनत्वाद्, ग्रहाणाञ्च मन्त्राधीनत्वात्।

उक्तञ्च मत्स्यपुराणे—

दैवाधीनं जगत् सर्वं मन्त्राधीनाश्च देवताः।
ते मन्त्रा ब्राह्मणाधीनाः तस्माद् विप्रा हि देवताः॥

किञ्च—

अमन्त्रमक्षरं नास्ति, नास्ति मूलं निरौषधम्।
अयोग्यः पुरुषो नास्ति, प्रेरकस्तत्र दुर्लभः॥ इति।

इत्युक्त्यनुसारेण अकाराद्यक्षराण्यपि मन्त्राणि। यस्य कस्यापि नाम्न आद्यक्षरेण यो राशिः सम्बद्धः, तस्य तस्य राशेः तन्नामकप्राणिनां जीवने सम्यक्तया प्रभावः समापततीति ज्योतिश्शास्त्रे प्रसिद्धम्। एते अकारादयो ध्वनयस्तु स्वनिष्ठनीलपीतादिगुणानुसारेण स्वसामर्थ्यं व्यक्तीकुर्वन्ति। अर्थाद् अकाराद्यक्षराणि स्वाभिन्ननीलपीतादिगुणैः प्रभावितानि। न केवलमकारादिध्वनय एव शुक्लादिगुणैः

प्रभाविताः; अपि तु तेषामुपादानभूतः प्राणमाश्रितो जीवा[1]ख्योऽनाहतध्वनिभट्टारकोऽपि। यदा प्राणमाश्रितः 'सोऽहं हंसः' इति ध्वनिः हृदि स्थानेऽष्टदलानां मध्ये श्वेतवर्णे पूर्वदले विश्रमते, तदा धर्मे रतिर्भवति। रक्तवर्णे आग्नेयदले विश्रमेच्चेत् तर्हि निद्रालस्यमतिर्भवति। एवं कृष्णवर्णे दक्षिणदले द्वेषकोपः, नीलवर्णे नैर्ऋतदले पापकर्म हिंसादयः, स्फटिकवर्णे पश्चिमदले क्रीडाविनोदादयः, माणिक्यवर्णे वायव्यदले गमनचलनवैराग्यमतिः, पीतवर्णे उत्तरदले सुखशृङ्गारबुद्धिः, वैदूर्यवर्णे ईशानदले दानादिकृपाः प्रादुर्भवन्ति। हृदि स्थाने यादृशगुणविशिष्टं दलम् अनाहतध्वनिराश्रयति तादृशी एव मतिरुदेति।

निरूपितञ्चैतत्सर्वं ध्यानबिन्दूपनिषदि।

किञ्च, हृद्देशे यद् अष्टदलं पद्मम्, तत्र रेखावलयाअपि विद्यते। यदा नेत्रपरिश्रान्तिमनुभवति, तदा श्रमस्य निर्भरणार्थं वन्धूकपुष्पवर्णं प्रथमरेखावलयम् आश्रयति। ततो निद्रा समायाति। अत्र हंसध्वनिर्बन्धूकवर्णप्रभावेण अभिभूतः। निद्रावस्थायां स्वप्नावस्था, स्वप्नावस्थायाञ्च दृष्टं श्रुतमनुमानं सम्भववार्तामित्यादिकल्पनां करोति, तदा श्रमो भवति। ततः श्रमापहरणाय इन्द्रकोपवर्णं द्वितीयरेखावलयमाश्रित्य पुनः सुषुप्तिं लभते। सुषुप्तौ च केवलं परमेश्वरसम्बन्धिनी बुद्धिर्भवति। पद्मरागवर्णं तृतीयं रेखावलयं प्राप्ते सति तुरीयावस्था भवति। अर्थाद् हृदि स्थानेऽष्टदलपद्मे त्रीणि रेखावलयानि सन्ति, प्रथमो वन्धूकपुष्पवर्णः, द्वितीयः इन्द्रकोपवर्णः, तृतीयश्च पद्मरागवर्णः। यादृशवर्णविशिष्टं रेखावलयं हंसध्वनिः समाश्रयति, तादृशी एव परिस्थितिः सञ्जायते। इत्थं सर्वध्वनेरुपादानभूतो हंसः सोऽहम्—इति प्राणमाश्रितोऽनाहतध्वनिभट्टारकः नीलपीतादिगुणप्रभावैरन्वितः सन् तदनुरूपां परिस्थितिं समुत्पादयति। यदि सर्वोपादानभूतोऽनाहतध्वनिः नीलपीतादिप्रभावैरन्वितः, तर्हि तन्मूलभूता अकारादयोऽपि स्वनिष्ठैः नीलपीतादिगुणैः प्रभाविताः सर्वप्राणिषु तदनुरूपां परिस्थितिं समुत्पादयन्तीति निश्चप्रचं जातम्।

अस्यां सृष्टौ एकशब्दवाच्यार्थेषु परस्परं सम्बन्धोऽपि प्रायेण दृष्टः। तद्यथा हरिशब्दस्य जलम्, विष्णुः—इत्यादयोऽर्थाः समुपलभ्यन्ते। प्रलयकाले निद्रां वितन्वतो हरेः समुद्रतले शयनं भवतीति हरिशब्दवाच्यार्थ-विष्णुजलयोः सम्बन्धः, एवं नीलपीतादिगुणवाचकवर्णशब्दस्यापि 'अक्षर-रश्मि-रङ्गाः' इति त्रयो वाच्यार्थाः। अकारादिध्वनयः, अथ च सूर्यकिरणा अपि रश्मिपदवाच्याः। तद्यथा—

---

१. 'स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः'—इत्युक्त्याऽनाहतध्वनिरेवात्र जीवभूतः।

अकारादिक्षपर्यन्ताः कलास्ताः शब्दकारणम् ।
मातरः शक्तयो देव्यो रश्मयश्च कलाः स्मृताः[1] ॥

( शिवसू०, प्र० प्रकाशः )

अत्र अकाराद्यक्षरार्थे रश्मिशब्दः प्रयुक्तः। यथा योगिनः सूर्यरश्मिमाध्यमेन लोकाल्लोकान्तरं गच्छन्ति, एवमकारादिरश्मिभिरपि वाञ्छितस्य देशस्य, अथ च वस्तूनां प्राप्तिः। शब्दं विना न कुत्राऽपि गतिः। सर्वप्राणिषु ओमिति प्रणवात्मनाऽन्तर्नदननाद एव नीलपीतादिरश्मिविशिष्टसूर्यात्मना भासते। सूर्यस्य नीलपीतादिरश्मयः सततं रवं ( ध्वनिम् ) कुर्वन्ति। रवस्य करणादेव सूर्यो रविरित्युच्यते। अकारादिध्वनय एव सूर्यस्य नीलपीतादिरश्मयः। सततं रवस्य करणाद्, वेदत्रयस्वरूपत्वाच्च सूर्यरश्मिज्ञानेन सर्ववेदज्ञानम्। अत एव महर्षिर्याज्ञवल्क्यः सूर्यमाराध्य शुक्लयजुर्वेदं प्राप्तवान्। यदि सूर्यस्य रश्मयो नीलपीतादिवर्णवन्तः, तर्हि अकारादिध्वनयोऽपि नीलादिवर्णवन्त एव, उभयोः प्रणवरूपैकमूलत्वात्। एवमक्षररश्मिरङ्गाणाञ्च परस्परं यः सम्बन्धः, महर्षिभिश्च सूक्ष्मदृष्टया अकाराद्यक्षराणां वर्णतत्त्वं यत् प्रतिपादितम्—ते उभे विश्वासमारोहतः।

सूर्यरश्मीनामनन्ता जातयः, परन्तु सर्वेषां मूलभूता एका एव प्रभा। सा च प्रभा शुक्लवर्णा। इयं शुक्लप्रभा एव अरुणनीलप्रभृतिवर्णरूपेण, नीलपीतादीनाञ्च परस्परं संयोगाद् उपवर्णरूपेण प्रकाशते। सर्वेषां नीलपीतादिवर्णानां प्रकृतिः श्वेतवर्णः। यद्वा समेषां नीलपीतादिरङ्गाणां मिश्रणे कृते सति श्वेतवर्णो निष्पद्यते। श्वेतवर्णाच्च सर्वे वर्णाः प्रादुर्भवन्ति।

उक्तञ्च स्कन्दपुराणे—

तव चैवादिदेवत्वं प्रमाणं शुक्लवर्णकः।
प्रकृतौ शुक्लवर्णेऽन्ये वर्णाः स्युः विकृतिं गताः॥

अत्रेत्थं योजना कर्तव्या—याज्ञवल्क्यादिशिक्षाग्रन्थेषु अकारादिध्वनीनां नीलपीतादिवर्णाः प्रतिपादिताः। एतेषां प्रकृतिः श्वेतवर्णः। शिवोऽपि कुन्देन्दुधवलः बिन्दुरपि तथाभूतः। बिन्दुश्च जगतो मूलभूतः। तथा च शिवस्य यत् शुक्लवर्णत्वम्, तदेव तस्यादिदेवत्वे प्रमाणम्। शुक्लवर्णे विकृते सति अन्ये वर्णाः प्रादुर्भवन्ति। शुक्लात् परं यद् वर्णातीतं तत्त्वम्, तेन सह बिन्दुस्वरूपस्य शुक्लवर्णस्य संघर्षः सञ्जायते। अयमेव शुक्लवर्णो यत् शुद्धसत्त्वम् आगमशास्त्रे बिन्दुनाम्ना प्रसिद्धः। इदमेव बिन्दुतत्त्वं चन्द्रः, चिदाकाशम्, शब्दमातृका—इत्यादिनाम्नाभिधीयते। अस्मिन् क्षोभे सति नादस्य अथ च नीलपीतादिवर्णा अभिव्यज्यन्ते। मातृकाघटका अकारादयो ध्वनयः शुक्लवर्णाद् शुद्धसत्त्वरूपचन्द्रबिन्दोरेव क्षरन्ति।

१. तन्त्रमहाविज्ञानस्य प्रथमखण्डः, पृ० ३९२।

वस्तुतस्तु केषाञ्चिन्मते अकारादयोऽक्षररूपेण न स्वीकर्तव्याः, एतेषां चन्द्रबिन्दोः क्षरणेन प्रादुर्भावात् । मूलाधारस्थः प्रसुप्तो वह्निः किञ्चिद् विवक्षायामुद्बुद्धः सन् ऊर्ध्वमारोहति, चन्द्रबिन्दुञ्च द्रवीभूतं करोति । तस्य क्षरणाच्च अकारादयो वर्णाः प्रादुर्भवन्ति । परन्तु एषामकारादीनां मूलेन सह अक्षुण्णरूपेण सम्पर्कः । अतस्ते अक्षरनाम्नाभिधीयन्ते । सर्वेषां वर्णानां मूलभूतोऽयम् अकारः स एव शुक्लवर्णस्य प्रतीकः । उक्तञ्च—

'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।' इति ।

एतेषां वर्णानामभिव्यक्तिम्, अथ च परस्परं सम्बन्धम्, सम्बन्धविच्छेदं च यो न जानाति, स मन्त्रान् उद्धर्तुं समर्थो न स्यात् ।

इदञ्च तथ्यं नागेशभट्टविदुषाऽपि स्वीकृतं प्रतिभाति । वैयाकरणसिद्धान्तलघुमञ्जूषायां शक्त्याश्रयनिरूपणे 'शब्द आकाशदेशो विभुरेकश्च' इत्यत्र एतदीयोंऽशो द्रष्टव्यः ।

उक्तञ्चात्र—

'यथैकत्र श्वेतद्रव्ये रूपं व्यापकम्, तथाऽस्याप्याकाशदेशस्य तथात्वमुचितम्' इति ।

समेषां वर्णानां समरसीभूते श्वेतद्रव्ये नीलपीतादिकं सर्वं रूपं व्यापकम् ।

'प्रकृतौ शुक्लवर्णेऽन्ये वर्णाः स्युर्विकृतिं गताः' ।

इत्युक्तरीत्या विचार्यमाणे सति 'यथैकत्र श्वेतद्रव्ये रूपं व्यापकं सद्'—इति नागेशोक्तस्य मदुक्तव्याख्यान एव स्वारस्यम् ।

महाभाष्यकारो भगवान् पतञ्जलिः 'उच्चैरुदात्तः' ( १।२।२९ ) इति पाणिनीयसूत्रे–'तदयथा द्वयो रक्तयोर्मध्ये शुक्लवस्त्रं तद्गुणमुपलभ्यते' इत्युक्तवान् । अत्र शुक्लवस्त्रस्यैवोपादानात् प्रतीयते यद् भगवान् पतञ्जलिरपि 'शुक्ले गुणे सर्वे गुणाः समरसीभूता विद्यन्ते'—इतीदं तथ्यं स्वीकरोति । अत एव तत्सान्निध्ये ये नीलपीतादिगुणा भवन्ति, तत्र ( शुक्ले गुणे ) अभिव्यज्यन्ते । शुक्लोऽपि स्वसमीपस्थनीलपीतादिगुणात्मना भासते ।

गुणानां परस्परं समरसीभूते सत्यन्यो गुणः प्रादुर्भवतीतीदमपि तथ्यं स्वीकरोति भगवान् पतञ्जलिः । उक्तञ्च तेन 'समाहारः स्वरितः' (१।२।३१) इति सूत्रे 'शुक्लगुणः शुक्लः, कृष्णगुणः कृष्णः, य इदानीमुभयगुणः स तृतीयामाख्यां लभते—कल्माष इति वा, सारङ्ग इति वा' इति । एवमकारादिध्वनीनामपि नीलपीतादिगुणविषये समूहनीयम् । शुक्लगुणविशिष्टस्य, कृष्णगुणविशिष्टस्य च ध्वनयः परस्परं सन्निधाने सति कल्माषवर्णाः संलक्ष्यन्ते ।

अकारादिध्वनीनां नीलपीतादिरूपवत्त्व एव सर्वस्य 'चक्षुःश्रवा' इति संज्ञा फलवती। अन्यथा 'इन्द्रियाणि स्वाधिष्ठानगुणग्राहकाणि' इति सिद्धान्तो विलुप्येत; शब्दस्य श्रोत्रविषयत्वात्। अक्षराणां नीलपीतादिरूपस्वीकारे तु सर्वः कुतश्चित् समागच्छतो ध्वनेः रूपमेव पश्यति। सर्पाणां चक्षुषि ध्वनिनिष्ठनीलपीतादिरूपज्ञानसामर्थ्यशक्तिः, न तु मनुष्याणाम्। अत एव भगवान् पतञ्जलिः शेषरूपं ( फणिरूपम् ) स्वीकृत्य महाभाष्ये शब्दानां व्याख्यानं चकार। चक्षुःश्रवः-शब्दे 'श्रवः' इति पदं चक्षुषा शब्दरूपदर्शनाद् दर्शनार्थकं बोद्धव्यम्। वयं श्रोत्रेन्द्रियेण शब्दं शृणुमः, सर्पश्च चक्षुषा शब्दरूपं पश्यतीति शब्दज्ञानरूपसाधर्म्यमेवात्र 'श्रवा' शब्दस्य दर्शनार्थकत्वं पोषयति। श्रोत्रेन्द्रियेण अस्माकं प्रोच्चरिता ध्वनयो वायुमण्डले विविधं नीलपीतादिरूपं गृह्णन्तीत्यस्याप्यन्वेषणं जातमिति विदांकुर्वन्तु सज्जनाः।

यद्वा, चक्षुषि श्रवो यस्य स चक्षुःश्रवाः। 'सप्तमी शौण्डैः' ( २।१।४० ) इत्यत्र सप्तमीति योगं विभज्य समासः। अस्य समासस्य भाष्येऽदर्शनात् 'सुप्सुपा' इति समासः। यथा वायुमाध्यमेन समागतं शब्दं हृदयस्थस्फोटवृत्तितया श्रोत्रेण गृह्णीमः। कर्णशष्कुलीस्थत्वगिन्द्रियेण च वायूनां ग्रहणम्। यथा वा कर्णशष्कुलीसमीपे व्यजनेन त्वरापूर्वकं वायुचालने सति स्पर्शशब्दयोरुभयोः प्रतीतिर्जायते अत्र श्रोत्रेण आकाशस्थस्फोटवृत्तितया शब्दस्य, अथ च कर्णशष्कुलीस्थत्वगिन्द्रयेण च वायुवृत्तितया स्पर्शस्य ग्रहणम्। एवं सर्पः तेजोमाध्यमेन यद्वा वायुमाध्यमेन समागतं शब्दं स्फोटवृत्तितया, शब्दस्य अथ च घटपटादिद्रव्याणां नीलपीतादिरूपं चक्षुरिन्द्रियेण, चक्षुर्गोलकस्थत्वगिन्द्रियेण च स्पर्शं गृह्णाति— इति सर्पः स्वचक्षुषा शब्दस्पर्शरूपमिति गुणत्रयं गृह्णाति। एवं 'सरूपाणामेकशेष एकविभक्तौ' इति पाणिनीयसूत्रस्थम् 'यत्राल्पीयांसो गुणास्तत्रावरतस्त्रयः—शब्दः स्पर्शो रूपमिति, रसगन्धौ न सर्वत्र' इति भाष्यम्, अथ च अकारादिध्वनीनां नीलपीतादिरूपवत्त्वञ्च संगच्छेते। 'वायुवत् तेजोऽपि विद्युद् वा ध्वनिसञ्चारस्य माध्यमम्'—इति तु आधुनिके वैज्ञानिकयुगे प्रसिद्धमेव। अनया एव दिशाऽत्र विचारः कर्तव्यः। शब्दस्पर्शरूपाणामेकत्र ग्रहणशक्तिः सर्पेष्वेव दृश्यते। अत्र फणिभाषितभाष्यम्, पतञ्जलिना फणिरूपधारणत्वञ्च मदुक्तं पोषयतः।

वस्तुतस्तु 'सुप्सुपा' इति समासस्य अगतिकगतित्वाद् बहुव्रीहिरेव न्याय्यः। यथा अस्माकं रसनायां रसनेन्द्रियम्, वागिन्द्रियम्, अथ च त्वगिन्द्रियम्— इति त्रीणि विद्यन्ते। रसनायामेतत्त्रयस्य शक्तिर्विद्यते। एवं सर्पाणां चक्षुषि शब्दस्पर्शरूपग्रहणस्य शक्तिः।

अस्माभिः प्रोच्चरिता ध्वनयो विविधं नीलपीतादिरूपं वायुमण्डले

गृह्णन्तीत्ययं विषयो अग्रे अकारादिध्वनीनां लिपिस्वरूपव्याख्यावसरे प्रतिपादयिष्यते । अवर्गाद्यधिष्ठातॄणां ब्राह्म्यादिसप्तमातॄणामपि नीलपीतादिरूपाणि भवन्ति ।

तद्यथा स्वच्छन्दतन्त्रस्य दशमे पटले—

मातरः सप्तरूपिण्यो नानालङ्कारभूषिताः ।
परिवार्य महात्मानं समन्तात् पर्यवस्थिताः ॥
ब्राह्मी कमलपत्राभा दिव्याभरणभूषिता ।
आग्नेय्यां दिशि देवेशि स्थिता वै श्रीरिवापरा ॥
शङ्खगोक्षीरसङ्काशा ऐशान्यां तु वरानने ।
माहेश्वरी महातेजास्तिष्ठति सुरपूजिता ॥
कौमारी पद्मगर्भाभा हरिकेयूरभूषिता ।
दिश्युत्तरस्यां देवेशि कामिना पर्युपासिता ॥
स्निग्धनीलोत्पलनिभा हारकुण्डलमण्डिता ।
दक्षिणस्यां दिशि तु सा उपास्ते परमेश्वरम् ॥
वैष्णवीति च विख्याता शिवेन परमात्मना ।
नीलजीमूतसङ्काशा सर्वाभरणभूषिता ॥
वारुण्यां दिशि देवेशि वाराही पर्यवस्थिता ।
शङ्खकुन्देन्दुधवला हारकुण्डलमण्डिता ॥
ऐन्द्र्यां दिशि च सा देवी इन्द्राणी पर्युपस्थिता ।
करालवदना दीप्ता सर्वाभरणभूषिता ॥
नैर्ऋत्यां दिशि चामुण्डा उपास्ते परमेश्वरम् । इति ।

क्वचित्तु महालक्ष्मीसहिता अष्टौ मातरः स्वीकृताः । महालक्ष्म्याः स्वरूपं निम्नाङ्कितम्—

महालक्ष्मीस्तु पीताभा पद्मदर्पणमेव च ।
मातुलुङ्गफलं चैव दधाना परमेश्वरी ॥

इत्थं ब्राह्म्यादिदेवीभिरधिष्ठिताः मातृकावर्णाः नीलपीतादिरङ्गवन्तः ।

**अकारादिध्वनयो विद्युच्छक्तिमन्तः, अथ च चेतनावन्तः**

मातृकाणां प्रत्येकमक्षराणि मन्त्ररूपाणि, तेषु च महती विद्युच्छक्तिर्विद्यते । तदित्थम् प्रणवस्य षोडशनामानि स्कन्दपुराणे वैष्णवसंहितायां प्रणवकल्पे प्रोक्तानि । तेषां मध्ये 'वैद्युतम्' इत्यपि प्रणवाख्या प्रोक्ता । तद् यथा—

ॐकारः प्रणवोऽनन्तः सर्वव्यापी च तारकम् ।
शुक्लं सूक्ष्मं वैदयुतञ्च परं ब्रह्म तथैव च ॥ २ ॥
एकश्च एकरुद्रश्च ईशानो भगवाँस्तथा ।
महेश्वरो महादेवः प्रत्यगात्मा तथैव च ॥ ३ ॥ इति ।

अत्र प्रमाणतया समुद्धृते द्वितीयश्लोके 'वैदयुतम्' इति प्रोक्तम् । वैदयुतमित्यस्य विदयुत्स्वरूपमित्यर्थः ।

अत एव योगशिखोपनिषदः षष्ठेऽध्याये—

अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः ।
ध्वनेरन्तर्गतं ज्योतिः ज्योतिरन्तर्गतं मनः ॥
तन्मनो विलयं याति तद् विष्णोः परमं पदम् ॥ २१ ॥ इति ।

अत्र 'ध्वनेरन्तर्गतं ज्योतिः' इत्युक्तम् । अत्र 'ज्योतिः' पदेन विदयुत्तत्वस्यैव ग्रहणम् । न च अत्र ज्योतिरिति पदं ज्ञानस्य वाचकम् इति वाच्यम्; 'ज्योतिर्वज्ज्ञानानि भवन्ति' इति पातञ्जलमहाभाष्येण शङ्कायाः परिहारात् । 'ज्योतिः' पदस्य ज्ञानार्थकत्वे ज्योतिर्वद् इति न संघटते । ओमित्यन्तर्नादात्मकस्य प्रणवस्य विद्युत्स्वरूपत्वे तद्रश्मिभूता अकारादिध्वनयोऽपि विद्युन्मयाः, कार्याणामुपादानभिन्नगुणकत्वाभावात् । विद्युन्मयत्वादेव एते ध्वनयो रश्मि-इत्याख्यां लभन्ते । यथा पदार्थानां प्रत्येकं परमाणवो बाह्याभ्यन्तरतो विद्युता परिवेष्टिताः, एवं ध्वनीनामपि परमाणवो विद्युन्मयाः । यथा पार्थिवादिपदार्थानां परमाणवः पार्थिवाः, एवम् अकारादिध्वनीनामपि परमाणवो ध्वनिमयाः । अकारादिध्वनीनां यद् हि सूक्ष्मतरं ध्वनिमयं स्वरूपम्, तदेव तेषां परमाणुः ।

तदुक्तं श्रीशिवमहिम्नस्तोत्रे—

त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरान्,
अकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः,
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥ २७ ॥

हे शरणदः ! अकाराद्यैः ( अ उ म् ) त्रिभिर्वर्णैः ऋगादिवदेत्रयीं जाग्रत्-स्वप्न-सुषुप्तीति तिस्रो वृत्तीः, त्रिभुवनम्, ब्रह्म-विष्णु-रुद्रदेवान् अभिदधत् तीर्णविकृतिः = विकाररहितञ्च ते तुरीयं धाम अणुभिः ध्वनिभिरवरुन्धानम् ओमिति पदं समस्तम् = समष्टिरूपेण व्यस्तम् = व्यष्टिरूपेण त्वां गृणाति ।

अत्र स्तुतौ 'अणुभिर्ध्वनिभिः' इत्युक्त्या अकारादिध्वनीनां ध्वनिमयाः परमाणवो भवन्तीति प्रमाणीक्रियते ।

प्रकृतमनुसरामः—यथा पार्थिवादिपरमाणवो विद्युता परिवेष्टिताः, एवं ध्वनिपरमाणवोऽपि विद्युन्मयाः। यथा जले विद्यमानमपि विद्युत्तत्त्वं प्राप्तत्वान्नावभासते, वैज्ञानिकविधिद्वारा यत्ने कृते सति जलस्था विदद्युद् अभिव्यज्यते; एवमकाराद्यक्षरेष्वपि विद्यमानं विद्युत्तत्त्वं नावभासते। तपसा यत्ने कृते सति यन्त्रध्वनिनिष्ठा मन्त्रध्वनिनिष्ठा विद्युत् शक्तिरूपेण अभिव्यक्ता सती लोकोत्तराणि कार्याणि कुरुते। एकोनषष्टितमे ईस्वीये वर्षे श्रीहंसराजाख्यो वैज्ञानिकः कस्यचिद् यन्त्रस्य[1] गवेषणां कृतवान्। तस्मिन् यन्त्रे विद्युत्सम्बन्धी न कोऽपि तन्तुरासीत्। यदा स वैज्ञानिकः 'लाइट' इति ध्वनिमुच्चारयति स्म, तदा प्रकाशोऽभवत्। ध्वनौ विद्युतोऽभावाद् इदं कार्यमसम्भवं प्रतीयते। मन्त्रघटका ध्वनयः स्वनिष्ठविद्युच्छक्तिद्वारैव देवान् अथ च अभीष्टान् पदार्थानाकृष्य जपनिष्ठस्य साधकस्य सविधे प्रापयन्ति।

उक्तञ्च मत्स्यपुराणे—

देवाधीनं जगत् सर्वं मन्त्राधीनाश्च देवताः।
ते मन्त्रा ब्राह्मणाधीनाः तस्माद्विप्रा हि देवताः॥

विद्युच्छक्तिद्वारैव मुक्तात्मानः सूर्याद् ऊर्ध्वं चन्द्रलोकं गच्छन्ति। चन्द्रलोकात् ऊर्ध्वं वैद्युता मानुषास्तं मुक्तात्मानं वहन्ति। 'प्रयाणकाले ओमित्येकाक्षरं ब्रह्म व्याहरन् माम् अनुस्मरन्' इत्यादिवाक्येन प्रणवद्वारा या परमात्मप्राप्तिरुक्ता सा प्राप्तिः प्रणवनिष्ठविद्युच्छक्तिद्वारैव सम्पद्यते, सूक्ष्मचन्द्रात् परं वैद्युतैर्मानुषैरेव मुक्तात्मनः प्रापणात् प्रणवस्य च वैद्युततत्त्वस्वीकारात्, तेन च परमात्मलाभात् 'प्रणव एव वैद्युतमानुषरूपेण सूक्ष्मचन्द्रात् परं मुक्तात्मानं नयति' इति विश्वासमारोहति। शब्दज्योतिरूपाणां त्रयाणामविनाभूतः सम्बन्धः। वस्तुतस्तु शब्दो ज्योतिश्च इत्युभे अभिन्ने वस्तुतत्त्वे। अग्निरेव वाग्रूपतां धत्ते।

उक्तञ्च निरुक्तस्य दैवतकाण्डे—

'एष एवैतत् सर्वमक्षरम्' इति।

अत्र स्पष्टतया अकारादिध्वनीनाम् अग्निभूतत्वं प्रतिपादितम्। अग्न्याधानादिकस्याप्यत्रैव स्वारस्यं विद्यते। अग्निरेव ऊर्द्धमुत्थापयति। प्रणवे विद्युतः सत्त्वाद् अग्निप्रणवयोरुपासनैक्यं समानफलकत्वञ्च बोद्धव्यम्। किञ्च, प्रणवोपादानध्वनिनिष्ठां विद्युच्छक्तिं ये समुपासितवन्तः, ते यद् ब्रुवन्ति, तदेव भवति।

उक्तञ्च बृहदारण्यकोपनिषदि पञ्चमाध्याये—

---

१. वाथरलेस टर्च। वाराणसीस्थे सम्पूर्णानन्दसंस्कृतविश्वविद्यालये गवेषणालयसञ्चालकः डॉ० श्री भागीरथप्रसादत्रिपाठी "वागीशशास्त्री" अत्र प्रमाणभूतः।

पृथ्व्यै चैनमग्नेश्च दैवी वाग् आविशति, सा वै दैवी वाग् यथा यद् यदेव वदति तत्तद् भवति ॥ १८ ॥

वैज्ञानिकरीत्या यथा ताम्रादिपरमाणूनां भेदने कृते सति विद्युद्धारा अभिव्यज्यते, एवं तपश्चर्यया ध्वननिनिष्ठविद्युद्धारा उद्बोधिता भवति ।

वस्तुतस्तु विचार्यमाणे सति प्रत्येकं मातृकाक्षरेषु सर्वाः शक्तयः सन्निविष्टाः; सर्वेषां ध्वनीनां नादमूलकत्वात् । नादादेव निखिलतत्त्वस्योत्पत्तेः सत्त्वात्, सर्वेषु नादतत्त्वस्य व्यापकत्वाच्च । यथा आकाशात् प्रारभ्य पृथ्वीपर्यन्तं पूर्वपूर्वशब्दादिगुणानामुत्तरोत्तरेषु वाय्वादिषु सङ्क्रान्तिः; एवं नादतत्त्वमपि सर्वत्रानुस्यूतम् । सर्वत्रानुस्यूतनादतत्त्वमूलकत्वाच्च अकाराद्यक्षराण्यपि तथाभूतानि । मातृकाघटकम् एकैकमक्षरं मन्त्रस्वरूपम्, आकाशादिसकलजगताञ्च बीजस्वरूपम् । उक्तञ्च—अमन्त्रमक्षरं नास्तीत्यादि ।

यथा बीजाद् वृक्षप्ररोहः, तथा अक्षररूपबीजाद् जगतोऽभिव्यक्तिः । 'यं रं लं वं शं हम्' इमानि अक्षराणि क्रमशो वाय्वग्निपृथ्वीजलचन्द्राकाशादीनां बीजानि । यथा बीजं द्विधा भिन्नं सदेव शाखापल्लवादिरूपेण वृक्षात्मना प्रादुर्भवति, तस्मिंश्च वृक्षे फलानि फलेषु च तादृशानि बीजानि प्रादुर्भवन्ति । तानि च बीजानि पुनः वृक्षात्मना प्ररोहन्ति । एवं मन्त्रस्य बीजभूतं यदक्षरम्, 'रां रामाय नमः' इत्यस्मिन्मन्त्रे रां इति वीजम्, तस्य भेदनं यदा भवति, तदा तन्मन्त्रः फलप्रदो नान्यथा । अत्र भेदनमिति पदस्य सम्यक्तया ज्ञानम् इत्यर्थः । न तु कुठारादिभिः काष्ठादीनां द्विधाकरणमिव भेदनं ग्राह्यम् । यथा परमाणुपुञ्जे भिन्ने सत्येव विद्युत्पुञ्जाभिव्यक्तिः, एवं वीजाक्षरभेदे सत्येव मन्त्रशक्तिरभिव्यज्यत ।

यत्तु 'स्थानेऽन्तरतमः' इति पाणिनीयसूत्रे पातञ्जले महाभाष्ये अकारादिध्वनीनामचेतनत्वं ध्वनितम् । उक्तञ्च—

'एवं तावच्चेतनावत्सु । अचेतनेष्वपि—लोष्टः क्षिप्तो वहुवेगं गत्वा नैव तिर्यग्गच्छति, नोर्ध्वमारोहति । पृथ्वीविकारः पृथ्वीमेव गच्छत्यान्तर्यतः । इति ।

अत्र पूर्वपक्षिणा 'येषामेव किञ्चिद् अर्थकृतमान्तर्यं तैरेव सहास्ते' इति भाष्योक्तनियमः चेतनेष्वेव चरितार्थः, न तु अचेतनेषु । अकारादिध्वनयस्तु अचेतनाः । तत्रायं नियमो न सङ्घटते ? इत्येवं शङ्का कृता । भाष्यकृता पतञ्जलिना च अकारादिध्वनीनां चेतनत्वमसम्पाद्य अचेतनेष्वपि नियमसङ्गतिः प्रदर्शिता इत्येवम् अकारादिवर्णानामचेतनत्वं ध्वनितम् । तत्तु तुष्यद्दुर्जनन्यायेन । यद्वा तेषां प्रसुप्तचेतनावस्थायामेव जडत्वं सम्पादितम् । उद्वुद्धचेतनवर्णास्तु सर्वशक्तिमन्तः । अतएव —

शब्देष्वेवाश्रिता शक्तिः विश्वस्यास्य निबन्धिनी ।
वागेव विश्वा भुवनानि जज्ञे वागेव रूपं पश्यति ॥

हंसपारमेश्वरे च—

पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः ।
सौषुम्णेऽध्वन्युच्चरिताः पतित्वं प्राप्नुवन्ति ते ॥

इत्यादिवचनानि मदुक्तमेव प्रतिपादयन्ति ।

किञ्च महाभाष्यस्य पस्पशाह्निके 'महता देवेन नः साम्यं स्याद्—इत्यध्येयं व्याकरणम्' इत्येवं व्याकरणाध्ययनस्य प्रयोजनं प्रतिपादयन् भगवान् पतञ्जलिः अकारादिध्वनीनां चेतनत्वं सुतरां प्रतिपादितवान् ।

**अकाराद्यक्षराणां देवतात्मकं स्वरूपम्**

मातृकाक्षराणां न केवलं ध्वन्यात्मकं श्रोत्रग्राह्यं स्वरूपम्, अपितु एतेषां देवतात्मकम्, अथ च द्रव्यात्मकमपि स्वरूपे स्तः । प्रत्येकं वर्णस्य ध्यानार्थस्वरूपम् आगमशास्त्रेषूपवर्णितं समुपलभ्यते । तद् यथा शारदातिलकस्य पदार्थादर्शटीकायां ध्यानार्थम् अकारादीनां मूर्तयो निर्दिष्टाः । तत्र केचिन्मूर्तयो निम्नाङ्किताः—

'अ'

चामीकरनिभः शूलगदाराजभुजाष्टकः ।
चतुरास्योऽतिकायः स्याद् अकारः कूर्मवाहनः ॥

'आ'

पाशाङ्कुशकरा श्वेता पद्मसंस्थामयावहा ।
षष्टचूर्ध्वयोजनमिता स्याद् आ मौक्तिकभूषणः ॥

'इ'

पीतं कराब्जकुलिशं परशुं वैरिनाशनम् ।
द्वयेकयोजनमानं स्याद् इकारं कच्छपस्थितम् ॥

'ई'

दशयोजनदीर्घार्द्धनाहासौ हंसवाहना ।
ईः स्यात् पुष्टिप्रदा श्वेता भौतिकाढ्या सितानना ॥

'उ, ऊ'

गदाङ्कुशकरं काकवाहनं कृष्णभूषणम् ।
योजनद्विसहस्राणां मानम् उ द्वयमक्षरम् ॥ इत्यादि ।

इत्थं मातृकावर्णानां मूर्तिः प्रमाणपुरःसरं समुपस्थापिता। केषाञ्चिद् वर्णानां सहस्रयोजनपरिमाणकाः, केषाञ्चिल्लक्षयोजनमिता मूर्तयः सन्ति। वर्णानां लक्षादिपरिमिता मूर्तयः क्व स्थिताः स्युः परिमितायां पृथ्व्याम् ? इत्येवं शङ्का न कार्या; एतेषाम् आकाशमण्डले निवासाद्, आकाशस्य च अनन्तत्वात्। मातृकावर्णानाम् उपरिवर्णितमूर्तिस्वरूपेण निवासो वेदमण्डले स्वीकार्यः; वेदानां वर्णानतिरिक्तत्वात्। सूर्यचन्द्रमण्डलाद् ऊर्ध्वं वेदमण्डलं स्वीक्रियते।

तदुक्तं स्वच्छन्दतन्त्रस्य दशमे पटले—

असंख्याताः सहस्राणि कल्पे कल्पे विनिर्गताः।
तस्मात्तु मण्डलादूर्ध्वं वेदमण्डलमुच्यते ॥ ९१५ ॥

इदं वेदमण्डलं वामाख्यशक्त्या नियन्त्रितम्। स्वान्तःस्थितविश्वस्य वमनाद् वामा। इच्छाशक्त्या सहसङ्गता वामा एव पश्यन्तीति पूर्वं प्रतिपादितम्। तस्या एव वामाख्यशक्त्या अत्रापि ग्रहणम्। यद्वा 'सुचारुः' इत्याख्ये भुवने यत्र हरस्तिष्ठति, तत्र हस्तपादादिमन्मूर्तिस्वरूपाणां वर्णानां निवासः; तत्रैव मातृकाधिष्ठात्रीणां ब्राह्म्यादिदेवीनां निवासात्। उक्तञ्च—

मातरः सप्तरूपिण्यो नानालङ्कारभूषिताः।
परिवार्य महात्मानं समन्तात् पर्यवस्थिताः॥
( स्व० त०, प० १० )

युक्तञ्चैतत् प्रतिभाति, यतो हि क्रियाशक्त्या सह रौद्री शक्तिरेव वैखरीस्वरूपा मातृका; मातृकायाः रुद्रशक्तिस्वरूपत्वान्मातृकाघटकवर्णानां हस्तपादादिमूर्त्या निवासस्य तत्र उचितत्वात्। अतएव ऋग्वेदे—

अहं रुद्रेभिर्वसुभिश्चराम्यहम् आदित्यैरुत विश्वादेवैः।
( ऋ० वे० १०।१२५।१ )

अस्याम् ऋचायाम् 'अहं रुद्रेभिश्चरामि' इत्युक्तम्। अकारादिवर्णानां लक्षादियोजनपरिमिता मूर्तिः कथं स्यादित्यपि न शङ्कनीयम्; वर्णानां रुद्रशक्तिस्वरूपत्वात् तत्सम्भवात्। वस्तुतस्तु लक्षादिसंख्याशब्दाः न संख्येयपराः, अपि तु उपलक्षणभूताः सन्तोऽपरिमितपराः। तावता एषां व्यापकत्वं विभुत्वञ्च द्योतितम्।

**विश्वसर्जनपोषणसंहारसमर्थानाम् अकारादिनिष्ठपूर्णोदरादिशक्तीनाम् अभिव्यक्तिः, वाक्यपदीयदशा चात्र विचारः**

प्रत्येकं वर्णा रुद्रशक्तयः। तद्यथा—

(१) पूर्णोदरा (२) विरजा (३) शाल्मली (४) लोलाक्षी
(५) वर्तुलाक्षी (६) दीर्घघोणा (७) दीर्घमुखी (८) गोमुखी

(९) दीर्घजिह्वा (१०) कुण्डोदरी (११) ऊर्ध्वकेशी (१२) विकमुखी
(१३) ज्वालामुखी (१४) उल्कामुखी (१५) श्रीमुखी (१६) विद्यामुखी

इमाः षोडश शक्तयः स्वरोत्पन्नाः ।

(१) महाकाली (२) सरस्वती (३) गौरी (४) त्रैलोक्यविजया
(५) मन्त्रान्तशक्तिका (६) भूतमाता (७) लम्बोदरी (८) भाविनी
(९) नागरी (१०) खेचरी (११) मञ्जरी (१२) रूपिणी
(१३) वीरिणी (१४) काकोदरी (१५) पूतना (१६) भद्रकाली
(१७) योगिनी (१८) शङ्खिनी (१९) गर्जिनी (२०) कालरात्री
(२१) कुब्जिनी (२२) कपर्दिनी (२३) वज्रिणी (२४) जया
(२५) सुमुखेश्वरी (२६) रेवती (२७) माधवी (२८) वारुणी
(२९) वायवी (३०) रक्षोपधारिणी (३१) सहजाह्वया (३२) लक्ष्मीः
(३३) व्यापिनी (३४) माया ।

स्वरव्यञ्जनयोर्द्वयोः सम्मेलनेन पञ्चाशद् रुद्रशक्तयो गण्यन्ते[1] । एतासां जगत्सर्जनसमर्थानां रुद्रशक्तीनां तत्स्वरूपाणाञ्च मातृकाघटकवर्णानां तुल्यमेव सामर्थ्यम् उद्बोधितशब्दशक्तिभिर्महर्षिभिरनुभूतम् । लोकसर्जनसमर्थत्वादेव अष्टवर्गेषु विभक्ता अकारादिध्वनयो लोकमातृकाः ( लोकमातरः ) प्रोक्ता महर्षिभिः ।

एतच्च लोकसर्जनपालनसामर्थ्यरूपं तथ्यम् ऋग्वेदोऽपि पुष्णाति । तद्यथा—

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्यं यजमानाय सुन्वते ॥

( ऋ० वे० १०।१२५।२ )

अहं राष्ट्री सङ्गमनी वसूनाम् ।

( ऋ० वे० १०।१२५।३ )

मया स अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।

( ऋ० वे० १०।१२५।४ )

अहं सुवे पितरमस्य मूर्धन् ।

( ऋ० वे० १०।१२५।७ )

इत्यादिषु मन्त्रेषु अकारादिध्वनीनां सामर्थ्यं स्पष्टतया प्रोक्तं तत्र—

---

१. फेत्कारिणीतन्त्रे प्रथमपटले २६श्लोकतः ३३श्लोकपर्यन्तं एतदीयोंऽशो द्रष्टव्यः ।

अमन्त्रमक्षरं नास्ति नास्ति मूलं निरौषधम्।
अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः॥

इति पूर्वकथनानुसारेण प्रत्येकं वर्णा मन्त्राः। युक्तञ्चैतत् प्रतिभाति। वैयाकरणप्रमाणभूतः श्रीभर्तृहरिरपि एतत् तथ्यं प्रतिपादयति। तथा चात्र तस्य संकेतः—

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धिनी।
यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते॥ ११८॥
(वाक्यपदीयस्य ब्रह्मकाण्डे)

अस्य विश्वस्य ब्रह्माण्डस्य निबन्धिनी सकलव्यवहारहेतुभूता शक्तिः विष्णु-रुद्रब्रह्मात्मिका अथ च वाच्यवाचकभावरूपा शक्तिः शब्देष्वेव आश्रिता। यः शब्दो नेत्रे ज्ञापकं यस्य सः यन्नेत्रः, प्रतिभात्मा प्रतिभातविषयत्वात् प्रतिभा। अयं भेद-रूपो व्यवहारः प्रतिपुरुषं प्रतीयते। एतच्च तथ्यं श्रुतिरपि प्रतिपादयति—

'वागेवार्थं पश्यति वाग् ब्रवीति वागेवार्थं निहितं सन्तनोति।
वाच्येव विश्वं बहुरूपं निबद्धं तदेतद् एकं प्रविभज्योपभुंक्ते॥'

इत्थञ्च वाक्तत्त्वमेव भोक्तृ-भोग्य-भोगरूपेण विवर्तते, यद्वा परिणमते, न बाह्यं किञ्चिद् अस्तीति भावः। विश्वं चराचरमिदं ध्वनितत्त्वस्य विवर्तभूतं यद्वा परिणामभूतम्—इत्युभावपि वादौ स्वीक्रियेते विद्वद्भिः। अतएव श्रीभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत॥ १२०॥ इति।

अस्यां कारिकायाम् 'परिणामोऽयं, व्यवर्तत' इत्येवं परिणामविवर्तवाद-योरुल्लेखः कृतः। वस्तुतस्तु उभयदशायामपि एतत् सर्वं विश्वं ध्वनितत्त्वस्य स्फाररूपम्। एष्वकारादिध्वनिषु विलक्षणकार्यसम्पादनक्षमा महती शक्तिरपि विद्यते।

एतच्च तथ्यं वैयाकरणा अधोलिखितया कारिकया दृढीकुर्वन्ति—

रूपादयो यथा दृष्टाः प्रत्यर्थं यतशक्तयः।
शब्दास्तथैव दृश्यन्ते विषापहरणादिषु॥ १३९॥

यथा नीलपीतादिषु रूपत्वमेकमेव, किन्तु नीलं चक्षुषोऽनुग्राहकम्, भास्वरम् तूपघातकमेव। मधुरकटुकादिषु रसत्वमेकमेव; किन्तु मधुरः श्लेष्माणं जनयति, कटुकः पित्तम् इति दृष्टफलाः। एवं रूपादयः प्रत्यर्थं यतशक्तयो नियतशक्तयो दृष्टाः, तथैव तुल्येऽपि शब्दत्वे केचन शब्दाः दृष्टेषु विषापहरणादिषु, केचन सूक्ता-

दयोऽभ्यस्यमानाः अदृष्टेषु धर्मादिषु यतशक्तयो दृश्यन्ते। तदित्थमनया कारिकया ध्वनिनिष्ठा कार्यसम्पादनक्षमा शक्तिः स्फुटरूपेण प्रतिपाद्यते। अकारादि-ध्वनिभ्यश्च पूर्णोदरादिशक्तीनां समुत्पत्तिञ्च

'शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धिनी'।

इत्यादिकारिकाः सामान्यरूपेण स्वीकुर्वन्ति।

इत्थं पाणिनिनाऽष्टाध्याय्याम्, अक्षरसमाम्नायस्य, अथ च लोकमातृकायाः आदौ अन्ते च पठितयोः अकारहकारयोः तदन्तःप्रत्याहृतानां वर्णानाञ्च स्वरूपं निगमागमदृष्टया क्वचिच्च नूतनभौतिकविज्ञानसम्मतिमनुसृत्य सम्पादितम्। आगमदृष्टया एतेषामकारादिवर्णानामनेकानि रूपाणि सन्ति। 'महता देवेन नः साम्यं स्याद्' इत्येवं महाभाष्यस्य पस्पशाह्निकवाक्येन देवतात्मकं स्वरूपं प्रमाणीभवति। परन्तु लोके विशेषरूपेण आस्यान्तर्गतकण्ठताल्वादिस्थानाभिव्यक्तानि श्रोत्रग्राह्यध्वनिरूपाणि, अथ च चक्षुषा ग्राह्याणि लिपिरूपाण्येव व्यवहारेषु प्रयुज्यन्ते। अतो लोके लिप्यात्मकम् अथ च ध्वन्यात्मकं स्वरूप एव महत्त्वमाधत्तः।

॥ इति शम् ॥

●

# अकारादिध्वनीनां रेखाकृतिस्वरूपम्

## [ लिपिः ]

### ( इतिहास-भौतिकविज्ञान-तन्त्रशास्त्रदृष्टचा )

अत्र लिपिविषयिणी चर्चा ध्वनितत्त्वविषयस्याङ्गभूता प्रतिभाति; व्यवहाराय वर्णानां लिखितसङ्केतस्य आवश्यकत्वात्। घटादिशब्दघटकघकारादिवर्णानां लिप्यात्मकस्वरूपाभावे निबन्धः कथमपि लिखितुं न शक्यते। अतस्तद्विषयेऽनुसन्धानं समीचीनमेव प्रतिभाति।

अकारादिवर्णानां द्विविधं स्वरूपं विद्यते—१. प्राकृतवैकृतध्वनिविशिष्टं स्वरूपम् ( ध्वन्यात्मकं स्वरूपम् ), २. लिप्यात्मकञ्च स्वरूपम्।

१. कण्ठताल्वादिव्यापारेण अकारादिवर्णानां प्रथमं स्वरूपमभिव्यज्यते, तस्य च श्रोत्रेन्द्रियेण ग्रहणं क्रियते। हस्तांगुलिगृहीतलेखनीव्यापारेण लिप्यात्मकस्वरूपस्य अभिव्यक्तिर्जायते, चक्षुरिन्द्रियेण च तस्य ग्रहणं क्रियते। तत्तद्वर्णानां लिप्यात्मकं स्वरूपं चक्षुषा परिगृह्य 'एतेन लिप्यात्मकस्वरूपेणायं वर्णं उच्चारयितव्यः' इति बुद्धया निश्चित्य तेषामुच्चैर्यद्वा मनसि उच्चारणं क्रियते।

२. नारदस्मृतौ तु वर्णानां लिप्यात्मकं स्वरूपं चक्षूरूपेण स्मृतम्। तद् यथा—

नाकरिष्यद् यदि ब्रह्मा लिखितं चक्षुरुत्तमम्।
तत्रेयमस्य लोकस्य नाभविष्यच्छुभा गतिः॥ इति।

अस्यायं भावः—मनीषिभिः शास्त्रं चक्षुरिति प्रोक्तम्। श्रुतिस्मृत्यादिरूपचक्षुषा दृष्ट्वा यागादिकं क्रियते। यागादिकर्म श्रुतिस्मृत्यादिषु प्रोक्तम्। तत्र श्रुतिस्मृतिषु वर्णातिरिक्तं न किमपि वस्तुतत्त्वं विद्यते। वर्णानाञ्च उच्चारणानन्तरं स्थितिर्नोपलभ्यते। वर्णानां लिप्यात्मकस्वरूपाभावे श्रुतिस्मृत्युक्तमन्त्राणां विस्मरणाद् यागादिकर्मानुष्ठानस्यापि लोपापत्तिः स्याद्। अतो ब्रह्मा उच्चार्यमाणश्रुतिस्मृतिरूपचक्षुषोऽतिरिक्तमपरं लिखितं चक्षुर्निर्ममे। अतो वर्णोऽस्माकं लिप्यात्मकं चक्षुर्विद्यते।

आचार्यभर्तृहरिचरणास्तु लिपिमक्षरस्मृतेर्निमित्तं मन्यन्ते। तथा चोक्तं वाक्यपदीये—

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत्॥ इति।
( वा० प०, ब्र० का०, २० )

अत्र कारिकायाः पूर्वार्द्धेनैव प्रयोजनं विद्यते। तथा च चिह्नानि लिपयोऽक्षरस्मृतेर्निमित्तानि स्वीक्रियन्ते स्म अस्यां कारिकायाम्। तत्र लिप्यां 'क' 'ख' इत्यादि लिखितं दृष्ट्वा काद्यक्षराणां स्मृतिर्जायते। तदनन्तरं कण्ठादिस्थान-जिह्वादि-करणव्यापारेण तत्तद्वर्णा विवक्षुभिरुच्चार्यन्ते। एवं लिपिः स्मृतिजनिका; वर्णाश्च स्मृतिजन्याः सन्तीति लिपिवर्णयोः स्मार्य-स्मारकरूपसम्बन्धः प्रतीयते।

अकाराद्यक्षराणां स्मारकत्वाल्लिपिरपि तेषां स्वरूपं स्वीक्रियतेऽस्माभिः। किञ्च, आगमशास्त्रदृष्टया अकारादिध्वने रेखाकृतयो न केवलं तत्तत्स्वरव्यञ्जनानां स्मृतिजनिकाः, अपि तु आकर्षणवशीकरणादिरूपा महती शक्तिस्तासु विद्यते। कर्गलपत्रेषु यद्वा निर्मलभूतले रेखया त्रिकोणादिचक्रं विरच्य तत्र च अभीष्टप्राणिनामाङ्कनं वाञ्छितफलप्रदं भवति। एतदुपोद्वलकं प्रमाणं बहुत्र समुपलभ्यते।

तद्यथा नित्याषोडशिकार्णवतन्त्रे द्वितीये पटले—

अदृष्टायास्तु संयोज्य नामचक्रस्य मध्यगम्।
विरच्य योनिमुद्रां च तामाकर्षति क्षणात्॥ १३॥

'चक्रस्य मध्यगं नाम संयोज्य' इत्यस्य नामाङ्कनं कृत्वेत्यर्थः। अदृष्टायाः श्रुतायाः। एवमन्यत्रापि तान्त्रिकयन्त्रेषु नामोल्लेखनपूर्वकं बहवो विधयो दृष्टाः। यन्त्रेषु नामाङ्कनविधिः 'लिप्यक्षरेषु महती शक्तिः' इत्येतत्तथ्यं पोषयति।

भाषावैज्ञानिका अष्टर्टैवाण्टमहोदयाः अकारादिध्वनेरुच्चारणात्मकस्वरूपापेक्षया रेखयाङ्कितस्य स्वरूपस्य अधिकं महत्त्वं व्याचक्षते स्म। भाषाशास्त्रिभिरैतिहासिकैः लिपिविषये बहवो विचाराः प्रदर्शिताः। तद्यथा केचिद् विचारा अधस्तात् प्रस्तूयन्ते—

अकाराद्यक्षराणां द्विविधाऽऽकृतिः। १. अकारादिवर्णानामुच्चारणक्षणे मुखं याम् आकृतिं भजते सा प्रथमाऽऽकृतिः। २. द्वितीया च आकृतिः रेखया कर्गलादिपत्रेषु निर्मीयते। इयमेवाकृतिर्लिपिनाम्ना प्रोच्यते। जगति वर्णानां यावन्त्यो लिपयो दृश्यन्ते, तासां मध्ये वैदिकलिपिरकाराद्यक्षरार्थानुरूपा। रोमनलिपिस्तु एतादृशं गुणं न भजते।

यद्यपि भाषाभेदानुसारेण लिपिभेदो दृश्यते, तथापि बिभिन्नलिपिचिह्नेन एक एव वर्णः स्मर्यते। यथा 'क'—देवनागरलिप्याम्, 'ಕ' इत्येवं तेलगुलिप्याम्, '१' इति ग्रन्थलिप्याम्, 'क' इति वङ्गलिप्यां विभिन्नचिह्नैरेक एव क—वर्णः स्मर्यते, नान्यः। परन्तु कासुचिल्लिपिषु तु एकेन चिह्नेन बहवो वर्णाः स्मर्यन्ते। तदयथा आंग्लभाषायां C इति चिह्नेन केन्द्रार्थवाचके सेण्टर (Centre) शब्दे सकारस्य, छिदिर्-धात्वर्थक कट (Cut) शब्दे च कवर्णस्य स्मृतिर्जायते।

लिपिदृष्ट्या सर्वे वर्णाः स्मर्तुं न शक्यन्ते। किन्तु लिपिज्ञानवत एव अक्षरस्मृतिर्जायते। यथा वृद्धव्यवहारेण घटादिशब्दानां कम्बुग्रीवादिमद्रूपार्थेषु गृहीतशक्तिकस्यैव शाब्दबोधो जायते, नान्यस्य; तथैव रीत्या 'इयं लिपिरस्य वर्णस्य स्मृतिजनिका, इयञ्च अस्य वर्णस्य'—इत्येवं वृद्धव्यवहारेण गृहीतस्मृतिजनकशक्तिकस्यैव तत्तद्वर्णानां लिपिचिह्नस्य दर्शनेन स्मृतिर्जायते। अत एव देवनागरलिपिवृत्तिस्मृतिजनकशक्तिग्रहविहीनस्य लिपिं चक्षुषा पश्यतोऽपि वर्णस्मृतिर्न जायते।

वस्तुतस्तु इदं सर्वं जगत् शब्दस्य स्मृतिजनकं लिप्यात्मकं रूपमिव प्रतिभाति। कम्बुग्रीवादिमद्घटादिजडात्मकं पदार्थं दृष्ट्वा 'घटः सुन्दरः', 'घटः कुरूपो विद्यते' इत्यादिवाक्यात्मकशब्दमुच्चारयितुमिच्छा जायते। यथा स्थानसन्निविष्टावयवं चेतनं प्राणिनञ्च दृष्ट्वा 'अयं सुन्दरः', 'आकृत्या मधुरः' इत्यादिवाक्यात्मकशब्दमुच्चारयितुमिच्छा जागर्ति; परन्तु यथावयवसन्निविष्टजनं घटरूपं वा दर्शन्दर्शं विभिन्नजनैर्विभिन्ना वर्णाः समुच्चार्यन्ते, न तु निश्चयरूपेण एक एव वर्णः, एक एव वा शब्दः समुच्चार्यते। अतो जागतिकव्यवहाराय अकारादिवर्णस्मृतिजनकस्य एतादृशचिह्नस्यावश्यकता जाता यद् एकेन चिह्नेन एकस्यैव वर्णस्योच्चारणं स्यात्, नान्यस्य। यथा 'क' इति चिह्नेन कवर्णस्य, 'ख' इति चिह्नेन खवर्णस्यैवोच्चारणं क्रियते, नान्यस्य। ऋग्वादिवेदमन्त्राणाम्, उदात्तादिस्वराणाञ्च सुरक्षणार्थं ब्रह्मा अकारादिवर्णानां स्मृतिजनकं लिखितं चक्षुर्निर्ममे, यत् ब्रह्मलिपिरित्यपरनाम्नाऽभिधीयते।

### लिपिपर्यायवाचिनः शब्दाः

लिपिपर्यायवाचिनः शब्दाः—'लिखितम्', 'अक्षरविन्यासः', 'लिपिः', 'लिविः', 'अङ्कितम्', 'चिह्नम्'—इत्येते शब्दा लिप्यर्थे प्रयुज्यन्ते। एतेषां मध्ये लिपिशब्दोऽतिशयेन प्रसिद्धो विद्यते। तत्रादद्याः पर्यायवाचिनः शब्दाः अमरकोषे निर्दिष्टाः समुपलभ्यन्ते। यथा—

लिखिताक्षरविन्यासे लिपिर्लिविरुभे स्त्रियाम्। इति[१]।

लिख्यते स्म इति लिखितम्, न क्षरन्तीत्यक्षराणि, विन्यसनं विन्यासः, अक्षराणां विन्यासः, लिखितञ्च अक्षरविन्यासश्च अनयोः समाहारे लिखिताक्षरविन्यासम्, तस्मिन्निति लिखिताक्षरविन्यासे। लिप्यते इति लिपिः। लिपिः सौत्रो धातुः। लिख्यते इति लिविः। उभे स्त्रियां स्याताम्। इति लिखिताक्षरविन्यास-लिपिलिविशब्दानां क्रमशो व्याख्यानं वेदितव्यम्। एतेषां मध्ये यद्यप्यक्षरविन्यासशब्दो

१. अमरकोषस्य द्वितीयकाण्डे क्षत्रवर्गः।

लिप्यर्थे विद्यते, तथापि केवलमक्षरशब्दोऽपि लिप्यर्थे दृश्यते। अक्षरशब्दस्य लिप्यर्थे विद्यमानादेव लेखकपदार्थे अक्षरचणशब्दः प्रयुज्यते। तथा चोक्तम् अमरकोषे—

लिपिङ्करोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ इति।

तथा च 'अक्षरचण' शब्दस्य 'अक्षरेण चणः वित्तः प्रतीतः'—इत्यर्थे "तेन वित्तश्चुञ्चुप्-चणपौ" इत्यनेन चणप्प्रत्यये, अनुबन्धलोपे च अक्षरचणशब्दस्य निष्पत्तिर्जायते। यदि अक्षरचणशब्देऽक्षरपदेन वर्णानां ध्वन्यात्मकस्वरूपस्यैव ग्रहणं क्रियेत, तर्हि 'उच्चरितवर्णेन वित्तः' इत्येव 'अक्षरचण'-शब्दस्य तात्पर्यं स्यात्, न तु 'लिखितवर्णेन वित्तः' इति तात्पर्यं भवेत्। ततश्च अमरकोषे लिपिकरार्थेऽक्षरचण-शब्दस्य प्रयोगो नोपयुज्येत। अक्षरशब्देन लिखितवर्णस्वरूपग्रहणे तु लिपिकरार्थे-ऽक्षरचणशब्दः सङ्गच्छते। अक्षरशब्दस्य लिखितवर्णस्वरूपे ग्रहणादेव पद्मपुराण-स्योत्तरखण्डे, श्रीमद्भागवतमहात्म्यस्य च चतुर्थाध्याये—

तद्भालाक्षरमालाञ्च वाचयामास योगवान्।
सर्वं ज्ञात्वा यतिः पश्चाद् विप्रमूचे सविस्तरम् ॥ इति।
( भा० अ० ४, श्लो० ३३ )

अस्मिञ्श्लोके 'अक्षरमालाम्' इत्युक्तम्। 'अक्षरमालाम्' इति पदेऽक्षरशब्देन वर्णानामुच्चारणस्वरूपग्रहणे ( ध्वन्यात्मकस्वरूपग्रहणे ) तु तेषां क्षणावस्थायितया अक्षरमालाया असम्भवाच्च 'तद्भालाक्षरमालाञ्च वाचयामास'—इति श्लोको न सङ्गच्छते। अक्षरपदेन लिप्यात्मकवर्णस्वरूपग्रहणे तु भाले लिखितवर्णानां चिरकालपर्यन्तं विद्यमानस्य सम्भवात् 'अक्षरमालां वाचयामास' इति कथनं सङ्गच्छेत। एवं पूर्वोक्तयुक्त्या अक्षरशब्दस्यापि लिखितवर्णस्वरूपार्थस्य लिप्यर्थस्य वा वाचकता स्वीकार्या। अक्षरशब्दस्य लिखिताक्षरशब्दस्य लिखितवर्णस्वरूपार्थे वृत्तेः सत्त्वादेव 'साक्षरांगुलिमुद्रा'[1] इत्यमरोक्तं सङ्गच्छते।

चिह्नम्—चाहयति, चह्यतेऽनेनेति वा चिह्नम्। 'चिह्न'शब्दस्य लिप्यर्थे प्रयोगो भर्तृहरिणा कृतः। यथा—

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः। इति।
( वा० प०, ब्र० का०, २० )

'अक्षरस्मृतेश्चिह्नानीव' इत्यस्य अक्षरस्मृतेर्लिपय इव इत्यर्थो बोद्धव्यः।

अङ्कितम्—अङ्क्यते स्म इत्यङ्कितम्। यद्वा अङ्कनम् अङ्कः, अङ्कोऽस्य अस्मिन् वेत्यर्थे "तदस्य सञ्जातं तारकादिभ्य इतच्" इतीतचि प्रत्यये कृते सति

१. अमरकोषस्य द्वितीयकाण्डे, मनुष्यवर्गे, श्लो० १०८।

अनुबन्धलोपे 'अङ्कितम्' इति शब्दो निष्पद्यते। यद्यप्यधुना अङ्कशब्दः एकादि-संख्यार्थे व्यवह्रियते, तथापि अङ्कशब्दस्य चिह्नार्थे लिखितार्थे वाऽपि प्रयोगः समुपलभ्यते। यथा—

रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ इति।

( वा० रा०, सु० का० )

अस्मिन्श्लोके 'रामनामाङ्कितम्' इत्युक्तम्। रामनाम्ना अङ्कितम् = चिह्नितम्, लिखितं वेति तस्यार्थो वेदितव्यः।

एवञ्च लिप्यर्थे—लिखितम्, अक्षरविन्यासः, लिपिः, लिविः, चिह्नम्, अङ्कितम्—इत्येते शब्दा उपलभ्यन्ते। परन्त्वधुना लिपिशब्द एव अक्षरविन्यासार्थे प्रचुररूपेण बहुत्र प्रयुज्यते।

## योरोपीय-पाश्चात्यलिपिकलायाः प्रारम्भः, तस्या विकासश्च

अकारादिवर्णानां लिप्यात्मकस्वरूपस्य प्रारम्भश्चित्रादेव सञ्जातः— इत्येवम् आधुनिकानां गवेषणा विद्यते। यथा सङ्गीतात्मकस्वरेण भाषाविधेः, यद्वा भाषाया ज्ञानं जातम्, एवं चित्रकलातो लेखनकलायाः प्रादुर्भावः सञ्जातः[1]। चित्रात्मक-लिपिप्रणाल्याम् एकेन चित्रेण सम्पूर्णवाक्यस्य बोधो जायते, न तु एकवर्णस्य। शनैः शनैरनवधानतादिदोषवशात् चित्राणां समीचीनरूपेण अङ्कनाभावात् तेषु विकृतिः समायाता। गोवत्सादिचित्राणां सुष्ठुरूपेण निर्माणे कर्तव्ये अशक्त्याऽप-भ्रष्टचित्रनिर्माणं प्रारब्धम्। कालक्रमानुसारेण एतेषामपभ्रष्टचित्राणामपि परिवर्तनं जातम्। एतेषामपभ्रष्टचित्राणां परिवर्तितं रूपमेव एकाक्षरबोधक-शक्तिमती लिपिर्दृश्यते, तस्या मूलं चित्रमेव विद्यते। चीनदेशे च एकाक्षरबोधक-लिपेर्विकासकालः २००० सहस्रद्वयवर्षेभ्यः पूर्वं[2] जातमित्येवमैतिहासिका विद्वांसो मन्यन्ते।

एवमेव सर्वासां यूरोपीयलिपीनामपि परम्परया चित्रादेव विकासः सञ्जातः, यतो हि यूरोपीयलिपीनां मूलं ग्रीकलिपिर्विद्यते[3]। थेराद्वीपे ग्रीकलिप्यां

---

१. प्रायो भाषावैज्ञानिकग्रन्थेषु लिपिविषयिणी चर्चा कृता विद्यते। तद्यथा श्यामसुन्दरदास कृतं 'भाषारहस्यम्', श्रीप्रभुनारायणशर्मकृतं 'भाषाविज्ञानतत्त्वम्' इत्यादयो ग्रन्था द्रष्टव्याः।

२. प्रभुनारायणशर्मकृतस्य 'भाषाविज्ञानतत्त्व' इति ग्रन्थस्य 'लिपि के विकास का इतिहास' इति स्थले द्रष्टव्यम्।

३. उपर्युक्तग्रन्थस्य 'यूरोप की लिपियाँ' इति स्थलं द्रष्टव्यम्।

समुल्लिखितानां येषां वर्णानां समुपलब्धिर्जाता तेषां लेखनकालो नवमशतीपर्यन्त-मैतिह्यविद्भिर्मन्यते। ग्रीकलिपिः सामीत्यपरपर्यायिनाम्नाऽप्यभिधीयते। सामी-लिपेः स्वरूपमेकाक्षरात्मकमासीत्, तस्याश्च विकासश्चित्रादेवाभूत्। सामीलिपेः सुमेरीचित्रात्मकसंकेताद् विकासस्य सत्त्वाद् 'ग्रीकलिपेश्चित्रादेव विकासः सञ्जातः' इति निश्चयेन वक्तुमुपयुज्यते।

'यूरोपीयलिपीनां चित्रादेव विकासः सञ्जातः'—इत्यत्र द्वितीयं प्रमाणम् एत्रुस्कनलेखो विद्यते। अयं लेखो रोमनदेशस्याभ्युदयात् पूर्वमिटलीदेशस्य भाषायां लिपिबद्धः कृतः। यस्यां लिप्यामयं लेखो विद्यते, सा लिपिरेशियामाइनर-स्थानाद् रोमदेशं प्राप्ता। एशियामाइनरलिपेर्मूलं चित्रमेवासीत्। कतिपयकालानन्तरम् एशियामाइनरलिपिरेव[1] रोमलिपिनाम्ना प्रसिद्धमागता। एवञ्च रोमनलिपेर्मूल-भूता एशियामाइनरलिपिः, तस्याश्च चित्रमयत्वाद् रोमनलिपेरपि मूलस्वरूपं चित्रमयमेव विद्यते। योरोपदेशस्योत्तरप्रदेशेषु 'रूनी' नामिका परालिपिः प्रयुज्य-माना आसीत्। इयं लिपिः पञ्चमशताब्द्यां केल्टीदेशे औधलिपि-रूनीतो विकासं प्राप्ता, अस्या लिपेर्ग्रीकलिपिना सह कोऽपि सम्बन्धो न विद्यते।

योरोपदेशे चतुर्थशताब्द्याम् अर्मीनीत्यपरनाम्ना प्रसिद्धा काचिल्लिपि-र्व्यवह्रियमाणा आसीत्। अस्या लिपेर्मूलविषये मतद्वयं स्वीक्रियते विद्वद्भिः। एकस्मिन् मतेऽस्या मूलम् 'ईरानी' लिपिः, अपरस्मिंश्च मते 'ग्रीकलिपिः' इति मन्यते। वस्तुतस्तु सीरियादेशे स्थितस्य 'सिदर्ली' नामकस्थानस्य, अपि च यूरोप-देशस्योत्तरीयप्रदेशानां मुख्यतमेयं लिपिरासीत्। उत्तरप्रदेशे जायमानत्वाच्च अस्या सम्बन्धो रूनी-लिपिना सह प्रतीयते। अर्मीनीलिपिद्वारा च अरबी-हिब्रूलिपीनाम्, अरबीलिपेः शाखाभूतयोः कुफीनेस्खीति नामभ्यां प्रसिद्धयोः विकासः सञ्जातः। एवमेव लिपिविकासविषये ( 'कस्या लिपेः का लिपिर्मूलम्' ? इत्यस्मिन् विषये ) अन्यान्यपि विभिन्नानि मतानि तत्रोट्टङ्कितानि। परन्तु सर्वेषां मतानुसारेण सर्वासां लिपीनां मूलं चित्रमेवासीदिति निश्चितं जातम्।

## अकारादिवर्णानां भारतीयरेखाकृतिस्वरूपस्य अस्तित्वकालः

एवञ्च मिश्र-चीन-जापान-ग्रीक-इटली-रोम-एशियामाइनरेत्यादिसमस्त-विश्वस्य लिपेर्मूलं सर्वशश्चित्रमेवाङ्गीक्रियते। किन्तु 'भारतवर्षेऽकारादिवर्णानां लिप्यात्मकस्वरूपस्य कदा कथञ्च विकासः सञ्जातः' इत्यस्मिन् विषये आधुनिक-

१. "पीछे इसी को 'रोमन लिपि' नाम दिया गया"—प्रभुनारायणशर्मा, भाषाविज्ञानतत्त्व—यूरोप की लिपियाँ।

ऐतिह्यविदां विविधाः प्रवादाः श्रूयन्ते। तद्यथा—भारते[1] वर्षेऽकारादिवर्णानां लिप्यात्मकस्वरूपस्य नितरामभाव आसीत्। सर्वेषां ऋगादिवेदानाम् ऋषिसम्प्रदायेषु शिष्यपरम्परया मौखिकरूपेणाध्ययनमध्यापनञ्च व्यवह्रियमाणे आस्ताम्। ऋगादिसंहितास्थानां मन्त्राणां लिप्यात्मकस्वरूपाभावाद्, गुरुमुखादेव श्रवणात् वेदस्यापरं नाम श्रुतिरिति प्रसिद्धं सञ्जातम्। ऋगादिवेदानां प्रादुर्भावानन्तरं प्रचुरसमये अतिक्रान्ते सति १८००तमाष्टशताधिकैकसहस्रमिते ई० पूर्वकाले यदा भारते लेखनकलायाः प्रारम्भः सञ्जातस्तदा वैदिकमन्त्रा लिपिबद्धाः सञ्जाताः।

केचित्तु विद्वांसः ७०० (सप्तशतम्) ईस्वीपूर्वम् अकारादिवर्णानां लिप्यात्मकस्वरूपस्य प्रारम्भकालं मन्यमाना इव प्रतीयन्ते[2]।

'केचित्तु विद्वांसः पाणिनिकालेऽप्यकारादिवर्णानां लिप्यात्मकस्वरूपस्याभावं प्रतिपादयन्ति। पाणिनीयाष्टाध्यायीग्रन्थे न कोऽप्येवं संकेतः समुपलभ्यते, येन पाणिनिकालिक्या लिपिकलाया अस्तित्वमनुमीयेत। यथा मैक्समूलरमहोदय ईस्वीयचतुर्थशताब्दीतकालः पूर्वं पाणिनीयकालं स्वीकृतवान्। पाणिनिकाले च अकारादिवर्णानां लिप्यात्मकस्वरूपस्याभावः आसीत्—इत्येवं च स सिद्धान्ततया निश्चितवान्।

वर्नेलमहोदयास्तु '४०० ई० पूर्वकालात् प्रारभ्य ५०० ई० पूर्वं भारतवर्षेऽकारादिवर्णानां लेखनकालः प्रारब्धः' इति भारतीयलिपिकालं निश्चिन्वन्ति। भारतीयाः फिनिशिअनजनेभ्यो लेखनशिक्षां प्रापुः। जम्बूद्वीपस्य यः प्रतीच्योत्तरभागोऽधुना 'सीरिया' देशनाम्ना प्रसिद्धः तत् स्थानं 'फिनिशिआ' उच्यते। तत्र प्रसूताश्च जनाः 'फिनिशिअल' नाम्नाऽभिधीयन्ते। फिनिशिया-देशस्यापरं नाम 'एशिया माइनर' इत्यपि प्रथितं विद्यते।

---

१. "विद्वानों के मतानुसार वैदिकमन्त्र पहले मौखिक रूप में जीवित थे। 'श्रुति' नाम उनका एतदर्थ ही पड़ा। उसके बाद १८०० ई० पू० भारत में लेखनकला का जन्म होने के कारण वैदिकमन्त्र लिपिबद्ध होने लगे"—वाचस्पतिगैरोलाकृते 'संस्कृत साहित्य का संक्षिप्त इतिहास' इति ग्रन्थे 'ऋग्वेद का निर्माण' इति स्थले द्रष्टव्यम्।

२. "इसलिये वैदिक ज्ञान की लुप्त परम्परा को सुरक्षित रखने और ज्ञान के नये आविर्भूत स्रोतों को लिपिबद्ध करने के लिये उत्तर वैदिक युग का आविर्भाव हुआ ··· ··· भोजपत्रों और ताड़पत्रों पर ग्रन्थ-निर्माण की परम्परा का प्रारम्भ सूत्रग्रन्थों से हुआ।···। इस दृष्टि से सम्पूर्ण सूत्र-साहित्य के निर्माण के लिये हम ७०० ई० पू० से २००० ई० पूर्व का आनुमानिक समय निर्धारित कर सकते हैं।"
(वाचस्पतिगैरोलाकृते संस्कृत साहित्य का संक्षिप्त इतिहास ग्रन्थे, पृ० सं० १३५)

अकारादिवर्णानां भारतीयलिपिविषये विविधविदुषां विविधाः प्रवादाः श्रूयन्ते। यत् किमपि चैतैरुच्यते तत्सर्वम् अनुमानमात्रं प्रतीयते। वस्तुतस्तु अकारादिवर्णानां लिप्यात्मकस्वरूपमासृष्टेर्विद्यते। हस्तपादमस्तकरेखाः न कस्यचित् लौकिकस्य प्राणिनः कृतिरूपाः। प्रत्युत आसृष्टेः एतासां स्थितिः। हस्तादिरेखया भूतादिकालत्रयस्य ज्ञानं जायते। हस्तादिस्थरेखाऽपि अकारादिध्वने रेखाकृतिस्वरूपाः। अतएव 'तद्भालाक्षरमालाञ्च वाचयामास योगवित्' इति पूर्वोक्ते श्लोके 'भालाक्षरमालाम्' इत्युक्तिः संगच्छते। भालाक्षराणामासृष्टेः सत्त्वाद् अक्षरलेखनं सृष्टिकालिकमेव। किञ्च 'धाता नामरूपे व्याकरवाणि' इति श्रुत्या मदुक्तमेव पुष्यते। यथा ऋगादिवेदानां प्राचीनत्वं तथा अकारादिवर्णानां लिप्यात्मकस्वरूपमप्यतीव प्राचीनं विद्यते। आधुनिका विबुधाः यं लिपिप्रारम्भकालं निश्चिन्वन्ति, ततोऽप्यतीव पूर्वं लेखनस्य प्रारम्भः सञ्जातः।

अत्र अन्यान्यपि प्रमाणानि समुपस्थाप्यन्ते। तद्यथा—

## वैदिकयुगेऽकारादिवर्णानां लिप्यात्मकास्तित्वस्य प्रमाणम्

ऋग्वेदे 'अष्टकर्णी' शब्दस्य प्रयोगः कृतस्तत्प्रामाण्येन वैदिकयुगे लिपिकलाया अस्तित्वं स्पष्टतया प्रतीयते। तद्यथा—

इन्द्रेण युजा निःसृजन्त वाधतो व्रजं गोमन्तमश्विनम्।
सहस्रं मे ददतो अष्टकर्ण्यः श्रवो देवेष्वक्रत॥ इति।
( ऋ० वे०, म० १०, सू० ६२, म० ७ )

अस्मिन् मन्त्रे नामानेदिष्ठकृतस्य अष्टकर्णगोदानस्योल्लेखो दृश्यते। 'अष्टकर्ण्यः' इत्यस्य 'अष्टौ संख्या कर्णयोर्यासां ताः अष्टकर्ण्यः' इति विग्रहः स्वीक्रियते, न तु 'अष्टौ कर्णा यासु' इति; असम्भवात्। एतन्मन्त्रप्रामाण्येन मन्ये पुराकाले बहुसंख्यकासु गोषु मध्ये मदीया का गौः, इयञ्च कस्य गौः, इयं गौर्मदीया वा अन्यस्य?—इति भ्रमनिवारणाय गवां कर्णयोरक्षरेष्वंकेषु च अष्टसंख्यकाः पञ्चसंख्याकाः, स्वस्तिकादीनां चिह्नानि वा लिख्यन्ते स्म।

सायणाचार्यस्तु 'इन्द्रेण युजा निःसृजन्त' (ऋ०वे० १० म०सू० ६२ म० ७)—इत्येतन्मन्त्रघटक-अष्टशब्दस्य व्याप्त्यर्थकाद्[1] अशूधातोर्निष्ठायां निष्पन्नं रूपं मत्वा तस्य विस्तृतार्थे शक्तिं स्वीकृत्य, 'अष्टकर्णी' शब्दस्य 'विस्तृतकर्णाः' इत्यर्थं व्याचष्टे। विस्तृतकर्णत्वञ्च अन्येषामप्यङ्गानामुपलक्षणं मत्वा 'व्याप्तसर्वावयवा-

१. 'अष्ट' इति 'अशू व्याप्तौ' धातोः निष्ठायां रूपम्, विस्तृतकर्णाः ( ऋग्वेद १०।६२।७ ) इत्येतन्मन्त्रस्य सायणभाष्ये।

गाश्च ददत्'—इत्यमुमर्थं कृतवान्। एवञ्च, अयं अष्टकर्णीशब्दो वैदिकयुगेलिपेरस्तित्वं प्रमाणयितुं न क्षमः।

परन्तु भगवान् पाणिनिरष्टाध्याय्यां "कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नछिन्नछिद्रस्रुवस्वस्तिकस्य" (पा० सू० ६।३।११५) इति सूत्रेण कर्णशब्दे परे लक्षणवाचकानां आविष्टादीनां दीर्घप्रतिषेधम् अनुशास्ति, लक्षणवाचकादिगुणादिशब्दानाञ्च 'द्विगुणाकर्णः' इत्यादि शब्देषु दीर्घं कर्तुमुपादिशत्। 'कर्णेलक्षण—' इति सूत्रे पञ्चशब्दस्य[१] साहचर्येण संख्यावाचकस्य अष्टशब्दस्य ग्रहणं क्रियते, नान्यस्य। पाणिनिमते 'इन्द्रेण युजा'—इत्येतन्मन्त्रघटकस्य अष्टशब्दस्य संख्यार्थे शक्तिः स्वीकर्तव्या, गोषु अष्टकर्णानामसम्भवात्तासां कर्णयोः अक्षरेष्वङ्केषु वा अष्टसंख्योल्लेख आपाततो विश्वासमारोहति। एवम् ऋग्वेदे अष्टकर्णीगोदानस्योल्लेखाद् अकारादिवर्णानां लिप्यात्मकस्वरूपस्यास्तित्वं स्वीकर्तुं विश्वासपदवीमाटीकते।

वैदिकयुगे लिपेरस्तित्वस्वीकारेऽपरञ्च प्रमाणं श्रीदाशरथिरामस्य वैदिकयुगीयत्वरूपं विद्यते। तस्य च स्वनामाङ्कितमुद्राधारणरूपञ्च विद्यते। ऋग्वेदस्य दशमे मण्डले श्रीदाशरथिरामस्य चर्चा दृश्यते। अत्र प्रमाणम्—

'प्रतदं दुःशीमे पृथवाने वेने'
(ऋ० वे० १०।९३।१४)

इति मन्त्रो विद्यते। प्रमाणरूपेण अत्रोद्ध्रियमाणमन्त्रस्य भाष्यं सायणाचार्यो निम्नोक्तप्रकारेण कृतवान्—

'ये देवाः पञ्चशतानि रथानि युत्वाय अश्वैर्युक्त्वा अस्मत्कामाः सन्तः यथा यज्ञमार्गेण गच्छन्ति तेषामेषां देवानां विश्रावि, देवानां लोके वा विशेषेण श्रावकगुणयुक्तं तत्स्तोत्रं दुःशीमे=दुःशीमनाम्नि, पृथवाने=पृथवानः पृथिः, तस्मिन् वेने च, असुरे, बलवति रामे च एतेषु राजसु प्रवोचं प्रब्रवीमि प्रख्यापयामीत्यर्थः' इति।

अत्र भाष्ये दुःशीमेत्यादि व्यक्तिचतुष्टयस्य कृते राजशब्दो विशेषणतया प्रायुज्यत। त्रयो रामाः प्रसिद्धाः सन्ति। ते यथा—परशुरामः, दाशरथिः रामः, बलरामश्च। एतेषां मध्ये श्रीदाशरथी राम एव राजा बभूव, नान्यः। तेन अत्र

---

१. 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति नियमानुसारेण संख्यावाचकपञ्चशब्दसाहचर्येण संख्यावाचकस्यैव अष्ट-शब्दस्य ग्रहणम्।

मन्त्रे तस्यैव ग्रहणं वेदितव्यम् । एवं सायणाचार्यमतानुसारेण श्रीदाशरथिरामस्य[1] वैदिकत्वेऽकारादिवर्णानां लिप्यात्मकस्वरूपमपि वैदिककालिकं निश्चितं जातम् । यतो हि अयं भगवान् श्रीरामः स्वनामाक्षराङ्कितां मुद्रां दधाति स्म । तथा चोक्तं वाल्मीकीयरामायणे सुन्दरकाण्डे—

'रामनामाङ्कितं चेदं पश्य देव्यंगुलीयकम्' । इति ।

किं बहुव्याहारेण, ऋगादिवेदेषु एवम्भूता अपि पदार्था दृष्टिपथं समायान्ति येषां वैदिककालानन्तरं प्रादुर्भावो भासते, परन्तु तेऽपि वैदिककालिकसत्तावन्तो दृश्यन्ते । तद्यथा—

"इमं मे गङ्गे यमुने शुतुद्रि" इति ।
( ऋ० वे० १०।७५।५ )

एवं पवित्रतमानां गङ्गादिनदीनां वैदिकयुगत्वे 'प्रतदं दुःशीमे' इति मन्त्रे श्रीरामस्योल्लेखात् तस्य वैदिकयुगीयत्वस्वीकारे न कापि क्षतिः । तस्य च स्वनामाङ्कितमुद्राधारणस्योल्लेखाच्च लिपेरस्तित्वं वैदिकयुगीयं स्वीकर्तुमापतति ।

अत्र विषयेऽपरश्च वैदिकं प्रमाणमथर्ववेदीय एको मन्त्रो दृष्टिपथं समायाति । स च मन्त्रो यथा—

यद्वो मुद्रं पितरः सोम्यञ्च तेनो सचध्वं स्वयशसो भूतम् ॥ इति ।
( अ० वे० १८।३।१९ )

हे पितरः ! यत्सोम्यम् = सोमयागं कर्तुं योग्यम् ( वित्रम् इत्यर्थः ) मुद्रम् = धनं विद्यते, तादृशं धनम् अस्मभ्यं प्रयच्छतु, न तु अन्यायसमर्जितमशुद्धं नुद्रं मुद्रां धनं वा' इति पूर्वार्धमन्त्रस्य तात्पर्यं विद्यते । अस्मिन् मन्त्रे मुद्रंपदं वैदिकयुगे लिपेरस्तित्वं प्रमाणीकरोति । मुदं हर्षं रातीति विग्रहे मुदकर्मक-राधातोः 'आतोऽनुपसर्गे कः' इति कप्रत्ययेऽनुबन्धलोपे "आतो लोप इटि च" इति सूत्रेणं राधातुघटकस्य आकारस्य लोपे सति 'मुद्र' इति स्थिते 'छन्दसि सर्वे विधयो विकल्प्यन्ते' इति नियमानुसारेण मुद्रपदाद् टाबनुपपत्तौ च मुद्रमितिरूपं टाप्प्रत्यये च 'मुद्रा'

---

१. "ऐसी भी परम्परागत श्रुतियां हैं । वेदों की रचना के बाद रामायण की रचना हुई और उसकी कलेवरबृद्धि के लिये लगभग ५०० ई० पूर्व तक उसमें अनेक क्षेपक जुड़ते गये । विद्वानों की एक परम्परा राम और बाल्मीकि को समकालीन मानने के पक्ष में है । श्री चिन्तामणि विनायक वैद्य का मत है कि ऋग्वेद के दशवें मण्डल, जिसमें राम का उल्लेख हुआ है, उसका नायक कोई दूसरा नहीं था, बल्कि दाशरथि राम ही थे" ।—श्री वाचस्पति गै०, सं० सा० सं० इति० ।

इति रूपं संसिध्यति। इदञ्च मुद्रपदं ( मुद्रापदम् ) वैदिकयुगे लिपेरस्तित्वस्वीकारे कथं प्रमाणमिति ज्ञानात् पूर्वं मुद्रा-पदस्य रूप्यकार्थे ( धनार्थे ) अद्यापि प्रयोगः क्रियते, तत्कथमिति ज्ञानमावश्यकं विद्यते। मुद्रापदस्यापभ्रष्टरूपः 'मुहर' इति शब्दोऽधुना बहुशः प्रयुज्यते। अपभ्रष्टं मुहरशब्दवाच्यार्थवाचकं यन्मुद्रापदम्, तद्वाच्यार्थरूपे काष्ठादिफलके रिजर्वबैङ्काध्यक्षस्य पदसंकेतपूर्वकाणि नामाक्षराणि अङ्कितानि भवन्ति। कर्गलपत्रनिर्मितं चतुष्कोणात्मकं यद्वा वृत्ताकारात्मकं धातुनिर्मितं यद्रूप्यकं दृश्यते, तत् कोषाध्यक्षनामाङ्कितमुद्रया, अपि च राष्ट्रचिह्नेनापि ( अशोकस्तम्भेन ) चिह्नितं भवति। अतः कोषाध्यक्षनामाक्षराङ्कितया मुद्रया चिह्नितत्वाद् ( धनम्, द्रव्यं वा ) मुद्रापदेन व्यवह्रियते।

इयं च प्रथा न आधुनिकी, अपि तु अस्याः प्रथायाः परम्परा अविच्छिन्नरूपेण वैदिकयुगादेव प्रचलिता अवगम्यते। 'यद्वो मुद्रं पितरः—' इत्यथर्ववेदीयमन्त्रे धनार्थे ( रूप्यकार्थे, द्रव्यार्थे वा ) मुद्रंपदस्य ( मुद्रापदस्य ) प्रयोगात् ज्ञायते यत् पुराकाले वैदिकयुगे राष्ट्रशासका राजानः आदान-प्रदानव्यवहारसौविध्यार्थं स्वनामाक्षराङ्कितमुद्रया अर्धवालिस्तमात्रं यद्वा ततोऽपि न्यूनं चतुष्कोणात्मकं भूर्जादिपत्रम् चिह्नितं कृत्वा धनरूपेण व्यवहर्तुम् आज्ञपयाञ्चक्रुः। एवं रीत्या राजनामाक्षराङ्कितमुद्रायाः प्रामाण्यबलेन वैदिकयुगे लिपेरस्तित्वं विश्वासपदवीमाटीकते। अद्यतनमुद्रातो वैदिकयुगीयमुद्रायाः ( मुहरपदार्थस्य ) स्वरूपे वैलक्षण्यं स्यादिति तु अन्यत्। परन्तु वैदिकयुगेऽपि राजनामाक्षराङ्कितमुद्राया व्यवहारः आसीत्।

किञ्च, वैदिकयुगेऽकारादिवर्णानां लिप्यात्मकव्यवहारस्य अन्यदपि प्रमाणमुपलभ्यते। तद्यथा ब्रह्माण्डपुराणेऽगस्त्यनारदसम्वादे—

'भूर्जे वासने रक्ते क्षौमे वा तालपत्रके।
त्रिगन्धेनाथवा मस्या विलेख्यं धारयेच्छुचिः॥
लिखित्वा पूजयेद् यस्तु सर्वसौभाग्यवान् भवेत्'।

इत्यादिषु श्लोकेषु 'लिखित्वा', विलेख्यम्'—इति शब्दद्वयं प्रयुक्तं दृश्यते। यो हि अगस्त्यः ऋग्वेदस्य प्रथममण्डले एकोनविंशतितमसूक्तस्थानां 'नास्य मारुधतः कामन्' ( ऋ० वे० ) इत्यादिमन्त्राणां द्रष्टा, स एव अगस्त्यः नारदेन सह सम्वादं कृतवान्, तस्मिंश्च सम्वादे 'विलेख्यम्', लिखित्वा'—इत्यनयोः शब्दयोः प्रयोगं कृतवान्। एवं द्रष्टृप्रवक्तृसामान्येन लेखनप्रथाया अपि वैदिकयुगे समानरूपेण उपलब्धिः स्वीकार्या।

एवमेव द्यूतक्रीडायाम् अक्षरेषु अङ्केषु च एकादिसंख्यया[1] अङ्कितस्य ग्लहादेरुल्लेखस्यापि लाभाद् लिपेरस्तित्वस्य प्राचीनत्वं स्वीकर्तुमापतति ।

ये केचिद् वेदस्य श्रुतीत्यपरनामप्रामाण्येन लिपेरनस्तित्वं मन्यन्ते, तत् किमपि पुष्टं प्रमाणं न प्रतीयते । ऋषिभिर्हृदयाकाशे मन्त्राणां मनसा श्रवणाद् वेदाः श्रुतीत्यपरनाम्नाभिधीयन्ते । तथा चोक्तम्—'ऋषयो मन्त्रद्रष्टारः' इति । 'पश्यार्थैश्चानालोचने' इति सूत्रेऽनालोचने-ग्रहणात् प्रेक्षणार्थकदृश्धातोः सकलेन्द्रिय-जन्यज्ञानार्थे वृत्तिमत्त्वाद् 'ऋषयो मन्त्रद्रष्टारः' इत्यत्र द्रष्टृपदस्य श्रोत्रेऽर्थे वृत्ति-र्वेदितव्या । तथा च अस्य वाक्यस्य 'ऋषयो मन्त्रश्रोतारः' इत्यर्थस्यावधारणाद् वेदाः श्रुतिनाम्ना व्यवह्रियन्ते, न तु मन्त्राणां लेखनाभावाद् । वैदिकयुगे मन्त्राणां लेखनस्य प्रथा आसीत्, किन्त्वधुनावद् अतिशयेन व्यवह्रियमाणा नासीत् । मन्त्र-लेखनक्रियाया अतिशयेन व्यवह्रियमाणत्वाभावे हेतुश्च लेखनकर्मणो निन्दितत्व-रूपम्[2] प्रतीयते । लेखनकर्मणि च केचिदेव अधिकृता आसन् । अत एव भगवान्

---

१. 'चतुरश्चिद् ददमानाद् बिभीयाद् आनिधातोः । न दुरुक्ताय स्पृहयेत्' । ( ऋ० वे०, सू० ८१, म० ९ ) । चिदित्युभयार्थे विद्यते । अक्षद्यूतं कुर्वतोरुभयोर्मध्ये यः पुमान् चतुरः चतुःसंख्याकान् कपर्दकान् ददमानाद् ददतो हस्तो धारयतः पुरुषाद् आनिधातोः कपर्दकाः निपातपर्यन्तं बिभीयाद्—अस्य जयो भविष्यति, न भविष्यतीत्यन्यो भीतिं प्राप्नु-यात् । अत्र यथाभयं तथा दुरुक्ताद् भेत्तव्यम्—इति धर्मरहस्यम् ।

कलिः शयानो भवति सञ्जिहानस्तु द्वापरः ।
उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन् ॥

( ऐ० ब्रा० ७।१५ )

"यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति, यत् किञ्च प्रजाः साधु कुर्वन्ति" ( छान्दोग्योपनिषद् ४।१।४।६ ) ।

अस्य च शङ्कराचार्य एवं व्याख्यानं कृतवान्—कृतो नाम द्यूतसमये प्रसिद्धश्चतुरङ्कः स यदा जयति द्यूते प्रवृत्तानां तस्मै विजिताय तदर्थमितरे त्रिद्व्येकाङ्काः अधरेयाः अधरेयाः त्रेता-द्वापर-कलिनामानः संयन्तिसंगच्छन्तेऽन्तर्भवन्ति ।

२. वेदविक्रयिणश्चैव वेदानाञ्च प्रदूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥ इति ।

( महा०, अनु० प०, ६३।२८ )

अत्र श्लोके 'वेदानां लेखकाश्चैव' इत्यस्य 'वेदविक्रयिणश्चैव' इत्येतत्साहचर्याद् 'व्यापार-वृत्त्या ये लिखन्ति ते वै निरयगामिनः, नान्ये' इति तात्पर्यं बोद्धव्यम् । अन्यथा ऋगादि-वैदिकमन्त्राणां भाष्यकर्तॄणां सायणाचार्यादीनामपि निरयत्वापत्तिः ।

व्यासः श्रीगणेशं महाभारतस्य लेखकं नियुक्तवान् । पुँल्लिगानां मध्ये गणेशापेक्षया, स्त्रीषु च सरस्वत्यपेक्षया त्रैलोक्ये नैव कोऽपि आशुलिपिकरः, न वा काऽपि आशुलिपिकरी विद्यते । किल्विशशून्यौ तपःपूताबिमौः स्मृतौ वाणीविनायकौ भूलोकमवतीर्य ग्रन्थकर्तुराशुलिपिकरत्वं स्वीकृतवन्तौ । मन्ये तावदेतौ वाणीविनायकौ पुराकाले आधुनिकप्रेसपदवाच्यमुद्रणयन्त्रस्थानापन्नौ आस्ताम् । पातञ्जलमहाभाष्ये 'प्रथमाह्निकम्, द्वितीयाह्निकम्' इत्युक्त्याऽवगम्यते यत्पतञ्जलिरपि आशुलिपिकर आसीत्, येन एकस्मिन्नेव अहनि तेन तावत्परिमितं लिखितम्, यावत् परिमितमाधुनिको लिखितुं न शक्नोति ।

**वैदिकयुगेऽकारादिवर्णानां लिपिस्वरूपम्**

वैदिकयुगेऽकारादिवर्णानां लिप्यात्मकस्वरूपस्य अस्तित्वसाधकानि बहूनि प्रमाणानि वेदेभ्यः समुपस्थापयितुं शक्यन्ते । तेषां मध्ये द्विकं त्रिकं वा प्रमाणं यथामति समुपस्थापितम् । वैदिकयुगादेव अकारादिवर्णानां लेखनपद्धतिरविच्छिन्नरूपेण प्रचाल्यमाना संस्कृतयुगादिषु[१] व्यवह्रियमाणा अद्यापि परितः संवर्द्धमाना च दृष्टिपथं समायाति । वाल्मीकीयरामायणे—

'रामनामाङ्कितं[२] चेदं पश्य देव्यङ्गुलीयकम्'।

इत्यस्मिन् श्लोके 'रामनामाङ्कितम्' इति प्रमाणेन, तथा महाभारते 'परं न लेखकः कश्चिद् भुवि[३]'—इत्यस्मिन् श्लोके च लेखकस्योल्लेखरूपप्रामाण्येन च स्पष्टतः वैदिकसंस्कृतयुगे वर्णलेखनक्रियायाः व्यवहारो बलाद् विश्वासपदवीमाटीकते ।

महाभारतयुद्धानन्तरं[४] पाणिनिसमये अकारादिवर्णानां लेखनपद्धतेरस्तित्वस्वीकारेऽष्टाध्याय्यामक्षरशः प्रमाणं दृश्यते । यथा—

---

१. आदिपदेन बौद्धादियुगादेरपि ग्रहणं बोद्धव्यम् ।

२. बाल्मीकीयरामायणम्, सुन्द० का०, स० ३६०, श्लो० २ ।

३. यच्चापि सर्वगं वस्तु तच्चापि प्रतिपादितम् ।
परं न लेखकः कश्चिद् एतस्य भुवि विद्यते ॥
( म० भा०, आ० प०, प्र० अ०, श्लो० ७०, ७३ )

४. श्रीयुधिष्ठिरमीमांसकः 'संस्कृत व्याकणशास्त्र का इतिहास' इति नाम्नि स्वग्रन्थे, भगवतः पाणिनेः कालविषये ये ये पूर्वपक्षाः समुपस्थापिताः, तेषां खण्डनं विधाय स्वमतानुसारेण यं कालं निश्चितवान्, तदनुसृत्य मया मूले 'महाभारतयुद्धानन्तरम्' इत्युक्तम् । तद् यथा पूर्वपक्षे—

१. दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु । दिवाविभानिशाप्रभाभास्करान्तानन्ताबहुनान्दीकिलिपिलिविरिति ।
( पा० अ० ३।२।२१ ) ॥

भगवान् पाणिनिरस्मिन् सूत्रे लेखनार्थे लिपिलिवि-शब्दौ पपाठ । लेखनार्थकलिपिलिविपूर्वककृञ्धातोरनेन सूत्रेण 'ट' प्रत्ययमनुशास्ति । यथा दिवाकरः, निशाकरः—इत्यादेर्निष्पत्तिः, तथैव लिपिकरः, लिविकर इत्यनयोरपि ।

२. "इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवन-मातुलाचार्याणामानुक् ।
( पा० अ० ४।१।४९ )

यवनाल्लिप्याम्" ( वा० ) । इति ।

'इन्द्रवरुण' इति सूत्रेण इन्द्रादिशब्देभ्यः आनुगागमोऽनुशिष्यते । 'पुंयोगादाख्यायाम्' ( ४।१।४८ ) इन्द्रादिषट्शब्देभ्यः, मातुलाचार्यशब्दाभ्याञ्च ङीष्प्रत्ययः; अनेन सूत्रेण च आनुगागममात्रं क्रियते । इतरेषां चतुर्णां तु आनुगागमङीष्प्रत्ययावुभावप्यनेन क्रियेते । यवनशब्दाद् आनुगागमः ङीष्प्रत्ययश्च कस्मिन्नर्थे समुत्पद्यते ? इत्याशङ्कां समाधातुं वार्तिककारः—'यवनाल्लिप्याम्' इति वार्तिकं कृतवान् ।

अत्र तावद् विचार्यताम्—पाणिनिकाले लिप्यभावे 'दिवाविभानिशा' इति सूत्रेण यवनशब्दाल्लिप्यर्थे आनुगागम-ङीष्प्रत्यययोः विधानं कथं संघटितं भवेत् । अतस्तत् संघटितुं पाणिनिसमये लिपेरस्तित्वं निःशंकं स्वीकर्तुमापतति ।

तदेवं पूर्वोक्तप्रामाण्येन अकारादिवर्णानां लिप्यात्मकस्वरूपमतीव प्राचीनम्, भारते आविर्भूतञ्च विद्यते । ब्रह्मणा निर्मितत्वाच्च सा लिपिर्ब्राह्मीति नाम्ना व्यवह्रियते ।

केचित्तु 'ब्राह्मणैर्निर्मितत्वात् सा लिपिर्ब्राह्मीत्युच्यते' इत्येवं प्रतिपादयन्ति । तन्न समीचीनम्; तादृशविग्रहस्वीकारे ब्राह्मणीशब्दो निष्पद्यते, न तु ब्राह्मी । ब्रह्मन्-शब्दात् 'तेन निर्वृत्तम्' ( पा० सू० ४।२।६८ ) इत्यणि प्रत्ययेऽनुबन्धादिलोपे च स्त्रीत्वाद् 'टिड्ढाणञ्' इति ङीप्प्रत्यये ब्राह्मी-शब्दो निष्पद्यते ।

'नाकरिष्यद् यदि ब्रह्मा लिखितं चक्षुरुत्तमम्' ।

इति नारदस्मृत्युक्तवाक्ये 'लिखितं चक्षुः' इत्युक्त्या,

---

"आर्यमञ्जुश्रीमूलकल्प में लिखा है—महापद्मनन्द का मित्र एक पाणिनि नामक माणवक था"। पृ० सं० १८५ इत्यादयः पूर्वपक्षाः । "अब रह जाता है द्वितीय वार का सर्वक्षत्रविनाश जो भारतयुद्ध द्वारा हुआ था । तदनुसार भारतयुद्ध के अनन्तर लगभग २०० से ३०० के वर्ष के मध्य पाणिनि का समय माना जा सकता है"। पृ०सं० १९४ । इत्यादय उत्तरपक्षाः । इति पूर्वोत्तरोभयपक्षाभ्यां पाणिनेः कालो महाभारतानन्तरमेव स्वीकर्तुं समापतति ।

'धात्राक्षराणि सृष्टानि यन्त्रारूढान्यतः पुरा'।

इत्याह्निकतत्त्वे बृहस्पतिवाक्ये 'अक्षराणि सृष्टानि' इत्युक्तेश्च एकाक्षरात्मक-ब्राह्म्या लिपेराविर्भावो मूलत एव सञ्जातः, न तु तस्याश्चित्राद्विकासोऽभूत्। मन्ये तावद् आह्निकतत्त्वे 'धात्राक्षराणि सृष्टानि' इति बृहस्पत्युक्तवचनप्रामाण्येन ब्रह्मा बृहस्पतये इममक्षरसमाम्नायं प्रोवाच। तं लिप्यात्मकमेव अक्षरसमाम्नायं लेखन-विधिशिक्षणपूर्वकमक्षरसमाम्नायम्[1] अध्यापयामास। एवं बृहस्पतिर्यमक्षर-समाम्नायमिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाजश्च ब्राह्मणेभ्यः शिक्षितवान् तमक्षर-समाम्नायं वर्णलेखनविधिपूर्वकमेव परम्परया ते समुपदिष्टवन्तः; यतो हि ऋक्तन्त्र-व्याकरणे "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाचार्या ऊचुः--ब्रह्मा बृहस्पतये, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः, तम् इमं खल्वक्षरसमाम्नायमित्याचक्षते" इति शाकटायनवचनप्रामाण्येन बृहस्पतिर्ब्रह्मणः शिष्योऽवगम्यते। ब्रह्मणः शिष्यो बृहस्पतिरेव 'धात्राक्षराणि सृष्टानि' इत्याह्निके तत्त्वे प्रोक्तवान्। 'धात्राक्षराणि सृष्टानि' इत्यस्य 'इदमक्षरच्छन्दो वर्णशः' इत्यनेन सह एकवाक्यतया अवगम्यते यद् ब्रह्मा अ क ख--इत्याद्येकाक्षरस्मृतिजनकलिप्यु-पदेशपूर्वकमक्षरसमाम्नायं बृहस्पतये प्रोवाच, न तु विभिन्नवाक्योद्बोधकचित्रात्मिकां लिपिं समुपदिष्टवान्। तदेवं पूर्वोक्तवचनानां प्रामाण्येन अस्मिन् भूमण्डले ब्राह्मणा भरद्वाजादिऋषिभ्योऽकारादिवर्णविलेखनपूर्वकं वर्णविज्ञानं लेभिरे। अतएव 'इदम-क्षरच्छन्दो वर्णशः समनुक्रान्तम्' इत्यस्मिन् वाक्ये 'अक्षरच्छन्दः वर्णशः' इत्युक्तम्। 'अक्षरच्छन्दः' इत्यस्य लिखिताक्षरसमूहो गृह्यते। यथा श्रीमद्भागवतस्य माहात्म्ये चतुर्थाध्याये 'तद्भालाक्षरमालां वाचयामास'—इत्यत्र अक्षरमालापदेन लिखितवर्ण-समूह एव गृह्यते, तथैव रीत्या 'इदमक्षरच्छन्दः' इत्यत्राप्यक्षरपदेन लिखिताक्षरसमूह एव गृह्यते, न केवलं वर्णानामुच्चार्यमाणस्वरूपमात्रम्। 'वर्णशः समनुक्रान्तम्' इत्यस्य 'अकारादिवर्णक्रमेण समाम्नातम्' इत्यर्थो वेदितव्यः। देवभाषायाश्च नागरैः (धीरैः कुशलैः) ब्राह्मणैरस्यां ब्राह्मलिप्यां विलेखनात् सा देवनागरी[2]लिपि-नाम्ना प्रसिद्धिं समागता।

---

१. नागेशकृते सदीपके लघुशब्देन्दुशेखरे; पृ० ७।

२. "ब्राह्मी नागरी कैसे बनी ?–ब्राह्मी के विकास को देखने से पता चलता है कि ७ वीं ८ वीं शती से उसे नागरी का स्वरूप प्राप्त होने लगा। ऐसी बात नहीं कि इसके पहले ब्राह्मी के कोई वर्ण आज की नागरी जैसे नहीं थे"।–न० चि० जोगलेकर, एम० ए०, एवं भगवान्दास तिवारी–विद्वद्द्वयेन सम्पादिते 'देवनागरी लिपि–स्वरूप, विकास और समस्याएँ' इति ग्रन्थे २१९ पृष्ठे द्रष्टव्यः।

## पुराकाले वैदिकयुगे ब्राह्मलिप्यक्षराणां स्वरूपम्

यथा दैवी वाग् दिव्या, ब्रह्मवाक्यानि दिव्यानि, वाक्यविन्यासशैली च वैज्ञानिकी विद्यते, तथैव वैदिकभाषायाः 'दैवीभाषा' इत्यपरनामपर्यायः, लिप्यक्षराण्यपि दिव्यानि वैज्ञानिकानि च आसन्। यथा 'इन्द्रशत्रुर्वर्द्धस्व' इत्यत्र स्वरतोऽपराघात्, 'हेलयः हे अलयः' इत्यत्र च मिथ्यावर्णप्रयोगाद् वृत्रासुरहननरूपानिष्टफलोदयः सञ्जातः, तथैव रीत्या स्वरतो वर्णतो वा मिथ्यालेखनेनाऽपि महान् अपराधो मन्यमान आसीत्। नूतनैरैतिहासिकैः शिलालेखेषु ब्राह्माक्षराणां यानि प्राचीनानि कुरूपाणि अनुसंहितानि, तानि सर्वाणि काल्पनिकान्येव[1] विद्यन्ते। दैव्या वाचो यथावाक्यविन्यासादिकं सर्वं दिव्यं दृश्यते, तथैव ब्राह्मीलिपेरक्षराण्यपि दिव्यान्यासन्। तत्र 'ब्राह्माक्षरेभ्यः शंकुशिरस्कानां सम्पुटशिरस्कानाञ्च अक्षराणाम् आविर्भावः सञ्जातः' इति नूतनैतिहासिकानां महत्त्वपूर्णमनुसन्धानं विद्यते। मन्ये तावत् 'विशुद्धान्वये मातापितृभ्यां जायमानाः सन्ततयः मातापितृस्वरूपा मातापितृस्वभावाश्च भवन्ति' इत्युक्तरीत्या शंकुशिरस्कसम्पुटशिरस्केत्युभयविध्यक्षरयोर्जन्मदात्र्यां ब्राह्मलिप्यामपि कानिचिदक्षराणि शंकुशिरस्कानि, कानिचिद् अक्षराणि च सम्पुटशिरस्कान्यासन्। ब्राह्माक्षरसमुद्भूतानां देवनागराक्षराणां वैज्ञानिकत्वस्य शतप्रतिशतजनैरन्यलिप्यपेक्षया विशेषरूपेण प्रशंसनात् मन्ये तावद् ब्राह्मलिप्यामपि प्रायेण अशीतिप्रतिशतमक्षराणि साम्प्रतिकवदेव ( नागरअक्षरवदेव ) लिख्यमानान्यासन्।

## ब्राह्माक्षरेभ्य एव खरोष्ठीत्याद्यक्षराणां प्रादुर्भावः

इयं ब्राह्मी लिपिरन्यासां भारतीयलिपीनां मूलभूता कथ्यते। अकारादिवर्णानां ब्राह्मीलिप्यात्मकस्वरूपाण्येव विभिन्नदेशेषु विभिन्नरूपेण परिवर्त्यमानानि विभिन्नसंज्ञामलभन्त। ब्राह्माक्षराणां परिवर्तने हेतवश्च अशक्तिजानुकरण-प्रमादादयो भवितुं शक्यन्ते। अशक्त्या केचिल्लेखकाः ब्राह्माक्षराणि अन्यवत् कुर्वाणाः विरूपं लिखितुं प्रारब्धवन्तः, कश्चिन्निरक्षरश्च शिक्षणक्षणे ब्राह्माक्षराणि लिखितुं यत्नं कृतवान्, किन्त्वनुकरणे प्रमादवशात् सुष्ठुस्वरूपे ब्राह्माक्षरे लिखितव्ये विकृतम् अक्षरं लिखितुं प्रारब्धवान्। तदनुसृत्य च अन्येऽपि विकृतमेवाक्षरं लिखितुं प्रारब्धवन्तः। एवमेव कश्चित् त्वरावशाद् ब्राह्माक्षरे यथास्थानं रेखादिके कर्तव्येऽ-

---

१. ''वैदिक भाषा की लिपि भी प्राचीन ही है और उसी आधार पर लिपि भी यन्त्र आदि के काम आती है। अब बहुत से प्राचीन लेख मिल रहे हैं। ब्राह्मी लिपि के पहले कहे जाने वाले लेखों में कोई स्पष्ट प्रमाण नहीं। कितने ही शिलालेख तो काल्पनिक है।''—श्रीकरपात्रस्वामिकृते 'मार्क्सवाद और रामराज्य' नामके ग्रन्थे पृ० २१२।

यथास्थानं रेखादिकं कृतवान् ! तदनुकृत्य च अन्येऽपि ब्राह्माक्षरे तादृशमेव रेखादिकं कर्तुं प्रारब्धवन्तः। तद्यथा अधुना देवनागरीलिप्यां हस्ताक्षरं कुर्वाणः 'कमलाकान्त' घटकककारे 'क' इत्येवं लिखितव्ये त्वरावशात् 'क' इत्येम, मा इत्येवं लिखितव्ये 'य' इत्येवं विरूपाक्षरं लिखितवान्। एवमन्यान्यपि लकाराद्यक्षराणि विकृतानि। तेन च 'कमला' 'कयला' शब्दयोरक्षरेषु भेदः समायातः। कालान्तरश्च कयला-इत्येनमपि शब्दं त्वरावशात् विभिन्नैः रूपैर्लिखितुं प्रारब्धवन्तः। एवञ्च ब्राह्माक्षराणां बहवो भेदाः बहूनि नामानि च सञ्जज्ञिरे। ते सर्वे भेदा भागद्वयेन विभज्यन्ते। यथा—१. शङ्कुशिराः ( नेलहेडेड ), २. सम्पुटशिरा ( बाक्सहेड़ेड ) इति।

शंकुशिराश्च सिद्धमातृका नाम्नाप्युच्यते। शंकुशिरस्कानि ब्राह्माक्षराणि उत्तरभारते, सम्पुटशिरस्कानि च ब्राह्माक्षराणि दक्षिणभारते व्यवह्रियमाणान्यासन्। ई०पू० पञ्चशताब्दीतः[१] प्रारभ्य ३०० ई० पर्यन्तं निखिलेऽस्मिन् भारते प्रायेण ब्राह्म्याम् एकमेव रूपमासीत्। तदनन्तरञ्च ब्राह्माक्षराणां पूर्वोक्तभागद्वये परिवर्तनं जातम्। ब्राह्मीलिपेः शंकुशिरस्कनामके प्रथमभागे पाञ्चालीगुप्तकुटिला-देवनागरीशारदावङ्गेत्यादयो लिपयः समाविश्यन्ते।

नागर्या लिपेश्च[२] कैथी-महाजनी-गुजराती-राजस्थानी-नन्दगिरी–इत्येते पञ्च भेदाः। शारदानामिकाया लिपेश्च कश्मीरी-टक्करी-गुरुमुखी—इत्येते त्रयो भेदा दृश्यन्ते। एवमेव वङ्गलिपेरपि नेपाली-मैथिली-उडिया – इति त्रयो भेदाः।

ब्राह्मीलिपेः सम्पुटशिरस्कनामके द्वितीयभागे ( दक्षिणभागे ) षट्संख्याकाः पश्चिममध्यदेशीय–तेलगू–कन्नड़ी–ग्रन्थ–कलिङ्ग–तामिललिपयः समाविश्यन्ते। एताश्च लिपयः क्रमशः नासिक-बुन्देलखण्ड-हैदराबाद-मद्रास-कलिङ्ग-तामिलनाडु-प्रान्तेषु व्यवह्रियन्ते।

एवं पत्रारूढानि ब्रह्मसृष्टान्यक्षराणि विभिन्नेषु देशेषु विभिन्नरूपैः परिवर्त्य

---

१. "ई० पूर्व पाँचवीं सदी से लेकर ३०० ई० तक भारत में प्रायः सभी भागों में ब्राह्मी का लगभग एक जैसा रूप प्रचलित रहा। इसके बाद क्रमशः स्थानीय विशेषतायें इस लिपि में दिखाई पड़ने लगीं। गुप्तकाल में उत्तरभारत में प्रायः नर्मदा तट तक ब्राह्मी का एक रूप था तथा उसके दक्षिण दूसरा रूप प्रचलित हुआ। पहली को शङ्कुशिरा ( नेल हैडेड ) और दूसरी लिपि को सम्पुटशिरा (बाक्स हैडेड) कहा जाता है।" न० चि० जोगलेकर एम०ए०, भगवानदास तिवारी एम० ए०; 'देवनागरी लिपि, स्वरूप विकास और समस्यायें' २१८ पृ०।

२. प्रभुनारायणशर्मकृतं भाषाविज्ञानतत्त्वग्रन्थमनुसृत्य अयं विभागः प्रदर्शितः।

विभिन्ननाम्ना व्यपदिश्यन्ते। परन्तु ब्राह्माक्षराणां विविधरूपेण परिवर्तने सत्यपि तेषां मूलस्वरूपं सुरक्षितमेवासीत्, ब्राह्माक्षरेषु च ग्रन्थलेखनं विशेषरूपेण क्रियते स्म इति जैनसम्प्रदायस्य पन्नवणसूत्र-समवायोगसूत्र-भगवतीसूत्रनामकग्रन्थैर्ज्ञायते। जैनसम्प्रदायावलम्बिनां पन्नवणसूत्र-समवायोगसूत्र-नामकग्रन्थयोः निर्दिष्टाष्टादशलिपीनां मध्ये प्रथमं ब्रह्मलिपेर्गणना कृता। भगवतीसूत्रे च "नमो वमिये लिपिये" इत्येवं ब्राह्मीं लिपिं नमस्कृत्य सूत्राणां लेखनं प्रारब्धम्। एतावताऽवगम्यते यद् विविधरूपेण परिवर्तने सत्यपि ब्राह्मया मूलस्वरूपं सुरक्षितम्, तस्यामेव च लिप्यां साम्प्रदायिकग्रन्थानां विलेखनस्य परिपाटी यद्वा परम्परा आसीत्। सा एव च लिपिः पवित्रतमा सिद्धिदात्री च मन्यमाना आसीत्। मन्ये तावद् दैव्या वाचो व्यवकीर्णत्वे यानि अशक्तिजादीनि कारणानि विद्यन्ते, तान्येव कारणानि ब्राह्माक्षराणामपि विविधरूपेण परिवर्तने विद्यन्ते।

## अकारादिध्वनीनां देवनागरलिप्यात्मकस्वरूपस्य वैशिष्ट्यम्

सम्प्रति ब्राह्माक्षरेभ्यः समुद्भूतानां लिप्यक्षराणां मध्ये देवनागराक्षराणाम् अतिशयं वैशिष्ट्यं सर्वैः स्वीक्रियते। किञ्च, विश्वस्य विभिन्नदेशेषु प्रचलितासु रोमन-अरबी-चीनी-रूसीत्येताभ्यो लिपिभ्योऽपेक्षया देवनागरलिप्यात्मकाक्षरेषु असन्दिग्धरूपेण ध्वन्युद्बोधकताशक्तिर्विशेषरूपेण विद्यते। रोमनेत्यादिलिप्यक्षराणामुच्चारणस्य सन्दिग्धतया इदं वैशिष्ट्यं न दृश्यते। रोमनलिप्यक्षराणां मध्ये 'सेण्टर', 'कप' इत्यादिशब्देषु "C" इत्यादिलिप्यक्षरेण सकारस्य ककारस्य वा उच्चारणं कर्तव्यमित्येवं महान् सन्देहः समापतति। इमं सन्देहं दूरीकर्तुं प्रत्यक्षरं ध्वन्युच्चारणमभ्यस्यते। किन्तु ब्राह्माक्षरसमुद्भूतदेवनागर्यां लिख्यमानं प्रत्यक्षरं ध्वन्यात्मकं प्रत्येकं च ध्वनिमुद्बोधयितुं शक्तिर्विद्यते। रोमनलिपिवत् प्रत्यक्षरं ध्वनिमुच्चारयितुं नाभ्यस्यते। देवनागरलिपेर्ध्वन्यात्मकतया साम्प्रतिके जगति अस्या लिपेर्वैज्ञानिकता सर्वैः स्वीक्रियते।[1] सूक्ष्मातिसूक्ष्ममपि ध्वनिमुद्बोधयितुमस्यां शक्तिर्विद्यते। स्पष्टता[2], सुन्दरता, त्वरा—इत्येते गुणाः, उच्चारणे लेखने च च एकरूपता, लेखन-मुद्रण-टङ्कणादिकार्येषु सौविध्यमित्येते गुणाश्च वैज्ञानिक-

---

१. 'ध्वन्यात्मकत्वात् पूर्णा हि देवनागरी' ( नागरी की लिखावट ध्वनि के ढंग पर बनी होने के कारण पूर्ण है। )—आचार्यः सीतारामचतुर्वेदी–भाषालोचन, पृ० ४६७।

२. 'वैज्ञानिक लिपि वही है, जिसमें मूल ध्वनियों के साथ संयुक्त ध्वनियों को भी सुविधापूर्वक दिखाया जा सके'। —न० चि० जोगलेकर, एम० ए०, भगवानदास तिवारी, एम० ए० कृत 'देवनागरीलिपिस्वरूप'–पृ० २३३। अस्मिन्नेव ग्रन्थे ४३३तमे पृष्ठे 'लिपि के वैज्ञानिक आधार'—इत्यस्मिन् स्थले मूलोक्ताः सर्वे गुणाः व्याख्याताः।

लिप्यामवश्यमेव भवेयुः। एतेषां सर्वेषां गुणानां देवनागरलिप्यां विद्यमानत्वाद् अस्या वैज्ञानिकतां सर्वे स्वीकुर्वन्ति।

एवं भाषाविज्ञानदृष्ट्या आधुनिकैतिह्यविदां मतानुसारेण च लिपिकलायाः प्रादुर्भावं विकासञ्च निरूप्य वैदिकमन्त्रदृशा तत्र विचारः समुपस्थापितः।

भौतिकध्वनिशास्त्रदृशा तु अकारादिध्वनेश्चिह्नं विलक्षणं विद्यते। वस्तुतस्तु वर्णानां यथार्थं लिप्यात्मकं स्वरूपं ध्वन्यभिलेखनयन्त्रस्य मण्डलके[१] एव समुपलभ्यते। अस्मिन् यन्त्रे सर्वदेशेषु सर्वासां भाषाणां प्रत्येकं वर्णस्य लिपिः समानरूपेण समुपलभ्येत। अस्मिन् यन्त्रे जर्मनभाषाया यद्वा आंग्लभाषाया अकारादिवर्णाः येन रूपेण लिख्यन्ते, तेनैव रूपेण तद्भिन्नभाषाया अकारादिवर्णा अपि। अस्मिन् यन्त्रे च विविधभाषायां लिखितानामकारादिवर्णानामभिव्यक्तिरपि सर्वत्र एकरूपेण जायते।

भविष्यति काले कश्चिद् यदि एवं मार्गमनुसन्धास्यति, येन ध्वन्यभिलेखन-यन्त्रस्य मण्डलेऽङ्कितान् स्थायिभावमापन्नान् वर्णान् अध्येतुं समर्था भविष्यामः, तदा वयं यथार्थतया लिपिज्ञतां भजिष्यामः।

## शब्दविज्ञान-कामधेनुतन्त्रदृशा लिपिस्वरूपविषये युक्तायुक्तत्वविचारः

वस्तुतस्तु अकारादिध्वनीनां लिप्यात्मकं यद्वा रेखाकृतस्वरूपं भौतिकशास्त्रं विना निर्णेतुं दुरूहम्। भाषावैज्ञानिकैर्ध्वनीनां यल्लिप्यात्मकं स्वरूपं प्रतिपाद्यते, तत्तु देशस्य भाषायाश्च भेदानुसारेण विभिन्नरूपत्वाद् अवैज्ञानिकम्। यथा अकारो देवभाषायाम् 'अ' 'ॳ' इत्येवम्, आंग्लभाषायां रोमनलिप्यां 'A' इत्येवं रेखयाऽङ्की-क्रियते। एवञ्च, अत्र एकस्यैव अकारस्य भिन्नं रेखाकृतिस्वरूपं दृश्यते। भाषा-विज्ञानं खलु अकारादिध्वनेः सामान्यं मानवेषु व्यवहृतञ्च रेखयाऽङ्कितं स्वरूपं व्याख्याति। रासायनिको यद्वा भौतिक इव ध्वनेश्चित्राङ्कनकार्यं कर्तुमक्षमम्। वैज्ञानिकं वास्तविकञ्च ध्वनेश्चित्रमेतद् भिन्नम्। ध्वनीनां यथार्थस्वरूपं ज्ञातुं मानवीयबुद्धिहृदयादितत्त्वस्य, अथ च भौतिकशास्त्रस्य ज्ञानमपेक्षितम्।

सर्वत्र देशे यस्याङ्कनमुच्चारणञ्च समानम्, तदेव वैज्ञानिकं भौतिकशास्त्र-समन्वितञ्च ध्वनेश्चिह्नं (लिपिः) चित्रं वा स्वीकर्तव्यम्। यथाऽस्माकं मूर्त्तिश्चि-त्रपटे क्रियते, तच्छायाचित्रं दृष्ट्वा उच्यते—'अयं देवदत्तः', 'अयं यज्ञदत्तः' इति। तथैव रीत्या ध्वनेरपि मूर्तिर्ध्वन्यभिलेखनादियन्त्रेषु[२] यान्त्रिकक्रियया निष्पाद्यते, तदेव च ध्वनेर्वास्तविकं रेखयाऽङ्कितं स्वरूपम्। वक्तुर्मुखान्निःसृता ध्वनयो ध्वन्य-

१. On the record of the phonograph.

२. इन टू द फोनोग्राफ।

भिलेखनयन्त्रस्य परिवृत्तात्मके मण्डलके[१] लिपिरूपेण स्थायिनः[२] क्रियन्ते। ध्वन्यभिलेखनयन्त्रस्था तनुपटसंश्लिष्टा एका सूचिका तीक्ष्णाग्रभागेन मण्डलकं संस्पृशति, ध्वन्यभिलेखनक्षणे मण्डलकं शनैः शनैः परितो भ्राम्यति। यदा ध्वन्यभिलेखनयन्त्रस्थस्य तनुपटस्य पुरःसरसि गायकेन गीयते, तदा तनुपटोऽपि ध्वन्यनुरूपं परिस्पन्दं कुरुते। ततस्तत्संश्लिष्टा सूचिकाऽपि ध्वन्यनुरूपपरिस्पन्दिततनुपटस्पन्दनानुरूपं क्षुभ्यमाणपरिभ्राम्यमाणे मण्डलके ध्वन्यनुरूपम् उच्चावचं वक्राकृतिगतं क्रमेण रेखया निर्माति। तदेव ध्वनेर्वास्तविकं रेखयाङ्कितं स्वरूपम्। ध्वनेः आकृतिः तस्य वक्त्रता वा कीदृशी ?—'इत्येतज्ज्ञानं ध्वनिवक्त्रताङ्कन[३]यन्त्रेण कर्तुं शक्यते, नान्यथा। उच्चार्यमाणा अकारादिध्वनयो लोहादिफलकानामुपरि पतितेषु रजःकणेषु सिकतासु, द्रवीभूतेषु जतुषु च स्वानुरूपं चित्रं निर्मान्ति।

एवमुपर्युक्तं रेखयाऽङ्कितं ध्वनेः स्वरूपं यथार्थं प्रतिभाति। अस्माकं हृदः समुद्भूता विचाराः वायोः स्वानुरूपाम् आकृतिं रङ्गञ्च समुत्पादयन्ति। एतच्च वैज्ञानिकैः सुष्ठुरूपेण परीक्षितम्[४]। यद्येवमस्ति, तर्हि विचार्यमाणानां चिन्ताविषयीभूतानाम् अकारादिध्वनीनामपि वायौ रूपं रङ्गञ्च समुत्पद्येते किं बहुना, यदा अस्माकं बुद्धिः चिन्तनशीला, तदा मस्तके बुद्धिकेन्द्रे विद्युत् समुत्पद्यते। तया

---

१. इन टू द प्लेट आफ फोनोग्राफ।

२. रिकार्डेड।

३. "मिलर ने 'फोनोडाइक' नामक एक यन्त्र बनाया, जिससे ध्वनिवक्त्र खींचा जाता है"—श्री ललितकिशोरसिंहकृते ध्वनिविज्ञाने पृ० १८५।

४. "जब हम विचार करते हैं, तब वायु में आकार और रङ्ग उत्पन्न होते हैं। उन विचारों को हमारे स्थूल नेत्र नहीं देख सकते। पेरिस के डा० पेरडुक् ने विचारों से वायु में जो चित्र बनते हैं उनके फोटो लिये हैं।

एक लड़की अपने पाले हुए पक्षी की मृत्यु पर विलाप कर रही थी, उस समय इसकी तस्वीर ली गयी, तो मृत पक्षी का फोटो पिंजड़े सहित प्लेट पर आ गया। (पृ० ४७)

एक स्त्री अपने बच्चे के शोक में तल्लीन हुई बैठी थी, उसका फोटो लिया गया तो मरे बच्चे का चित्र प्लेट पर उभर आया।

एक सिपाही अपने मन में गरुड़ पक्षी का चिन्तन कर रहा था, उसका फोटो लिया गया तो प्लेट पर सुन्दर पक्षी का आकार प्रकट हो गया।"—स्वामिज्ञानाश्रमकृते सङ्कल्पसिद्धिग्रन्थे। (प्रकाशकः डा० बालकृष्ण नागर, कल्पवृक्षकार्यालय, उज्जैन, म० प्र०)

विद्युता च द्रवीभूते जतुज इव बुद्धिकेन्द्रे तया बुद्ध्यवच्छिन्नाकाशे समेषां विचाराणामाकृतिरपि अङ्किता भवति। यद्येवम्, तर्हि अकारादिध्वनीनां विषयेऽपि सा क्रिया भवति।

अकारादिध्वन्यनुरूपा आकृतिः बुद्धिकेन्द्रे ध्वन्यभिलेखनयन्त्र इव अवश्यमेव विलिख्यते। एतच्च तथ्यम् अस्माकं तन्त्रशास्त्रमपि पोषयति। मूलाधाराद् आबद्ध-विलं विलसन्ती विसतन्तुतनीयसी विद्युत्पुञ्जपिञ्जरा विद्यते[१]। विवक्षायां सत्यां तया विद्युता द्रवीभूता अमृतधारा सौषुम्णाध्वना यदा शिरसि निपतति, तदा सा अमृतधारा एव ध्वन्यनुरूपां लिपिमयीम् आकृतिं दधाति। ध्वन्यनुरूपां ताञ्च लिपिम् ऋषयो ज्ञानचक्षुषा दृष्टवन्तः। ऋषीणामतीन्द्रियं यज्ज्ञानम्, तदस्माकं प्रत्यक्षमिव। तच्च ज्ञानं किमपि प्रमाणं प्रबाधितुं न शक्नोति। कण्ठताल्वादिस्थानेषु अकारादिध्वन्यनुरूपा रेखाकृतयो विद्यन्ते। ताश्च वर्णानां रेखाकृतयोऽमृतधारया निर्मिताः।

तात्पर्यदीपिकायां[२] कामधेनुतन्त्रे च अयं विषयः पुष्कलरूपेण प्रतिपादितः। यथा अकारस्य आकृतिः पञ्चकोणात्मिका, ककारस्य च कुण्डलीत्रयसंयुता।

---

१, "विचारों का असर केवल फोटो-प्लेट पर चित्र बनाना मात्र नहीं हैं, किन्तु विज्ञान से यह भी ज्ञात हुआ है कि विचार के समय विद्युत् उत्पन्न होती है और उसका असर भी मिकना तीसी सुई द्वारा नापा गया है। जहाँ बिजली होती है, वहाँ आकाश के परमाणुओं में कम्पन होता है। इसके सङ्कल्प द्वारा प्रत्येक मनुष्य आकाश में परमाणुओं की गति को बदल देता है। परमाणुओं की गति पलटने से आकाश में रूप बनते हैं।"—अयमंशः 'सङ्कल्पसिद्धिः' इति पूर्वोक्तग्रन्थे द्रष्टव्यः।

२, आधारादिषट्कमलदलेषु पतिता द्वादशान्तस्थितचन्द्रमण्डलात्सृता अमृतबिन्दवो अकारादिक्षकारान्तवर्णात्मना परिणताः। उक्तं ह्याचार्येण—

मूलाधारात् स्फुरिततडिदाभा प्रभा सूक्ष्मरूपो-
द्गच्छन्त्यामस्तकमणुतरा तेजसां भूता।
सौषुम्णाध्वाचरण निपुणा सा सवित्रानुविद्धा
ध्याता सद्योऽमृतमथ रवेः स्रावयेत् सार्धसोमात्॥
शिरसि निपतिताया बिन्दुधारा सुधायाः
भवति लिपिमयी सा आभिरङ्गमुखाद्यम्॥

( तात्पर्यदीपिका )

श्रृणु तत्त्वमकारस्य अतिगोप्यं वरानने।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा॥

( कामधेनुतन्त्रम् )

यथा ध्वनिविलेखनयन्त्रे ध्वनयो विलिख्यन्ते, तथैव ताल्वादिस्थानस्य ऊर्ध्वपटले तेषामङ्कनं जायते। मानवकृतानि ध्वनिविलेखनयन्त्राणि ईश्वरप्रणीतहृदयमस्तिष्क-मुखादियन्त्रानुकृतकानि एव निर्मितानि, तत्र निर्मिता लिपिरेव ध्वन्यनुरूपा। सा च लिपिः अस्माकं चित्रमिव ध्वनीनामाकृतिं तदनुरूपतया व्यक्तीकरोति।

शिरसि निपतिताभिः सुधायाः बिन्दुधाराभिः निर्मिता ध्वनीनां रेखाकृतिः आध्यात्मिकलिपिरित्याख्यया अपि अभिधातुं शक्यते। आत्मन्यधि शरीरान्तदेशे ( शिरोमण्डले ) भवा या सा आध्यात्मिकी लिपिः।

कामधेनुतन्त्रमतानुसारेण प्रत्येकं वर्णस्य आध्यात्मिकं अमृतधारानिर्मितं रेखाकृतस्वरूपमधस्तान् निर्दिश्यते।

अत्र कस्यचिद् वर्णस्य लिपिः पञ्चकोषमयी, कस्यचिच्च त्रिकोणात्मिका चतुष्कोणात्मिका शङ्खाकृतिः। तद्यथा—

'अ'

श्रृणु तत्त्वमकारस्य अतिगोप्यं वरानने।
शरच्चन्द्रप्रतीकाशं पञ्चकोषमयं सदा॥ १३॥
पञ्चदेवमयं वर्णं शक्तित्रयसमन्वितम्।
निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्तिमान्।
बिन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपिणी॥ १४॥

अत्र श्लोके 'पञ्चकोषमयम्' इति यदुक्तम्, तदेव अकारस्य लिप्यात्मकं स्वरूपम्। अकारोच्चारणवेलायां ब्रह्मरन्ध्रात् शिरसि अमृतधारा पतन्ती पञ्चकोषात्मकं रूपं दधाति। त्रयोदशे श्लोके तत्त्वमित्यस्य स्वरूपमित्यर्थः। अकारस्य तत्त्वम् स्वरूपम्। पञ्चकोषमयं तत्त्वमकारस्य लिप्यक्षरस्वरूपबोधकम्। तदतिरिक्तम् शरच्चन्द्रप्रतीकाशम्' इत्यादिकम् अकारस्य यत् तत्त्वमुक्तम् तत्तु सामर्थ्यादिगुण-तत्त्वप्रतिपादनपरम्। एवमग्रे प्रतिपाद्यमानानां वर्णानां विषयेऽपि समूहनीयम्।

'आ'

आकारं परमाश्चर्यं शङ्खज्योतिर्मयं प्रिये।
ब्रह्मविष्णुमयं वर्णं तथा रुद्रं स्वयं प्रिये॥
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली॥

अत्र आकारस्य लिप्यात्मकस्वरूपविषये कोऽपि संकेतो न समुपलभ्यते। 'शङ्खज्योतिर्मयम्' इति तु श्वेतवर्णप्रतिपादनपरम्, न तु रेखकृतिबोधकम्। अतोऽस्य वर्णस्य ह्रस्वाकारस्य इव रूपं बोद्धव्यम्। यद्वा, 'परमकुण्डली' इति यदुक्तम् तेनास्य वर्णस्य कुण्डलमयी लिपिरस्तीति बोध्यते।

'इ'

इकारं परमानन्दं सुगन्धकुसुमच्छविम् ।
हरिब्रह्ममयं वर्णं सदा रुद्रयुतं प्रिये ॥

सदा शक्तिमयं देवि गुरुब्रह्म स्वयं तथा ।
सदा शिवमयं वर्णं परं ब्रह्मसमन्वितम् ॥

हरिब्रह्मात्मकं वर्णं गुणत्रयसमन्वितम् ।
इकारं परमेशानि मूर्तिर्वै कुण्डली स्वयम् ॥

'सुगन्धकुसुमच्छविम्' इत्यनेन, इकारस्य वर्णः, 'कुण्डली स्वयम्' इत्यनेन च तस्य रेखाकृतिः प्रोक्ता ।

'ई'

ईकारं परमेशानि स्वयं परमकुण्डली ।
ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं सदा ॥

पञ्चदेवमयं वर्णं पीतविद्युल्लताकृतिम् ।
चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा ॥

'प्रीतविद्युल्लताकृतिम्' इति पदम् ईकारस्य वर्णप्रतिपादनपरम्, 'परमकुण्डली' इत्यनेन च रेखाकृतिस्वरूपं बोध्यते । ईकारोच्चारणवेलायां कुण्डल्याः यादृशं वक्रं रूपं भवति, शिरसि निपतिता अमृतधारा अपि तादृग् वक्रं रूपं दधाति । तस्य रूपस्य वर्णः पीतिविद्युल्लतावद् भवति ।

ह्रस्वदीर्घयोरुभयोरपीकारयोर्यद्यपि रेखाकृतिस्वरूपं कुण्डलीमयम्—इत्युभयोरपि स्वरूपैक्यम्; तथाप्येकमक्षरं सुगन्धाख्यकुसुमच्छवि, अपरञ्च पीतविद्युल्लताकृति--इत्युभयोर्भेदो बोद्धव्यः । श्वेतसोमार्द्धचन्द्रमसि समेषां नीलपीतादिवर्णानां समरसीभावाद् अकारादिवर्णोच्चारणे नीलपीतादिसोमधारा निपततीति तु पूर्वमेव प्रतिपादितम् । अत एकस्मादेव श्वेतसोमार्धचन्द्रमसः नीलपीताद्यक्षराणि कथं भवन्ति ? इति न शङ्कनीयम् ।

'उ'

उकारं परमेशानि अधः कुण्डलिनी स्वयम् ॥ ७ ॥

पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥ ८ ॥

'अधः कुण्डलिनी' इत्यनेन उकारस्य रेखाकृतिस्वरूपम्, 'पीतचम्पकसङ्काशम्' इत्यनेन च तस्य वर्णः—प्रतिपादितौ । यद्वा 'पीतचम्पकसङ्काशम्' इत्यनेन उभयमपि प्रतिपादितम् । 'उ' इत्यक्षरम् आकृत्या, वर्णेन च पीतचम्पकवद्

विद्यते। अधः कुण्डली अपि चम्पकपुष्पवदेव भवति। अतः 'अधः कुण्डलिनी', अथ च 'पीतचम्पकसङ्काशम्'—इत्युभयोकारयो रेखाकृतिस्वरूपप्रतिपादनपरत्व-स्वीकारे न कोऽपि विरोधः।

'ऊ'

ऊकारं देवदेवेशि बीजं परमदुर्लभम्।
शङ्खकुन्दसमाकारं स्वयं परमकुण्डली ॥ ९ ॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा।
पञ्चप्राणयुतं वर्णं तथा त्रयगुणात्मकम् ॥ १० ॥
बिन्दुत्रययुतं वर्णं पीतविद्युल्लता यदा।
धर्मार्थकाममोक्षं च सदा सुखप्रदायकम् ॥ ११ ॥

'ऊ' इत्यक्षरं शङ्खकुन्दसमाकारं सत् स्वयं परमकुण्डली विद्यतेः अनेकविधरूपा कुण्डली भवति। तद्यथा—मकराकृतिः, शङ्खाकृतिः इत्यादि। परन्तु 'ऊ' इत्यक्षरस्य यल्लिप्यात्मकं परमकुण्डलीवद् रूपं विद्यते, तत्तु शङ्खकुन्दसमाकारं भवति। यथा लोके देवनागरलिप्याम् 'अ' 'ऋ' इति एकस्यैव अक्षरस्य लिपिद्वयं दृश्यते, तथैव ऊ वर्णस्य शिरोऽन्तःप्रदेशे अमृतधारानिर्मिता शङ्खाकृतिः कुन्दपुष्पाकृतिश्चेति लिपिद्वयं विद्यते। किञ्च—यथा पीतविद्युल्लता भवति, तथैव 'ऊ' इत्यक्षरमपि पीतम्, अथ च बिन्दुत्रययुतं विद्यते। 'धर्मार्थकाममोक्षम्' इत्यादिविशेषणानि माहात्म्यप्रतिपादनपराणि।

'ऋ'

ऋकारं परमेशानि कुण्डली मूर्त्तिमान् स्वयम्।
अत्र ब्रह्मा च विष्णुश्च रुद्रश्चैव वरानने ॥ १२ ॥
सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम्।
पञ्चप्राणमयं वर्णं चतुर्ज्ञानमयं सदा ॥ १३ ॥
रक्तविद्युल्लताकारं ऋकारं प्रणमाम्यहम्।

यो हि ऋकारः स्वयं मूर्तिमान् कुण्डली विद्यते, तं सदाशिवयुतादिगुणविशिष्टम् ऋकारमहं प्रणमामीत्यन्वयः। 'रक्तविद्युल्लताकारम्' 'मूर्तिमान् स्वयं कुण्डली'—इत्युभयमपि पदं लिपिं प्रतिपादयति। रक्तविद्युल्लताकृतिकं कुण्डलीरूपं 'ऋ' इत्यक्षरं विद्यते।

'ॠ'

ॠकारं परमेशानि स्वयं परमकुण्डली।
पीतविद्युल्लताकारं पञ्चदेवमयं सदा ॥ १४ ॥

चतुर्ज्ञानमयं वर्णं पञ्चप्राणमयं सदा।
त्रिशक्तिसहितं वर्णं प्रणमामि सदाप्रिये ॥ १५ ॥

अत्र 'ॠ' इत्यक्षरस्य रूपम् पीतविद्युल्लताकारं परमकुण्डलीमयं प्रोक्तम्। इदमेव दीर्घस्य ॠकारस्य शिरोऽन्तःप्रदेशे अमृतधारानिर्मितं रेखाकृतस्वरूपम्। रेह्रस्वस्य ऋकारस्य कुण्डलीरूपं रक्तविद्युल्लताकारम्, दीर्घस्य तु पीतविद्युल्लताकारम्—इत्युभयोर्भेदो बोध्यः।

'ऌ'

ऌकारं चञ्चलापाङ्गि कुण्डली परदेवता ॥ १६ ॥
अत्र ब्रह्मादयः सर्वे तिष्ठन्ति सततं प्रिये।
पञ्चदेवमयं वर्णं चतुर्ज्ञानमयं सदा ॥ १७ ॥
पञ्चप्राणयुतं वर्णं तथा गुणत्रयात्मकम्।
बिन्दुत्रयात्मकं वर्णं पीतविद्युल्लता तथा ॥ १८ ॥

'ॡ'

ॡकारं परमेशानि पूर्णचन्द्रसमप्रभम्।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं सदा ॥ १९ ॥
गुणत्रयात्मकं वर्णं तथा बिन्दुत्रयात्मकम्।
चतुर्वर्गप्रदं देवी स्वयं परमकुण्डली ॥ २० ॥

लिपिदृष्ट्या ह्रस्वदीर्घभेदेन द्विविधम् 'ऌ' इत्यक्षरम् एकरूपम्। ह्रस्वो ऌकारः पीतविदद्युल्लता इव, दीर्घश्च पूर्णचन्द्रप्रभाव इव स्तः—इत्युभयोरन्तरं बोद्धव्यम्। 'उभे अप्यक्षरे कुण्डलीरूपे' इत्युभयोः साम्यं बोद्धव्यम्।

'ए'

एकारं परमं दिव्यं ब्रह्म-विष्णु-शिवात्मकम्।
बन्धूककुसुमप्रख्यं पञ्चदेवमयं सदा ॥ २१ ॥
पञ्चप्राणात्मकं वर्णं तथा बिन्दुत्रयात्मकम्।
चतुर्वर्गप्रदं देवि स्वयं परमकुण्डली ॥ २२ ॥
( कामधेनुतन्त्रे द्वि० प० )

'ऐ'

ऐकारं परमं दिव्यं महाकुण्डलिनी स्वयम्।
कोटिचन्द्रप्रतीकाशं पञ्चप्राणमयं सदा ॥ १ ॥

ब्रह्मविष्णुमयं वर्णं तथा रुद्रमयं प्रिये ।
सदाशिवमयं वर्णं बिन्दुत्रयसमन्वितम् ॥ २ ॥

उभयोरपि वर्णयोः कुण्डलाकृतिः लिपिर्विद्यते; किन्तु एकारस्य कुण्डल्याकृतिः लिपिः बन्धूककुसुमसदृशा, ऐकारस्य च चन्द्रसदृशा ।

'ओ'

ओकारं चञ्चलापाङ्गि पञ्चदेवमयं सदा ।
रक्तविद्युल्लताकारं त्रिगुणात्मानमीश्वरम् ॥ ३ ॥

पञ्चप्राणमयं वर्णं नमामि देवमातरम् ।
एतद् वर्णं महेशानि स्वयं परमकुण्डली ॥ ४ ॥

'औ'

रक्तविद्युल्लताकारम् औकारं कुण्डली स्वयम् ।
अत्र ब्रह्मादयः सर्वे तिष्ठन्ति सततं प्रिये ॥ ५ ॥

पञ्चप्राणमयं वर्णं सदाशिवमयं सदा ।
सदा ईश्वरसंयुक्तं चतुर्वर्गप्रदायकम् ॥ ६ ॥

उभयोरपि वर्णयोः लिपिः कुण्डलीरूपा रक्तविद्युल्लतासदृशा रक्ता च विद्यते ।

'अं'

अंकारं बिन्दुसंयुक्तं पीतविद्युत्समप्रभम् ।
पञ्चप्राणात्मकं वर्णं ब्रह्मादिदेवतामयम् ॥ ७ ॥

सर्वज्ञानमयं वर्णं बिन्दुत्रयसमन्वितम् ।
शक्तित्रयमयं वर्णं स्वयं परमकुण्डली ॥ ८ ॥

'अं' इत्यक्षरबिन्दुत्रयसंयुक्तम् अनुस्वारसंयुक्तं पीतविद्युत्समन्वितं विद्यते ।

'अः'

अःकारं परमेशानि विसर्गसहितं सदा ।
अःकारं परमेशानि रक्तविद्युत्प्रभामयम् ॥ ९ ॥

पञ्चदेवमयो वर्णः पञ्चप्राणमयः सदा ।
सर्वज्ञानमयो वर्णः आत्मादितत्त्वसंयुतः ॥ १० ॥

'अः' इत्यक्षरं विसर्गसहितं रक्तविद्युत्प्रभामयञ्च विद्यते । 'ओ औ अं अः' इत्येषां मध्ये 'अ' इत्यक्षरं शरच्चन्द्रप्रतीकाशं पञ्चकोणमयम्, 'अं' इति बिन्दुसंयुक्तं पीतविद्युत्समप्रभम्, 'अः' इति विसर्गसहितं रक्तविद्युत्प्रभामयमिति बोद्धव्यम् ।

## अथ व्यञ्जनध्वनीनां लिपिः

[ अधस्तादुद्धृतेषु श्लोकेषु कृष्णवर्णाङ्कितानि पदानि ककारादिवर्णानां लिपिस्वरूपप्रतिपादकानि बोध्यानि । ]

'क'

ककारं परमेशानि **कुण्डलीत्रयसंयुतम्** ।

'ख'

खकारं परमाश्चर्यं **शङ्खकुन्दसमप्रभम्** ॥ १ ॥
**कोणत्रययुतं** शून्यं **बिन्दुत्रयसमन्वितम्** ।
गुणत्रययुतं देवि पञ्चदेवमयं सदा ॥ २ ॥
त्रिशक्तिसंयुतं वर्णं खकारं प्रणमाम्यहम् ।

( कामधेनुतन्त्रम्, ४ प० )

'ग'

गकारं परमेशानि पञ्चदेवात्मकं सदा ॥ ३ ॥
निर्गुणं त्रिगुणोपेतं निरीहं निर्मलं सदा ।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये ॥ ४ ॥
**अरुणादित्यसंकाशं** **कुण्डलीं** प्रणमाम्यहम् ।

'घ'

घकारं चञ्चलापाङ्गि चतुष्कोणात्मकं सदा ॥ ५ ॥
पञ्चदेवमयं वर्णम् अरुणादित्यसन्निभम् ।
निर्गुणं त्रिगुणोपेतं सदा त्रिगुणसंयुतम् ॥ ६ ॥
सर्वगं सर्वदं शान्तं घकारं प्रणमाम्यहम् ।

'ङ'

ङकारं परमेशानि स्वयं **परमकुण्डली** ॥ ७ ॥
सर्वदेवमयं वर्णं त्रिगुणं लोललोचने !
पञ्चप्राणमयं वर्णं ङकारं प्रणमाम्यहम् ॥ ८ ॥

'च'

चवर्णं शृणु सुश्रोणि चतुर्वर्गप्रदायकम् ।
**कुण्डलीसहितं** देवि स्वयं **परमकुण्डली** ॥ ९ ॥

सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा।
पञ्चप्राणमयं वर्णं पञ्चप्राणात्मकं सदा ॥ १० ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये।

'छ'

छकारं परमाश्चर्यं स्वयं परमकुण्डली ॥ ११ ॥
सततं कुण्डलीयुक्तं पञ्चदेवमयं सदा।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ॥ १२ ॥
त्रिबिन्दुसहितं वर्णं सदा ईश्वरसंयुतम्।
पीतविद्युल्लताकारं छकारं प्रणमाम्यहम् ॥ १३ ॥

'ज'

जकारं परमेशानि या स्वयं मध्यकुण्डली।
शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् ॥ १४ ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ॥ १५ ॥

'झ'

झकारं परमेशानि कुण्डली मोक्षरूपिणी।
रक्तविद्युल्लताकारं सदा त्रिगुणसंस्थितम् ॥ १६ ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा।
त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा ॥ १७ ॥

'ञ'

सदा ईश्वरसंयुक्तं ञकारं शृणु सुन्दरि !
रक्तविद्युल्लताकारं स्वयं परमकुण्डली ॥ १८ ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥ १९ ॥

'ट'

टकारं चञ्चलापाङ्गि स्वयं परमकुण्डली।
कोटिविद्युल्लताकारं पञ्चदेवमयं सदा ॥ २० ॥
पञ्चप्राणयुतं वर्णं गुणत्रयसमन्वितम्।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥ २१ ॥

'ठ'

ठकारं चञ्चलापाङ्गि कुण्डली मोक्षरूपिणी ।
पीतविद्युल्लताकारं सदा त्रिगुणसंयुतम् ॥ २२ ॥
पञ्चप्राणात्मकं वर्णं पञ्चप्राणमयं सदा ।
त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा ॥ २३ ॥

'ड'

डकारं चञ्चलापाङ्गि सदा त्रिगुणसंयुतम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥ २४ ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ।
चतुर्ज्ञानमयं वर्णम् आत्मादितत्त्वसंयुतम् ॥ २५ ॥
पीतविद्युल्लताकारं डकारं प्रणमाम्यहम् ॥

'ढ'

ढकारं परमाराध्यं या स्वयं कुण्डली परा ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा ॥ २६ ॥
सदा त्रिगुणसंयुक्तम् आत्मादितत्त्वसंयुतम् ।
रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम् ॥ २७ ॥

'ण'

णकारं परमेशानि स्वयं परमकुण्डली ।
पीतविद्युल्लताकारं पञ्चदेवमयं सदा ॥ २८ ॥
पञ्चप्राणमयं देवि सदा त्रिगुणसंयुतम् ।
आत्मादितत्त्वसंयुक्तं महामोहप्रदायकम् ॥ २९ ॥

( कामधेनुतन्त्रे ४ प०)

'त'

तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं तथा ॥ १ ॥
त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥ २ ॥

'थ'

थकारं चञ्चलापाङ्गि कुण्डली मोक्षरूपिणी ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ॥ ३ ॥

पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ।
अरुणादित्यसङ्काशं थकारं प्रणमाम्यहम् ॥ ४ ॥

'द'

दकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥ ५ ॥
त्रिशक्तिसहितं देवि त्रिबिन्दुसहितं सदा ।
आत्मादितत्त्वसंयुक्तं स्वयं परमकुण्डली ॥ ६ ॥
रक्तविद्युल्लताकारं दकारं हृदि भावय ।

'ध'

धकारं परमेशानि कुण्डली मोक्षरूपिणी ॥ ७ ॥
आत्मादितत्त्वसंयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि त्रिशक्तिसहितं सदा ॥ ८ ॥
त्रिबिन्दुसहितं वर्णं धकारं हृदि भावय ।
पीतविद्युल्लताकारं चतुर्वर्गप्रदायकम् ॥ ९ ॥

'न'

नकारं शृणु चार्वङ्गि रक्तविद्युल्लताकृतिम् ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥ १० ॥
पञ्चप्राणात्मकं वर्णं हृदि भावय पार्वति !

'प'

अतः परं प्रवक्ष्यामि पकारं मोक्षदायकम् ॥ ११ ॥
चतुर्वर्गप्रदं वर्णं शरच्चन्द्रसमप्रभम् ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥ १२ ॥
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिगुणै रहितं वर्णमात्मादितत्त्वसंयुतम् ॥ १३ ॥
महामोक्षप्रदं वर्णं हृदि भावय पार्वति !

'फ'

फकारं शृणु चार्वङ्गि रक्तविद्युल्लतोपमम् ॥ १४ ॥
चतुर्वर्गप्रदं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं वर्णं सदा त्रिगुणसंयुतम् ॥ १५ ॥

आत्मादितत्त्वसंयुक्तं त्रिबिन्दुसहितं सदा ॥

'ब'

बकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ॥ १६ ॥
शरच्चन्द्रप्रतीकाशं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिबिन्दुसहितं सदा ॥ १७ ॥
त्रिशक्तिसहितं वर्णं सदा चामृतनिर्मितम् ।
स्वयं कुण्डलिनी साक्षात् सततं प्रणमाम्यहम् ॥ १८ ॥

अत्र अष्टादशे श्लोके समागतं 'अमृतनिर्मितम्' इति पदं सर्वेषां मातृकावर्णानां विशेषणम्; समेषां लिप्यक्षराणां शिरसि निपतिताभिरमृतधाराभिर्निर्मितत्वात् ।

'भ'

भकारं शृणु चार्वङ्गि स्वयं परमकुण्डली ।
महामोक्षप्रदं वर्णं अरुणादित्यसन्निभम् ॥ १९ ॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ॥ २० ॥

'म'

मकारं शृणु चार्वङ्गि स्वयं परमकुण्डली ।
अरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम् ॥ २१ ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ।
आत्मादितत्त्वसंयुक्तं हृदिस्थं प्रणमाम्यहम् ॥ २२ ॥

'य'

यकारं शृणु चार्वङ्गि चतुष्कोणमयं सदा ।
पलालधूमसङ्काशं स्वयं परमकुण्डली ॥ २३ ॥
पञ्चप्राणमयं वर्णं पञ्चदेवमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं तथा ॥ २४ ॥
प्रणमामि सदा वर्णं मूर्तिमन्मोक्षमव्ययम् ।

( कामधेनुतन्त्रे ५ प० )

'र'

रकारं चञ्चलापाङ्गि कुण्डलीद्वयसंयुतम् ।
रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा ॥ १ ॥

पञ्चप्राणमयं वर्णं त्रिबिन्दुसहितं सदा ।
त्रिशक्तिसहितं देवि ! आत्मादितत्त्वसंयुतम् ॥ २ ॥
सर्वतेजोमयं वर्णं सततं प्रणमाम्यहम् ॥

'ल'

लकारं चञ्चलापाङ्गि कुण्डलीत्रयसंयुतम् ॥ ३ ॥
पीतविद्युल्लताकारं सर्वरत्नप्रदीपकम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा ॥ ४ ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं हि सा ।
आत्मादितत्त्वसहितं हृदि भावय सर्वदा ॥ ५ ॥

'व'

वकारं चञ्लापाङ्गि कुण्डली मोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं तदा ॥ ६ ॥
त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् ।
पञ्चदेवमयं वर्णं पीतविद्युल्लतोपमम् ॥ ७ ॥
चतुर्वर्गमयं वर्णं सर्वसिद्धिप्रदायकम् ।
त्रिशक्तिसहितं देवि ! त्रिशक्तिसहितं सदा ॥ ८ ॥

'श'

शकारं परमेशानि ! स्वर्णवर्णं शुचिस्मिते !
रक्तवर्णप्रभाकारं स्वयं परमकुण्डली ॥ ९ ॥
चतुर्वर्गप्रदं देवि ! शकारं ब्रह्मविग्रहम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये ॥ १० ॥
रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा ।
त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम् ॥ ११ ॥

'ष'

षकारं शृणु चार्वङ्गि कोणषटकमयं सदा ।
रक्तचन्द्रप्रतीकाशं स्वयं परमकुण्डली ॥ १२ ॥
चतुर्वर्गप्रदं वर्णं सुधानिर्मितविग्रहम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥ १३ ॥
रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं परम् ।
सर्वदेवमयं वर्णं हृदि भावय पार्वति ॥ १४ ॥

अत्र 'सुधानिर्मित' इत्युक्त्या अमृतधारामयी लिपिः प्रमाणिता भवति ।

'स'

सकारं शृणु चार्वङ्गि शक्तिबीजं परात् परम् ।
कोटिविद्युल्लताकारं कुण्डलीत्रयसंयुतम् ॥ १५ ॥

पञ्चदेवमयं देवि पञ्चप्राणमयं सदा ।
रजःसत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥ १६ ॥

त्रिशक्तिसहितं वर्णमात्मादितत्त्वसंयुतम् ।
प्रणम्य सततं देवि हृदि भावय सुन्दरि ॥ १७ ॥

'ह'

हकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ।
कुण्डलीत्रयसंयुक्तं रक्तविद्युल्लतोपमम् ॥ १८ ॥

रजःसत्त्वतमोयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ॥ १९ ॥

त्रिबिन्दुसहितं वर्णं हृदि भावय सुन्दरि !

'क्ष'

क्षकारं शृणु चार्वङ्गि कुण्डलीत्रयसंयुतम् ॥ २० ॥
चतुर्वर्गमयं वर्णं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ॥ २१ ॥

त्रिबिन्दुसहितं वर्णमात्मादितत्त्वसंयुतम् ।
शरच्चन्द्रप्रतीकाशं हृदि भावय पार्वति ॥ २२ ॥

( कामधेनुतन्त्रे ६ प० )

एवं सौषुम्णाध्वनेः शिरसि निपतिताभिः अमृतधाराभिः अकाराद्यक्षराणां लिपयः सूक्ष्मदर्शिभिर्मुनिभिर्दृष्टाः । एतेषां लिप्यक्षराणां कानिचिदक्षराणि सम्प्रति लोके प्रयुज्यमानदेवनागरीवद् विद्यन्ते । तद्यथा 'ष' इत्यक्षरम् ।

षकारं शृणु चार्वङ्गि कोणषट्कमयं सदा ।
रक्तचन्द्रप्रतीकाशं स्वयं परमकुण्डली ॥ ९ ॥

( कामधेनुतन्त्रे ६ प० )

षकारः परमकुण्डलीस्वरूपः, सा च कुण्डली कीदृशी इति चेत् ? कोणषट्कमयी । सा च कुण्डली रक्तचन्द्रप्रतीकाशा रक्तचन्द्रवद् रक्ता विद्यते । ( अत्र यद्यपि रक्तचन्द्रप्रतीकाशमित्यादि द्वितीयान्तं पदं प्रणमामीत्यस्याः क्रियायाः

कर्मभूतम्, तथापि प्रथमाविभक्तिपरिवर्तनेन कुण्डलीत्यस्यापि विशेषणं बोध्यम्। एवमन्येष्वपि श्लोकेषु कृष्णवर्णाङ्कितपदानां विभक्तिपरिवर्तनेन परस्परं विशेषणम् अवगन्तव्यम्। ) तथा च 'ष' इत्यक्षरं कोणषट्कमयम्। लोकेऽपि देवनागरलिप्यां 'ष' इत्यक्षरं कोणषट्कमयं दृश्यते। तद्यथा—



एवं 'ह' इति देवनागरलिप्यक्षरमपि कामधेनुतन्त्रोक्तरूपमेव। तद्यथा—

हकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम्।
कुण्डलीत्रयसंयुक्तं रक्तविद्युल्लतोपमम्॥ १८॥

अत्र हकारस्य रूपं कुण्डलीत्रयसंयुक्तमिति प्रोक्तम्। देवनागरलिप्यामपि 'ह' इत्यक्षरं कुण्डलीत्रयसंयुतं विद्यते। तद्यथा—ह इति।

कामधेनुतन्त्रमतानुसारेण शिरसि निपतिताभिः सुधायाः बिन्दुधाराभिः या लिपिर्निर्मिता, तस्या लिपेः केषुचिद् अक्षरेषु परस्परं साम्यं विद्यते। तद्यथा—'ओ', 'औ' इत्यनयोः अमृतनिर्मितलिप्यात्मिका आकृतिरेकरूपा। उभयोरपि लिप्यक्षरं रक्तविद्युल्लताकारमिति वर्णः (रङ्गः) एक एव। एवमन्येषामपि साम्य-वैषम्ये समूहनीये। किञ्च, चक्षुषः पुरःसरसि ततस्ततः ऊर्ध्वाधःप्रचलन्त्यः या झिल्लिका दृश्यन्ते, ताः सर्वा मनश्चिन्तितानां पदार्थानां चित्राणि। तानि च चित्राणि घटपटाद्यक्षराणां लिपयः; सर्वस्य ज्ञानस्य शब्दानुविद्धत्वात्।

अत्र संक्षेपतः एवं बोद्धव्यम्—मुखान्निःसृता ध्वनयो बाह्याभ्यान्तरभेदेन द्विविधं रेखयाऽङ्कितं स्वरूपं निर्मान्ति। या ध्वन्यनुरूपा आकृतिः अमृतधारया बुद्धिकेन्द्रे ध्वन्यभिलेखनयन्त्र इव विलिख्यते, सा आभ्यन्तरलिपिः। अन्तःकरणाद् बहिर्देशे तु त्रिविधं रेखयाङ्कितं स्वरूपं निर्मान्ति। तद्यथा—

घटपटादयो ध्वनयो यादृशं घटपटादिकं मनसि निधाय प्रोच्चरितास्तादृशं कम्बुग्रीवादिविशिष्टं घटपटाद्यात्मकं चित्रं वायौ यद्वा काष्ठादिफलकेषु निर्मान्ति। घटपटाद्यर्थानां स्थितिः मनसि, मनसा स्मृते सति तेषां स्मरणं जायते। अकारादि-ध्वनिसमूहात्मकं वाक्तत्त्वमपि मनसोऽभिन्नम्।

ऐतरेयब्राह्मणे वाक्तत्त्वमनस्तत्त्वयोर्युग्मकं प्रतिपादितम्। तद्यथा—

'वाक्च मनश्च देवानां मिथुनम्' इति।

(ऐतरेयोपनिषद् ५।३३)।

एवञ्च वागर्थमनसां परस्परं सम्पृक्तत्वम् अभेदत्वञ्च प्रतिभातः । अतएव घटपटादयो ध्वनयो यादृशं घटपटादिकं मनसि निधाय प्रोच्चारितास्तादृशं कम्बुग्रीवादिविशिष्टं घटपटाद्यात्मकं चित्रं वायौ यद्वा काष्ठादिफलकेषु निर्मान्ति । अत्रेयं प्रतिपादिता चित्रात्मिका लिपिश्चित्राल्लिपिविकासं स्वीकुर्वतां मतम्, अथ च चीनीभाषायाश्चित्रमयीं लिपिं यथार्थतया पुष्णाति । वायौ घटपटादिध्वनिभिः घटपटाद्यात्मकं यच्चित्रं निर्मीयते, तद् अस्माकं चक्षुषा न प्रत्यक्षीक्रियते; तादृशचित्रस्य अतीव सूक्ष्मत्वात् । काष्ठादिफलकेषु च घटपटादिध्वनिभिस्तत्तदाकारं यच्चित्रं निर्मीयते, तत्तु चक्षुरिन्द्रियविषयार्हम् । परन्तु साधनद्वारा शब्दं तन्निष्ठां शक्तिञ्च साधुतया ये समुपासितवन्तः, तेषामेव घटपटादिध्वनिषु तादृशी शक्तिर्विद्यते, नान्येषाम् । एतादृशी शक्तिः आंशिकरूपेण अद्यतनेऽपि काले केषाञ्चिद ध्वनिषु दृष्टा[1] ।

२. द्वितीयं रेखयाङ्कितं स्वरूपं सन्देशाङ्कनयन्त्रेषु दृश्यते, यस्मिन् यन्त्रे रोमनलिप्यां ध्वनयोऽङ्किता भवन्ति । यदा युष्मद्-अस्मदाद्यर्थकाः आई, इ— इत्यादयो ध्वनयः समुच्चार्यन्ते, तदा ते ध्वनयो यन्त्रस्य तद्देशं स्वतरङ्गशक्त्या अभिहतं कुर्वन्ति, यत्र ते रोमनलिप्यामङ्किता भवन्ति । 'आई (अहम्), 'यू' (त्वम्)—इत्यादिध्वनितरङ्गशक्त्या अभिहतो यन्त्रस्य स भागः कर्गजपत्रेषु तं ध्वनिं मसिद्वारा अङ्कितं करोति । अद्यतने युगे इदं यन्त्रम् इतिवृत्तप्रकाशकार्यालयेषु[2] अथ च पत्रालयेषु[3] दृश्यते । अस्मिन् यन्त्रे विप्रकृष्टात् समागताः घटपटादयः शब्दाः स्वतः अङ्किता भवन्ति ।

३. ध्वनिविलेखनयन्त्रस्य मण्डलके ध्वनयो रेखया अङ्कीक्रियन्ते । अस्य व्याख्यानमितः पूर्वं कृतम्, अतो नास्त्यस्य व्याख्यावसरः ।

---

१. "वायसफिगर्ज पुस्तक की लेखिका मिस वट्स ह्यू ज ने शब्द के विज्ञान का क्रियात्मक रूप लन्दन के लार्ड लिटन शिल्प में दिखाया था । वह अपने बताये संगीतयन्त्र 'इडोफोन' को विधिपूर्वक बजाती थी, जिसमें अनेक प्रकार के रूप बन जाते थे । एक बार उसने डेजी नामक सुन्दर पुष्प की आकृति बनायी और उसकी व्याख्या भी की कि संगीतयन्त्र को किस विधि से बजाने से ऐसा हुआ ।

फ्रांस की एक महिला-वैज्ञानिक ने शब्दविज्ञान पर परीक्षण किये थे ।..... किसी विद्यार्थी ने कालभैरवाष्टकस्तोत्र का गान किया । इससे एक भयङ्कर मूर्ति और कुत्ते की रेखायें अङ्कित हो गयीं ।"—आ० पं० श्रीरामशर्मणा तथा डा० चमनलाल गौतमेन प्रणीते तन्त्रमहाविज्ञाने, प्र० ख०, पृ० ४५६ ) ।

२. समाचारप्रकाशनकार्यालयेषु ।　　३. पोस्ट आफिस ।

इतोऽतिरिक्तान्यन्यान्यपि ध्वनिचित्राणि काष्ठादिफलकानामुपरि, विस्तीर्णासु सिकतासु, रजःकणेषु च ध्वनितरंगैर्निर्मीयन्ते।

एषु रेखयाङ्कितेषु स्वरूपेषु ध्वनिविलेखनयन्त्रस्य मण्डलके अकारादिध्वनेर्यद् अङ्कनम्, तदेव ध्वन्यनुरूपम्। 'तत्कथं ध्वन्यनुरूपम्? अन्यच्च कथं न स्वीक्रियते?'—इत्येतत् सर्वं पूर्वमेव ध्वनिविलेखनयन्त्राङ्कितस्य, अथ च अमृतधारया अङ्कितस्य स्वरूपस्य प्रतिपादनावसरे व्याख्यातम्। साधनद्वारा शब्दं तन्निष्ठां शक्तिश्च समुपासितवद्भिः प्रोच्चारितैः घटपटादिध्वनिभिः चित्रफलके यद् घटपटाद्यात्मकं चित्रम् अङ्कीक्रियते, यद्वा चीनभाषाया यच्चित्रात्मकमङ्कनम्, तदपि ध्वन्यनुरूपतां न आवहति। तच्चित्रं दर्शंन्दर्शं 'घटस्य चित्रं सुन्दरम्' 'अयं घटः' इत्येवम् अनेकवाक्यात्मकस्य ध्वनेः स्मरणात्, न तु 'घटः' 'पटः'—इति ध्वनिद्वयस्य। ध्वनिविलेखनयन्त्रीयध्वनिचिह्नेन सर्वत्र देशे सर्वस्मिन् काले च एक एव ध्वनिरभिव्यज्यते॥

॥ इति शम् ॥

# अकारादिध्वनेरभिव्यक्तिप्रक्रिया

## (तृतीयः परिच्छेदः)

### अकारादिध्वनेरभिव्यक्तिभेदाः

अकारादिध्वनेरभिव्यक्तिर्द्विधा भवति—१. अयात्निकी, २. यात्निकी च। अयात्निकी अभिव्यक्तिः पूर्वमेव प्रतिपादिता। तस्य संकेतमात्रं पुनः स्मारयितुमधस्ताद् अङ्कितम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
आद्यन्तेन संयोगात् अहमित्येव जायते॥
इकारादिहकारान्ता वर्णाः समभवँस्ततः॥
(नन्दिकेश्वरकृतकाशिका)

'अ' इत्युन्मेषोऽनुत्तरपदेन उच्यते। अयमेवैकः सर्वा वाक्, अकारस्तत्तदाकारभेदभाक् समुज्जृम्भते। इच्छायां सत्यां स अकार इकारात्मना तस्याश्च इच्छाया उन्मेषे सति उकारात्मना स्मृतः। इदमेव वर्णत्रयं सर्वेषां स्वराणां मूलभूतम्। हकाराच्च समेषां व्यञ्जनवर्णानां समभिव्यक्तिः सञ्जाता। व्यञ्जनवर्णानां मध्ये सर्वप्रथमं हकाराद् चत्वारः ऊष्माणो वर्णाः समभिव्यक्ताः। हात् सः, ततः षः, ततः स इति। अन्तःस्थानां मध्ये शाद् वः, तस्माद् लः, ततो रकारः, रकाराच्च 'य' वर्णः समभिव्यक्तः।

क्वचित्तु 'हं' इत्येवं बिन्दुयुक्तो हकार एव स्वरान् सृजति। बिन्दुरहितो विसर्गयुक्तश्च 'हः' इत्येवंरूपो व्यञ्जनानि अभिव्यनक्ति। 'ह' इत्यत्र हकाराद् अन्तस्थोष्मवर्णानाम्, बिन्दोश्च व्यञ्जनवर्णानां समभिव्यक्तिर्जाता[1]। क्वचित्तु 'अहम्' इत्यस्मादेव समेषाम् अभिव्यक्तिरिति प्रतिपादितम्। उभयोर्मतयोः एकमेव स्वारस्यम्; अनच्कहकारस्य विसर्गरूपत्वात्, 'हः' इति हकारोत्तराकारस्य विद्यमानत्वात्, 'हं' इत्यत्र च अनुस्वारस्य मकाररूपत्वाच्च 'अहम्', 'हः' 'हं'— इत्येषां भेदाभावोऽर्थतः समायाति। इयमेव समेषामकारादिध्वनीनाम् अयात्निकी समभिव्यक्तिः। सृष्टेरादौ कण्ठताल्वादियत्नं विनैव समभिव्यक्ता इत्यर्थः। अतएव वैयाकरणाः अकारादिध्वनेर्विभुत्वं स्वीकुर्वन्ति। उक्तञ्च 'सरूपाणामेकशेष एकविभक्तौ' (पा० सू० १।२।६४) इति सूत्रे भाष्ये—

"एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत् सर्वयागेष्वङ्गं भवति।" इति।

---

१. व्याकरणदर्शनपीठिकायामेतदीयोंऽशो ३०-३३तमेषु पृष्ठेषु द्रष्टव्यः।

पातञ्जलमहाभाष्यस्य पस्पशाह्निके च—

'श्रोत्रोपलब्धिबुद्धिनिर्ग्राह्यः, प्रयोगेणाभिज्वलितः आकाशदेशः शब्दः' ।

यथा आकाशं कूपे खनिते सति तत्रापि समुपलभ्यते, एवमकारादिध्वनयोऽपि अभिव्यक्तिजनकोपयुक्तसाधनस्य प्रयोगेण आकाशदेशे यत्र कुत्राऽपि अभिव्यक्ति-प्रभवाः; तेषां सर्वत्र व्यापकत्वात्। अतएव अभिव्यञ्जनसमर्थभूतेन ध्वन्यभिलेखन-यन्त्रेणापि अकारादयो वर्णाः, नृत्यगीतादिझङ्कारास्च अभिव्यक्तिङ्गताः जनैः श्रूयन्ते। न च अकारादिध्वनेः सर्वव्यापकत्वस्वीकारे पदादिकल्पनाऽसम्भवा, तेषां पूर्वापरत्वस्याभावादिति वाच्यम्; अभिव्यक्तिक्रमेण तत्कल्पनायाः सम्भवात्। विभुत्वाच्च ध्वनयः सर्वत्र प्रकाशार्हाः इति निश्चप्रचं जातम्। परन्तु प्राणिनामन्तः-करणे विवक्षया आस्यान्तर्गतकण्ठताल्वादिस्थानेषु स्पृष्टादिप्रयत्नैः ध्वनेः सर्वो-त्तममभिव्यक्तिर्जायिते। यथा चित्स्वरूपे आत्मनि सर्वत्र व्याप्तेऽपि तदनुभूतिरन्तः-करण एव, यत्रान्तःकरणम् तत्रैव चेतनस्य स्फुरणं सततम्। पाषाणादिष्वपि चिद् विद्यते, परन्तु तत्रान्तःकरणाभावाद् अनभिव्यक्तिः। एवमकारादिध्वनौ सर्वत्र व्याप्तेऽपि अन्तःकरणे सततं तदभिव्यक्तिर्जायते; आत्मनो ज्ञानाधिकरणत्वात्। ज्ञानस्य च

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते'।

इति श्रीभतृहर्युक्त्या शब्दानुविद्धत्वात्। अन्तःकरणस्य च आत्मनाऽधिष्ठि-तत्वात् तत्र अकारादयः सततमाभान्ति, विवक्षया कण्ठताल्वादिना सह स्पृष्टादि-विशेषप्रयत्ने कृते सति वदने अभिव्यक्ति प्रयान्ति।

**यात्निकी अभिव्यक्तिः**

यात्निकीति शब्दस्य यत्नेन कण्ठताल्वनादिना सह स्पृष्टविवारादिभि-र्बाह्याभ्यन्तरप्रयत्नैर्भवा इत्यर्थः। कण्ठताल्वादिस्थानाभावेऽपि अकारादिध्वनेरभि-व्यक्तिः श्रुता। तदुक्तं नन्दिकेश्वरेण काशिकायाम्—

नृत्तावसने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धान् एतद्विमर्शे शिवसूत्रजालम्॥ इति।

चतुर्दशवारं यो ढक्कानादः शिवेन कृतः, तस्मिन्नादे चतुर्दशसूत्रघटक-ध्वनयः पाणिनिना श्रुताः, ढक्कायां न किमपि कण्ठताल्वादि स्थानं विद्यते, परन्तु तत्र अकारादिध्वनेरभिव्यक्तिर्जाता। इयमपि ध्वनेरभिव्यक्तिर्यात्निकी एव; हस्त-ढक्कयोः संयोगादिव्यापाररूपं यत्नं विना नादाभिव्यक्तेरसम्भवात्। परन्त्वयं यत्नः आस्यान्तर्गतवर्णाभिव्यक्तिजनकप्रयत्नाद् भिन्नः। एवमकारादिध्वनेरभिव्यक्तिजन-कोपयुक्तप्रयत्ने विद्यमाने सति यत्र कुत्रापि वर्णा अभिव्यञ्जयितुं शक्यन्ते।

लोके व्यवह्रियमाणस्य कण्ठताल्वादिव्यापारेण समभिव्यक्तस्य अकारादि ध्वनेरभिव्यक्तौ उपादानविषये षण्मतानि विद्यन्ते । तद् यथा—

१. अग्नीषोमतत्त्वमेव तालुमार्गेण ध्वनिरूपतां भजति ।

२. कुण्डलिनीशक्तिः सुषुम्नामार्गेण बाह्याभ्यन्तरप्रयत्नाभ्यां वर्णान् अभिव्यनक्ति ।

३. प्रतिश्रुत्कवादः ( प्रतिश्रुत्कात्प्रतिबिम्बम् )

४. वायुरेव कण्ठताल्वादिषु प्रतिहतः शब्दात्मानं भजति ।

५. सर्वशक्तिमन्तोऽणव एव वायुना समुपचिताः सन्तः शब्दरूपतां दधति ।

६. ज्ञानमेव विवक्षाधीनतां स्वीकृत्य ध्वन्यात्मना विवर्तते ।

**अग्नीषोमतत्त्ववादः**

'अकारादिध्वनेरभिव्यक्तिविषये अग्नीषोमतत्त्वमेव तालुमार्गेण आस्यम् आपूरयति, कण्ठताल्वादिस्थानमासिञ्चँश्च अर्थावबोधनसमर्थध्वनिसमूहात्मकं शब्दरूपं भजति' इति केषाञ्चिन्मतं यत्र तत्र समुपलभ्यते । वक्तुर्विवक्षया मूलाधारात् समुत्थितोऽग्निः शिरसि सहस्रारस्थं षोडशकलात्मकम् अमृतबिन्दुं स्रावयति । मूलाधारस्थेन वह्निना सन्तापिताद् बिन्दोः निःस्यन्दती अमृतधारा श्रोत्रोपलब्धि-विषया भवति । उक्तञ्च निरुक्तकारेण मन्त्रद्वयस्य व्याख्यावसरे अग्नीषोमविषये—

तिस्रो वाच ईरयति प्रवह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥
( ऋग्वेदः )

वह्निः तिस्रो वाचः प्रेरयति—ऋचः, यजूंषि, सामानि । ऋतस्य आदित्यस्य कर्माणि, ब्रह्मणो जगत्स्रष्टुः पितामहस्य मतानि च प्रेरयति । उक्तञ्च निरुक्तस्य दैवतकाण्डे—

'एष एवैतत् सर्वमक्षरम्' इति ।

गावः[1] वाचः पृच्छमानः[2] पृच्छन्त्यः वावशानाः कामयमानाः गोपतिं वह्निं यान्ति गच्छन्ति । मतयो बुद्धयोऽपि पृच्छन्त्यः कामयमानाश्च सोमं यन्ति गच्छन्ति । इदमेव तात्पर्यं निम्नोक्ता अपि ऋक् समादधाति—

---

१. अत्र गोशब्दः वाक्पर्यायवाची—निरुक्ते वाङ्नामनिरूपणे एतदीयोऽर्थो द्रष्टव्यः ।

२. 'पृच्छमानः' इत्यत्र छन्दसि सर्वविधीनां वैकल्पिकत्वाद् आत्मनेपदम् ।

सोमं गावो धेनवो वावशानाः,
सोमं विप्रा मतिभिः पृच्छमानाः ।
सोमः सुतः पूयते आज्यमानाः,
सोमे अर्कास्त्रिष्टुभः संनवन्ते[1] ॥

गावः=वाचो धेनवः=रश्मयः वावशानाः=कामयमानाः, आदित्यं प्रयन्ति । एवमेव सोमं विप्रा रश्मयः मतिभिः पृच्छमानाः कामयमानाः आदित्यं यन्ति । अज्यमानः गतिशीलः पुनः सर्वप्राणिप्रसवकरः सोमः पूयते पुनाति, सोमे अर्काः रश्मयः त्रिष्टुभश्च वाचश्च संनवन्ते, सम्यक्तया प्रयान्तीत्यर्थः ।

यथा प्रदीपः घृताद्यभावे न प्रज्वलितुं समर्थः, एवं सूर्ये सोमतत्त्वाभावे न तस्य स्थितिः सम्भाव्यते । सूर्यरश्मिसन्तप्ताच्चन्द्रमसः सोमतत्त्वं भानौ सततं निपतति । तेन सूर्यकिरणाः सततं प्रज्वलन्ति । किञ्च, 'अग्नीषोमात्मकमिदं जगत्' इत्युक्त्या काष्ठादिष्वपि सोमतत्त्वं विद्यते । अतएव काष्ठादिभ्यो योऽग्निः प्रज्वलति स प्रदीपे घृतस्येव सोमस्य सत्त्वादेव, नान्यथा । यद्यपि तूलवर्तिकासु सोमस्य विद्यमानत्वाद् घृताद्यभावेऽपि प्रदीपप्रज्वलनं सम्भवति, तथापि चिरकाल-पर्यन्तं प्रकाशस्यावश्यकतायां सत्यां तैलाद्यभावेऽपि नाभीष्टसिद्धिः । प्रदीपे तैलादेः सत्त्वे तु प्रदीपस्थतूलवर्तिकायां विद्यमानं सोमतत्त्वं घृतादिनिष्ठः सोमः संवर्द्धयति । ततश्च चिरकालं प्रदीपात् प्रकाशः समुपलभ्यते । एवमेव शरीरान्तःप्रदेशेऽपि मूलाधारस्थवह्निना सन्तप्तात् शिरोमण्डलदेशे सहस्रारस्थाद् बिन्दोः सोमधारा अधःस्ताद् अग्निकुण्डे ( मूलाधारे ) न सन्तपेच्चेत् तर्हि घृताभावे प्रदीप इव मूलाधारस्थोऽग्निरपि न प्रज्वलेत् । सोमतत्त्वं विना अग्निर्वाक् च न प्रज्वलितुं समर्थे । अतएव सोमः अग्नितत्त्वस्य वाचश्च जनयिता प्रोक्तः । अतएव उपर्युद्धृते मन्त्रे 'सोमे अर्कास्त्रिष्टुभः संनवन्ते' इत्युक्तम् ।

वस्तुतस्तु अग्नितत्त्वं विना बिन्दुस्थानात् सोमस्य स्पन्दनमसमम्भवम्, सोमतत्त्वं च नाग्नेः सत्तेति अग्नीषोमावुभावपि संघट्य अकारादिध्वनेरभिव्यक्तिं सम्पादयतः । अतएव—

कालाग्निरुद्रात् प्रसृतं च तेजः भूरिस्फुटं दीप्ततरं विचिन्त्यम् ।
ऊर्ध्वे स्थिता चन्द्रकला च शान्ता, पूर्णामृतानन्दरसेन देवि ॥
तदोभयोर्वह्निविषानुयोगात्तेजःशशाङ्कौ द्रवितौ च यस्मात् ।
तेजःशशाङ्कस्फुटमिश्रितत्वाद् भवेत्तदा किं त्ववताररूपम्[2] ॥ इति ।

---

१. निरुक्ते समुद्धृतम् ।

२. श्रीतन्त्रालोके, तृतीये आह्निके, ६७तमस्य श्लोकस्य व्याख्यायां द्रष्टव्यम् ।

अत्र तेजःशशाङ्कौ मिश्रितत्वाद् इत्युक्तम्। इदमेव तथ्यं श्रीतन्त्रालोकस्य चतुर्थाह्निके—

'तत्रस्थां मुञ्चते धारां सोमो ह्यग्निप्रदीपितः[1]'।

इत्यत्र प्रतिपादितम्। अग्निना सन्तप्तः तारत्वादिमार्गं सिञ्चन् सोमः षोडशात्मके विशुद्धाख्ये चक्रे अकाराद्यष्टवर्गात्मिकारूपं दधाति। न केवलं विशुद्धचक्रमेव, अपितु अनाहतमणिपूरादिकं सर्वं चक्रं सर्वाणि च ज्ञानकर्मोभयेन्द्रियाण्यपि बिन्दोर्निपतिता अमृतधारा सिञ्चति[2], तेन सर्वाणीन्द्रियाणि स्वविषयग्रहणसमर्थानि भवन्ति। कण्ठप्रदेशे षोडशारेषु निःस्यन्दितः सोमस्तु अष्टवर्गात्मकम् अकारादिध्वनिरूपतां भजति। कण्ठमूलमेव विशुद्धाख्यं चक्रम् उपनिषत्सु प्रोक्तम्।

उक्तञ्च—

आधारं गुदमित्युक्तं स्वाधिष्ठानं तु लैङ्गिकम् ॥ १० ॥
मणिपूरं नाभिदेशं हृदयस्थमनाहतम्।
विशुद्धिः कण्ठमूले च आज्ञाचक्रञ्च मस्तकम् ॥ ११ ॥ इति।

(योगचूडामण्युपनिषदि तृतीयोऽध्यायः)

कण्ठमूले विशुद्धिचक्रे षोडशाराः सन्ति। उक्तञ्चैतद् योगशिखोपनिषदि प्रथमाध्याये—

कण्ठकूपे विशुद्धाख्यं यच्चक्रं षोडशाश्रयम्।
पीठं जालन्धरं नाम तिष्ठत्यत्र सुरेश्वर ॥ १७४ ॥ इति।

कण्ठदेशस्थानां षोडशाराणां कण्ठतालुमूर्द्धदन्तादिस्थानैः सह सम्पर्कः। अत एव कण्ठदेशाद् अभिव्यक्तानाम् अकारादिध्वनीनां कण्ठताल्वादिस्थानत्वं स्वीकृतम्। यस्य वर्णस्य यत्स्थानं स वर्णः तत्स्थानसम्बद्धः। कण्ठदेशस्थविशुद्धचक्रस्य अरायामेव वैखरीरूपतां भजति। उक्तञ्च नन्दिकेश्वरेण काशिकायाम्—

'वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः'। इति।

यद्यप्यत्र 'वक्त्रे विशुद्धचक्राख्ये' इत्येव प्रोक्तम्, 'कस्यां विशुद्धचक्रस्य अरायां को वर्णो निष्पद्यते?'—इति न प्रोक्तम्, तथापि एकस्यामेव अरायां विजातीयाः ककारादयो ध्वनयः कथमभिव्यज्येरन्? दृश्यते च लोके अकारादिध्वनीनां परस्परं स्थानप्रयत्नभेदः, किञ्च केषाञ्चिद् वर्णानां स्थानैक्येऽपि प्रयत्नभेदः, प्रयत्नैक्ये च स्थानभेदः। तद्यथा क, ख—इत्यनयोः आभ्यन्तरस्थानप्रयत्नैक्येऽपि विवारादेः प्रयत्नस्य, अथ च वर्णाभिव्यक्तिविषयकेच्छाया अपि भेदः। तस्माद्

१. २. योगशिखोपनिषदि अ० ५, श्लो० ३३, श्रीतन्त्रालोकस्य चतुर्थे आह्निके श्लो० १४१, १३५ इत्यादिग्रन्थेषु एतदीयोऽशो द्रष्टव्यः।

अकारादिध्वनेरभिव्यक्तौ तत्तद्वर्णाभिव्यक्तिजनकानामराणामेव चेष्टा जायते। एवमग्नीषोमावेव वर्णरूपतां भजत इति केषाञ्चिन्मते निश्प्रचं जातम्। ऋग्वेदे अग्नीषोमतत्त्वस्य प्रतिपादनावसरे 'अग्निः सोमश्च ध्वनिं कुर्वन्तौ ब्रह्माण्डं सञ्चरतः'—इत्येवं प्रतिपादितम्।

'यत्पिण्डे तद् ब्रह्माण्डे', 'यद् ब्रह्माण्डे तत् पिण्डे' इत्युक्तरीत्या शरीरान्तःप्रदेशेऽपि तथा बोद्धव्यम्। एवमग्नीषोमयोः ध्वनिरूपता स्वीकृतिसामर्थ्यं विश्वासार्हतां च भजति। किञ्च, न किमपि वस्तु अग्नीषोमयोः समरसीभावं विना निष्पद्यते। प्राणिनां समुत्पत्तिः अग्नीषोमयोः परस्परं मिश्रणादेव। स्त्रीणां रजोऽग्निः, पुंसो रेतश्च सोमः, तयोः समरसीभावे सति शिशोरुत्पत्तिः। योनिं विनाऽपि समुचितव्यवस्थायां सत्यां यत्र कुत्रापि अग्नीषोमात्मकयोः रजोवीर्ययोः समरसीभावे सति शिशोरुत्पत्तिः सम्भाव्यते।

वस्तुतस्तु अस्मिन् मते सहस्रारस्थबिन्दोः मस्तिष्के सत्त्वात् सर्वासां वाचां वास्तविकं स्थानं शिरःप्रदेश एव। ततो निःस्यन्दितः सोमः, अष्टारादीन् सिञ्चन् मूलाधारं प्रविशति।

उक्तञ्च श्रीतन्त्रालोकस्य चतुर्थाह्निके—

षोडशद्वादशाराभ्यामष्टारेष्वथ सर्वशः।
एवं क्रमेण सर्वत्र चक्रेष्वमृतमुत्तमम्॥ १३५॥
सोमः स्रवति यावच्च पञ्चानां चक्रपद्धतिः। इति।

अवरोहात्मना क्रमेण सोमः तावद् अमृतं स्रवति, यावद् देहस्थं सर्वम् आप्लावितं न भवति। अर्थात् सहस्राराद् उद्भवन्ती वाक् अधःस्तनेषु स्थानेषु वामभागतो दक्षिणावर्तं कुर्वन्ती मूलाधारं समायाति। मूलाधारमागत्य तत् इडया मणिपूरमनाहतं विशुद्धं च आगत्य अकारादिध्वन्यात्मना बहिरभिव्यज्यते। पुनश्च सहस्रारे इडामार्गेण विलीना भवति।

## २. कुण्डलिनीशक्तिवादः

द्वितीयञ्च मतं विद्यते—कुण्डलिनीशक्तिवादः। कुण्डलिनीशक्तिरेव सुषुम्नामार्गेण बाह्याभ्यन्तरप्रयत्नाभ्यां वर्णान् अभिव्यनक्तीति द्वितीयमपि मतमुपनिषदादिषु समुपलभ्यते। सुषुम्नामार्गस्य मलेनावरोधे सति तु कथमपि स्पष्टतया वक्तुं न शक्यते। उक्तञ्च शिवदृष्टौ—

श्लेष्मणा पिहिता नाडी सुषुम्ना यावदेव हि।
व्यक्तवर्णं च वचनं तावद् वक्तुं न शक्यते॥ ४३॥ इति।

अत एव गर्भेऽपि रोदितुं नैव शक्यते।

हि = हेतौ। यावत्पर्यन्तं सुषुम्नानाडी श्लेष्मणा पिहिता — आच्छन्ना, अतः तावत्पर्यन्तं वचनं वाक्यं व्यक्तवर्णम् = व्यक्तो वर्णो यत्र तादृशं, वक्तुं बालकेन न शक्यते। अत एव सुषुम्नानाड्याः पिहितत्वादेव गर्भस्थितिदशायाम् उदरे रोदितुं न शक्यते। अन्यथा उदर एव बालरोदनस्वनेन महान् विक्षेपः स्यात् इति सुषुम्नानाड्याः पिहितत्वमेव श्रेयः। इयं कुण्डलिनीशक्तिः ब्रह्मनाड्याः सुषुम्नायाश्च मध्ये वर्तते। सुषुम्ना ब्रह्मनाडी, कुण्डलिनी तु ब्रह्मशक्तिरुच्यते। सा कुण्डलिनी तटित्कोटिसमानकान्त्या मृणालसूत्रवत् सूक्ष्माङ्गी विद्यते। इयं कुण्डलिनी सुषुम्नान्तःस्थिता, अतस्तस्या अपि विवरणं प्रसङ्गात् आवश्यकं प्रतिभाति।

**सुषुम्नायाः स्वरूपं मूलञ्च**

मूलाधारात्[1] प्रारभ्य ब्रह्मरन्ध्रपर्यन्तं ( शिरोऽन्तःप्रदेशपर्यन्तम् ) पृष्ठमध्यस्थितेन अस्थ्ना मेरुदण्डेन सह सुषुम्नाख्या ब्रह्मनाडी प्रतिष्ठिता। मूलाधारस्यापरं नाम देहमध्यः। षण्णवत्यङ्गुलपरिमितो देहस्य आयामो विद्यते। शिरःप्रदेशात् प्रारभ्य अङ्गुलार्द्धसहितं सप्तचत्वारिंशद् अङ्गुलात्मकमधः पादात् प्रारभ्य अङ्गुलार्द्धसहितं सप्तचत्वारिंशदंगुलात्मकम्, ऊर्ध्वं गुदलिङ्गयोर्मध्ये एकांगुलपरिमितमध्यभागं मूलाधारं प्रचक्षते। इदमेव च अग्नेरपि स्थानम्। उक्तञ्च दर्शनोपनिषदः चतुर्थखण्डे—

गुदात्तु द्व्यंगुलाद् ऊर्ध्वं मेढ्रात्तु द्व्यंगुलादधः॥ २॥
देहमध्यं विजानीहि मनुजानां तु सांकृते। इति।

सुषुम्नायाः उभयोरन्तर्भागे सहस्रदलसंयुतम् आधारपङ्कजं विद्यते। तदुक्तं स्वच्छन्दसंग्रहे—

"अधश्चोर्ध्वं सुषुम्नायाः सहस्रदलसंयुतम्।
रक्तं श्वेतञ्च साहस्रदलस्थं शक्तिभिर्युतम्॥

सुषुम्ना योनिमध्यस्था[2]"—इति।

अधःस्थितस्य सहस्रदलसंयुतस्य कमलस्य मुखमूर्द्धं रक्ताभञ्च, ऊर्ध्वभागे स्थितस्य च मुखमधः श्वेताभञ्च विद्यते। सुषुम्नामूलसंस्थितारुणसहस्रदलकमलस्यापरं नाम अकुलमिति। तदुपर्यष्टदलपद्मोर्ध्वषड्दलं कुलपदम्। अकुलसंज्ञकं सहस्रदलकमलं सुषुम्नां तदन्तर्गतत्रिशत्पङ्कजानि च व्याप्नोति। अकुलमित्यस्य कुलाद् अन्यद् अकुलमिति विग्रहः।

---

१. केचित् मूलाधारात्, केचिच्च कन्दात् प्रारम्भं मन्यन्ते; अन्तःस्थितायाः कुण्डल्या मूलाधारस्य योनिनिष्ठस्वायम्भुवलिङ्गेन सह सम्बन्धात्।

२. योगिनीहृदये चक्रसङ्केतनिरूपणे सेतुबन्धव्याख्यायाम् एतदीयोंऽशो द्रष्टव्यः।

मूलाधारे पीतवर्णं चतुष्पत्रम् आधारपङ्कजम्, तन्मध्ये च त्रिकोणात्मिका योनिः स्वाधिष्ठानाधारचक्रयोर्मध्ये कामरूपं योनिस्थानं प्रतिष्ठितम्। मेढ्रञ्च स्वाधिष्ठानेत्यपरनाम्ना प्रोच्यते। स्वः=प्राणाः, तेषामधिष्ठानम्=स्वाधिष्ठानम्। योनिमध्ये च पश्चिमाभिमुखं स्वायम्भुवं लिङ्गं विराजते। मेढ्राद् ऊर्ध्वं नाभेरधश्च खगाण्डवत् यत्स्थानं तत् कन्देत्यपरनाम्नाऽभिधीयते। कन्दमध्ये च सर्वाधारभूता सुषुम्नानाडी विराजते। ध्यानबिन्दूपनिषदि विशदरूपेणायं विषयः प्रतिपादितः।

सुषुम्नामभितो द्विसप्ततिसहस्राणि नाड्यस्तिष्ठन्ति। तासां मध्ये चतुर्दश नाड्यो मुख्याः। तद्यथा--

सुषुम्ना पिङ्गला तद्वत् इडा चैव सरस्वती।
पूषा च वरुणा चैव हस्तिजिह्वा यशस्विनी॥ ७॥
अलम्बुसा कुहूश्चैव विश्वोदरा पयस्विनी।
शङ्खिनी चैव गान्धारा इति मुख्याश्चतुर्दश॥ ८॥

( दर्शनोपनिषदश्चतुर्थः खण्डः )

सुषुम्नायाः सव्ये इडा, दक्षिणे च पिङ्गला, सरस्वती कुहूश्चैव पार्श्वयोः स्थिताः। इडायाः पृष्ठपूर्वयोः गान्धारी हस्तिजिह्वा च। पिङ्गलायाः पृष्ठपूर्वयोश्च पूषा, यशस्विनी च, कूहूहस्तिजिह्वयोर्मध्ये विश्वोदरा, यशस्विनीकुह्वोर्मध्ये च वरुणा, पूषासरस्वत्योरन्तःप्रदेशे यशस्विनी, गान्धर्याः सरस्वत्याश्च मध्ये शङ्खिनी, पायुपर्यन्तं कन्दमध्यगा अलम्बुसा, सुषुम्नाया राकायाश्च पूर्वभागे कुहूः—इत्येताश्चतुर्दश नाड्यः संस्थिताः। सुषुम्ना तु पूर्वोक्तग्रन्थे प्रोक्ता, तद्यथा—

पृष्ठमध्यस्थितेनास्थ्ना वीणादण्डेन सुव्रत !
सहमस्तकपर्यन्तं सुषुम्ना सुप्रतिष्ठिता॥ १०॥

इत्युक्त्यनुसारेण संस्थितिं भजते। एतत्सर्वदर्शनोपनिषदश्चतुर्थखण्डे प्रतिपादितम्। क्वचित्तु दश एव नाड्यः प्रधानरूपेण संख्याताः।

प्रधानानां चतुर्दशनाडीनां सम्बन्धः—

सुषुम्नामभितः समुत्पन्ना अधश्चोर्ध्वं प्रसृतानां नाडीनामङ्गैः सह सम्बन्धो विद्यते। इडा सव्यनासान्तम्, पिङ्गला च दक्षिणनासान्तम्, यशस्विनी वामपादांगुष्ठान्तम्, हस्तिजिह्वा च सव्यपादांगुष्ठान्तं संस्थिताः। पूषा पिङ्गलायाः पृष्ठभागमाश्रित्य वामाक्षिपर्यन्ता, गान्धारी सव्यनेत्रान्ता, पयस्विनी वामकर्णप्रान्तस्था, शङ्खिनी सव्यकर्णान्तं प्रसृता। सरस्वती नाडी ऊर्ध्वगा जिह्वान्तञ्च प्रतिष्ठिता। विश्वोदराभिधा नाडी तु कन्दमध्ये[1] संस्थिता। ध्वनितत्त्वविषये तु

---

१. दर्शनोपनिषदश्चतुर्थखण्डे एतदीयोंऽशो द्रष्टव्यः।

इडा, पिङ्गला, सुषुम्ना, कुण्डली आधारसंस्थिता योनिश्च–एताः प्रयोजनीभूताः। सुषुम्नापार्श्वे संस्थिता जिह्वान्तःस्थितया च सरस्वत्या नाड्या कुण्डलीस्थितान् वर्णान् सुषुम्नामार्गेण आकृष्य, सरस्वतीनाडी संसक्तजिह्वा कण्ठताल्वादिस्थानेषु स्पृष्टादिप्रयत्नैः ब्रह्मरन्ध्रात् तालुमार्गेण कण्ठस्थितं विशुद्धिचक्रमानयति, ततश्च वर्णाः श्रूयन्ते।

## कुण्डल्याः स्वरूपं स्थानञ्च

सुषुम्नामध्ये कुण्डलीशक्तिः प्रतिष्ठितेति पूर्वमेव प्रतिपादितम्। सा च इच्छाज्ञानक्रियारूपा मूलाधारस्थेन वह्निना पवनेन च सन्तप्ता सुषुम्नावदनान्तरे स्वशरीरं प्रसार्य ब्रह्मविष्ण्वादिग्रन्थिं भ्रुवोर्मध्यञ्च भित्त्वा अनाहताख्यं यच्चक्रं, तत्र शीतांशुसञ्जातं द्रवं पिबति। विषमेषु बहिःष्ठं चित्तं स्वस्थं सञ्जायते। आत्मरतश्च सन् योगी युवा भवति[1]। विवक्षायाञ्च सा कुण्डलिनी सुषुम्नामार्गेण वर्णान् सृजति। यत्र कुण्डलिनी शक्तिः प्रतिष्ठिता, तस्मात् स्थानाद् बिन्दुनादहंसाश्च समुत्पद्यन्ते। तच्च स्थानमाधाराख्यमेव। मूलाधारस्थं योनिस्थं स्वायम्भुवं लिङ्गं मालाकारेण संवेष्ट्य लिङ्गच्छिद्रञ्च स्वफणाग्रेण ( यद्वा वक्त्रेण ) सञ्छाद्य कुण्डलिनी संस्थिता। यतो हि लिङ्मध्ये वह्निरूपं महत्तेजो विद्यते। अल्पेनापि वायुयोगेन ब्रह्माण्डो दग्धुं शक्यते। अतः सा लिङ्गच्छिद्रं मुखेनाच्छाद्य संस्थिता। उक्तञ्च तोडलतन्त्रे—

लिङ्गमध्ये महत्तेजो वह्निरूपञ्च सुन्दरि ॥ २० ॥
यत् किञ्चिद् वायुयोगेन ब्रह्माण्डो दह्यते यतः।
अतः कुण्डलिनी देवी मुखेनाच्छाद्य संस्थिता ॥ २१ ॥ इति।

लिङ्गच्छिद्रस्याच्छादनादेव च इडापिङ्गलयोः वायुर्वर्तते, मध्ये वह्निरूपं महत्तेजश्च। यत्किञ्चिद् वायुयोगे सति भस्मसाद् भवेत्। अत एव सा कुण्डली स्वमुखेन मूलाधारस्थयोनिस्थितलिङ्गच्छिद्रं समाकृष्य आच्छाद्य च संस्थिता। इयञ्च कुण्डलरूपिका कुण्डलिनी शक्तिः अकारादिपञ्चाशद्वर्णविभूषिता।

उक्तञ्चैतत् तोडलतन्त्रस्य नवमे पटले—

मूलचक्राच्छिरोऽन्ता च सुषुम्ना परिकीर्तिता।
तद्गर्भस्था च या शक्तिः, सा देवी कुण्डरूपिका ॥ १३ ॥
सदा कुण्डलिनी देवी पञ्चाशद्वर्णभूषिता। इति।

तत्र पञ्चाशद् वर्णाः अहमिति प्रत्याहाररूपेण संहृताः। अत एव अहमपि

---

१. योगकुण्डल्युपनिषदः प्रथमाध्याये ६७तमश्लोकतः ७३तमश्लोकपर्यन्तमेतदीयोंऽशो द्रष्टव्यः।

परावाग् उच्यते। वक्तुरिच्छया मूलाधारस्थ वाय्वग्निभ्यां तस्यां चेष्टा जायते। चेष्टमाना च सा कुण्डलिनी विवक्षितं वर्णं सुषुम्नारन्ध्रमार्गेण मुखमासाद्य अभिव्यनक्ति। यथा ध्वन्यभिलेखनयन्त्रे ये ध्वनयः अङ्किताः, त एव विद्युति प्राप्तपरिपाकाः तदयन्त्रस्थध्वन्युत्तेजकयन्त्रेण उच्चैरभिव्यज्यन्ते, ये च न अङ्कितास्ते न श्रूयन्ते। एवं वक्तुरिच्छया मूलाधारस्थहृदयादिस्थितवह्निना प्राप्तपरिकान् वर्णान् सरस्वती नाडी सम्बद्धजिह्वा तालुमार्गेण आकृष्य वैखरीरूपतामापादयति।

**३. प्रतिश्रुत्कवादः**

अकारादिध्वनेरभिव्यक्तिविषये तृतीयं मतं प्रतिश्रुत्कवादनाम्ना प्रसिद्धम्। प्रथमं कण्ठोरसोर्मध्यदेशे अकारादिध्वनेरभिव्यक्तिर्जायते। अन्तःकरणाभिव्यक्तस्य अकारादिध्वनेः कण्ठताल्वादिस्थानेषु प्रतिश्रुत्कानि भवन्ति, तानि प्रतिश्रुत्कान्येव वैखरीनाम्ना प्रसिद्धानि। विवक्षायामन्तःकरणे यो हि शब्दोऽभिव्यक्तः, स कण्ठादिस्थानेऽभ्यस्तस्य प्रतिश्रुत्कान्येव श्रोत्रेण श्रूयते, न तु हृद्देशाभिव्यक्तो मुख्यः शब्दः। स तु स्वदेश एव तिष्ठति। उक्तञ्च तैत्तिरीयप्रातिशाख्ये द्वितीयाध्याये—

वायुशरीरसमीरणात् कण्ठोरसोः सन्धाने ॥ २ ॥
तस्य प्रतिश्रुत्कानि भवन्त्युरः कण्ठः शिरो मुखं नासिके ॥३॥ इति।

अत्र प्रतिश्रुत्कपदस्य प्रतिबिम्बार्थः।

उक्तञ्च श्रीतन्त्रालोकस्य तृतीयाह्निके—

इत्थं प्रदर्शितोऽमुत्र प्रतिबिम्बनवर्त्मनि।
शब्दस्य प्रतिबिम्बं यत् प्रतिश्रुत्केति भण्यते ॥ २४ ॥ इति।

यथा दर्पणादौ रूपादेः प्रतिबिम्बं दृश्यते, तथैव शब्दस्यापि ताल्वादिदेशावच्छिन्नाकाशे प्रतिबिम्बं श्रोत्रेण श्रूयते। यथा रूपस्य प्रतिच्छाया प्रतिरूपमित्युच्यते, तथैव अकारादिध्वनेरपि प्रतिबिम्बं प्रतिध्वनीत्युच्यते। हृद्देशेऽभिव्यक्तस्य शब्दस्यायं प्रतिश्रुत्को न शब्दजो, न पुनः संयोगजो विभागजो वा। स्वत एव समुत्पन्नत्वाद् अयं मुख्यः शब्दः। स च अस्माकं मुखाद् गच्छन्नेव प्रतीयते। न तु वस्तुतः शब्दः स्वाभिव्यक्तिस्थानात् प्रचलति, अकारादिध्वनेः कूटस्थत्वात्। प्रतिश्रुत्कः पुनस्तेनैव वक्त्रा तत्समीपदेशस्थैर्वा आद्य एव शब्दस्तीव्रतमप्रायः श्रूयते, न पुनरन्त्यो मन्दतमप्रायः। दूरदेशवर्तिभिः पुनरन्त्यो न त्वाद्यः। प्रतिबिम्बस्य ग्रहणम् आभिमुख्येन प्रवर्तमानत्वे सत्येव भवति। अतो गह्वर-गुहाप्रायदेशस्थैः श्रोतृभिर्न श्रूयते, आभिमुख्येन शब्दप्रतिश्रुत्कायाः प्रवर्तमानत्वाभावात्। यथा भूमेरुत्खननात् पूर्वमेव जलमस्त्येव, तच्च भूमिविदारणानन्तरं कूपे दृश्यते। एवं कंठोरसोः सन्धिदेशे वायोः शरीरे समीरणे सति अर्थात् वायौ चेष्टायां सत्यां हृद्देश एव अकारादिध्वनेरभिव्यक्तिः। हृद्देशेऽभिव्यक्तः शब्दस्ताल्वादिषु प्रतिध्वन्यते।

तैत्तिरीयप्रातिशाख्यमतानुसारेण कण्ठोरसोः सन्धाने एव वायुसमीरणाद् शब्दाभिव्यक्तिः। सर्वत्र विद्यमानोऽपि ध्वनिः अनभिव्यक्तः। स न क्वचित् प्रतिबिम्बति। यथा दर्पणादौ मुख्यस्य प्रतिबिम्बम्, तथा अस्य मुख्यस्य शब्दस्यापि नभसि।

अथेदानीमियमाशङ्का जागर्ति—यथा बिम्बं कस्मिंश्चिद् अधिकरणे स्थितं सदेव दर्पणादौ प्रतिबिम्बति। बिम्बम्, बिम्बाधारः, दर्पणम्,प्रतिबिम्बञ्चेति चतुष्टयमपेक्ष्यते। अत्र शब्द एव बिम्बम्, आकाशञ्च दर्पणम्। तत्र शब्दश्च प्रतिबिम्बतामेति। परन्त्वत्र शब्दात्मकबिम्बस्याधारः कः? इति चेदत्रोच्यते—सानन्दं नभ एव बिम्बाधारभूतम्। तथा च हृद्देशावच्छिन्नं नभश्चिदानन्दमयम्, तदेव शब्दस्याधारः। कण्ठताल्वाद्यवच्छिन्नं नभश्च भौतिकमाकाशम्, तदेव दर्पणम्। तस्मिंश्च प्रतिबिम्बनमिति बोद्धव्यम्। उक्तञ्च श्रीतन्त्रालोकस्य तृतीयाह्निके—

शब्दो नभसि सानन्दे स्पर्शधामनि सुन्दरः।
स्पर्शोऽन्योऽपि दृढाघातशूलशीतादिकोद्भवः॥
परस्थः प्रतिबिम्बत्वात् स्वदेहोद्धूलनाकरः॥ ३६॥ इति।

'परस्थः' इत्यस्य परस्मिन् नभसि स्थित इत्यर्थः। 'स्वदेहोद्धूलनाकरः' सुखदुःखयोरनुभवे समानम्। वस्तुतस्तु न केवलं हृद्देशावच्छिन्नम् आकाशमेव, अपि तु मूलाधारनाभिहृदयेति स्थानत्रयावच्छिन्नमपि। आकाशदेशस्थः शब्दः स्वदेशेऽभिव्यक्तः सन् सर्वविधाकाशे प्रतिबिम्बति। यत्र देशे शब्दोऽभिव्यक्तः, स तस्याभिव्यक्तेराधारः। तत्संस्पृष्टं तदतिरिक्तञ्च आकाशं दर्पणस्थानापन्नम्। तेन 'श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशस्थः शब्दः' (पा० सू० १) इति पातञ्जलमहाभाष्यस्थवाक्येन सह प्रतिश्रुत्कवादस्य न विरोधः। प्रथमक्षणे हृद्देशावच्छिन्न आकाशे वायुसमीरणाच्छब्दाभिव्यक्तिः, द्वितीयक्षणे च कण्ठताल्वादिस्थानेषु हृद्देशावच्छिन्ने आकाशे अभिव्यक्तः शब्दः प्रतिबिम्बतामश्नुवानः श्रूयते। न च शब्दाभिव्यक्तेः क्षणिकत्वात् तस्य प्रतिबिम्बनं न रूपप्रतिबिम्बवद् इति वाच्यम्, रूपप्रतिबिम्बकालेऽपि रूपबिम्बस्य प्रतीतेरिति वाच्यम्? रूपप्रतिबिम्बप्रतीतकालेऽपि बिम्बस्य प्रतीत्यभावात्, शब्दरूपयोः प्रतिबिम्बयोस्तुल्यत्वात्। तत्रापि न प्रतिबिम्बप्रतीतिकाले मुखादिबिम्बस्य प्रतीतिः, युगपत्प्रतीतिद्वयोरुदयासम्भवात्।

वस्तुतस्तु यस्मिन् क्षणे शब्दाभिव्यक्तिस्तस्मिन्नेव क्षणे प्रतिबिम्बनमिति शब्दोऽभिव्यक्तः सन्नेव प्रतिबिम्बति। तथापि प्रतिबिम्बप्रतीतिकाले न बिम्बप्रतीतिः। यस्मिन् क्षणे बिम्बप्रतीतिः, न तस्मिन् क्षणे प्रतिबिम्बप्रतीतिरिति बिम्बप्रतिबिम्बयोः प्रतीतिक्षण एव भेदः। अभिव्यक्तिः प्रतिबिम्बनञ्च अव्यवहितकाल एवेति बोद्धव्यम्। एतत्सर्वं ध्वनिसञ्चारविधिनिरूपणावसरे विशदरूपेण व्याख्यास्यते। तत्र एतदीयोंऽशो द्रष्टव्यः।

प्रतिबिम्बलक्षणं च तन्त्रालोकस्य तृतीयाह्निके प्रोक्तम्—

स्वरूपापरिहानेन पररूपसदृक्षताम् ।
प्रतिबिम्बतामाहुः खड्गादर्शतलादिवत् ॥ ५४ ॥ इति ।

यथा दर्पणं स्वस्वरूपमपरित्यज्यैव परस्य मुखादेः सदृक्षतां भजति, तथैव आकाशं स्वरूपापरिहानेनैव अर्थात् स्वरूपे स्थितं सदैव अभिव्यक्तस्य शब्दस्य यत्सादृश्यं भवति, तदेव प्रतिबिम्बनम्; न तु स्वरूपापरिहानेन दर्पणादेः मुखादि-रूपासादनं प्रतिबिम्बमुच्यते; तादृशक्रियाया असम्भवात् । मुखादितद्रूपासादने तु दर्पणादेरनेकरूपापत्तिः स्यात् । अत्र प्रतिबिम्बलक्षणे कस्यापि प्रतिपत्तिर्नास्ति ।

## ४. वायुः

केचिद् वायुमेव ध्वनेरुपादानं कारणं मन्यन्ते । शिक्षाप्रातिशाख्यादिग्रन्थाः वायवीयत्वमेव शब्दानां स्वीकुर्वन्ति । तदुक्तं शुक्लयजुःप्रातिशाख्यस्य प्रथमाध्याये-

वायुः खात् ॥ सू० १ ॥

शब्दस्तत् ॥ सू० २ ॥

हृद्देशावच्छिन्नाद् आकाशाद् वायुः समुत्पद्यते । स वायुरेव शब्दात्मानं भजति । न च वायोः ध्वन्युत्पादनत्वस्वीकारे वायोश्च सततं सर्वत्र व्यापकत्वात् सर्वदा सर्वत्र शब्दोपलब्धिः स्यादिति वाच्यम्; सम्यक्करणैरुपहितस्य हृदि वेणु-शङ्खादिभिः शब्दाविर्भावस्य स्वीकारात् । वायौ ध्वनिरूपताधाने शक्तिर्विद्यते । उक्तञ्च शुक्लयजुःप्रतिशाख्यस्य 'तेषां समूहात् स उदयंस्त्रैकाल्यम्' ( अ० १, सू० १५ ) इत्यादिसूत्रस्य भाष्ये—'वायोरियं विभूतिर्या त्रयी विद्या' इति । तैत्तिरीय-प्रातिशाख्यं तु वायुं शब्दाभिव्यक्तौ साधनीभूतं मन्यते । ब्रह्मव्यपदेशभाक्तं विभुमे-कमनादिनिधनं शब्दञ्च सर्ववर्णानां प्रकृतिमापादयति । उक्तञ्च—

'शब्दः प्रकृतिः सर्ववर्णानाम् ।' इति ।

एवं तैत्तिरीययजुःप्रातिशाख्ययोर्मतभेदो दृष्टिपथं समायाति । ऋक्प्राति-शाख्यमपि वायुमेव शब्दात्मानं स्वीकरोति । तदुक्तम्—

प्राणो वायुः ॥ ( ऋ० प्रा०, अ० १३, सू० १ )

वायोः शब्दत्वापत्ति स्वीकुर्वतां शिक्षाप्रातिशाख्यकाराणां निकाये या वर्णा-भिव्यक्तिप्रक्रिया दृष्टिपथं समायाति, तया सह भौतिकविज्ञानविदुषां सम्प्रदाये व्यवहृताया अकारादिवर्णाभिव्यक्तिप्रक्रियायाः किञ्चित् सामञ्जस्यं परिलक्ष्यते । अकारादिध्वनिं वायोः परिणामभूतं मन्यमानानां मतानुसारेण वक्तुर्घटपटादि-शब्दोच्चारणेच्छया हृदि सञ्जातेन प्रयत्नेन समुदीरितः प्राणवायुः कण्ठताल्वादि-स्थानेष्वभिहतः सन् शब्दरूपेण परिणमते ।

तथा चोक्तं श्रीभर्तृहरिकृते वाक्यपदीये ब्रह्मकाण्डे—

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥ १०८ ॥ इति ।

वायुर्वर्णानामुपादानं कारणमित्यस्यास्तात्पर्यम् ।

जीवादिवैज्ञानिकास्तु 'प्राणवायोः कण्ठस्थितेन स्वरतन्तुना सह यदा आघातः सञ्जायते, तदा अकारादिवर्णानामभिव्यक्तिः' इत्येवं मन्यन्ते । एतेषां मतानुसारेण 'अकारादिवर्णाः कण्ठताल्वादिस्थानेषु स्वरतन्तौ च प्राणवायोराघातेन जन्याः' इति स्वीकाराद् वायुर्वर्णानां निमित्तं कारणम्, न तूपादानम् । परन्तूभयोर्मतयोः वर्णाभिव्यक्तिप्रक्रियायां कण्ठादिस्थानेषु वायुसंयोगस्यान्वयव्यतिरेकाभ्यां वर्णानामभिव्यक्तेश्च दर्शनात् सामञ्जस्यमपि समायाति । शब्दकार्यवादिभिः नैयायिकैः सह तु एतेषामाधुनिकानां वर्णाभिव्यक्तिप्रक्रियाविषये सामञ्जस्यं परिलक्ष्यते; यतो ह्येते नैयायिका अपि वायुं वर्णस्य निमित्तं कारणं मन्यन्ते, न तूपादानम् ।

तदुक्तं वाक्यपदीये ब्रह्मकाण्डे—

यः संयोगविभागाभ्यां करणैरुपजन्यते ।
स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः ॥ १०२ ॥ इति ।

करणैः=कण्ठताल्वादिभिः सह वायोः संयोगविभागाभ्यां य उपजन्यते स स्फोटः । अत्र स्फुटतया वायुर्वर्णस्य निमित्तं कारणं प्रतीयते । वर्णविवक्षया प्राणवायुर्यदा कण्ठादिस्थानमभिहन्ति, तदा अकारादिवर्णा अभिव्यज्यन्ते ।

वस्तुतस्तु भौतिकैः स्वरतन्तौ वायुसङ्घाताद् वर्णाभिव्यक्तौ या प्रक्रिया प्रतिपादिता, ततोऽन्यत्र ध्वनेः पुनरुत्पादनस्थले[1] या प्रक्रिया दृश्यते, तत्र वर्णाभिव्यक्तौ वायोरुपादानत्वं दृश्यते[2] । ध्वनिलेखनयन्त्रे (फोनोग्राफीत्यभिधेय) ध्वनिपेटिकोपरि[3] संस्थापिते मण्डलके[4] बह्व्यो रेखा अङ्किता भवन्ति । तत्र प्रत्येकं

---

१. इन टू द ग्रामोफोन ।

२. "ध्वनि का पुनरुत्पादन—ध्वनि के पुनरुत्पादन के लिये ऊर्जा कसी हुई कमानी से प्राप्त होती है जिसके कारण रिकार्ड निश्चित रूप से घूमता है । नलियों में कटे वक्र रूप से सूर्य में कंपन होता है । यह कम्पन तनुपट पर पहुँचकर वायु में उसी प्रकार की तरंगें उत्पादित करता है और इस प्रकार ध्वनि पुनरुत्पादित होती है" । ( के० पी० घो० कृत माध्यमिक भौतिक, भाग २, पृ० ६३ ) ।

३. On the sound Box.

४. On the Record.

रेखासु ध्वन्यनुरूपा वक्राकृतिका नदीपर्वतोपत्यकादिवद् उच्चावचगर्ता निर्मीयन्ते। ध्वनिपेटिकायां वायुं प्रपूर्य मण्डलकोपरि ध्वनिपेटिकासंश्लिष्टां सूचिकाञ्च सन्निधाप्य ततो मण्डलकं यन्त्रद्वारा परितो भ्राम्यति। मण्डलकस्य परिभ्रामणेन तत्संश्लिष्टसूचिकायां उच्चावचध्वनिगर्तानुरूपं कम्पनं जायते। ध्वनिगर्तानुरूपपरिकम्पिता सूचिका च क्रमशः स्वकम्पनानुरूपं वायुं कम्पयति। ध्वन्यनुरूपपरिकम्पितश्च वायुर्वर्णात्मना परिणतः सन् ध्वन्यभिलेखनयन्त्रस्थं ध्वन्युत्तेजकं यन्त्रं[1] प्राप्य उच्चावचध्वन्यात्मना तारस्वरेण सर्वैः श्रूयते। अत्र ध्वन्यभिव्यक्तौ सूचिका निमित्तं कारणम्। वायुश्चोपादानम्। एवं रीत्या अन्तःकरणेऽपि वक्ता यं शब्दं प्रयोक्तुमिच्छति, तच्छब्दानुसारि प्रयत्नं कुरुते। येन क्रमेण वक्तुरिच्छानुवर्ती प्रयत्नः सञ्जायते, तेनैव क्रमेण स्थानेष्वभिहते वायावपि शब्दाकृतिकः परिणामः सञ्जायते।

तदुक्तं वाक्यपदीये ब्रह्मकाण्डे—

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते॥ इति।

अस्यां प्रक्रियायां वायोरुपादानत्वं स्पष्टतया प्रतीयते।

### ५. अणुवादः

"परमाणुपरिणामः शब्दः" इत्यार्हताः स्वीकुर्वन्ति। श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डे 'वायोरणूनां ज्ञानस्य' इत्यस्यां कारिकायामस्य वादस्य चर्चा जाता। अणूनां शब्दतन्मात्रादिरूपपरमाणूनां परिणामविशेषः शब्दः। आर्हता एकरूपेभ्यः परमाणुभ्यः पृथ्व्यादितत्त्वानाम् अथ च शब्दादितन्मात्राणां समुत्पत्तिं मन्यन्ते। एकरूपेषु परमाणुषु एतादृशी शक्तिर्विद्यते यतः सर्वाणि वस्तूनि समुत्पद्यन्ते। उक्तञ्च श्रीभर्तृहरिकृत-वाक्यपदीयस्य ब्रह्मकाण्डे—

अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः।
छायातपतमःशब्दभावेन परिणामिनः॥ १११॥ इति।

अणवः=परमाणव एव, सर्वशक्तिमत्त्वाद्, भेदश्च संसर्गश्च भेदसंसर्गौ तद्रूपा वृत्तिः=व्यापारो येषां तादृशा इत्यर्थः। परमाणूनां विलक्षणसम्बन्धाद् विभिन्नकार्योत्पत्तिः। यथैकरूपेभ्य एव पार्थिवादिपरमाणुभ्यः विलक्षणसम्बन्धवशाद् विलक्षणपाकवशाच्च नानापार्थिववस्तूनामुत्पत्तिः, एवं तत्तत्परमाणूनामेव

---

१. Micro phone.

Notice–Gramophon–An instrument for recording and producing the living voice.

विलक्षणसम्बन्धवशाद् छायातपतमःशब्दरूपाः परिणामभेदाः। यद्यपि ते परमाणवः शब्दत्वापत्तिशक्तियुताः, तथापि प्रयत्नेनैव संह्रियमाणाः शब्दस्वरूपतां प्रतिपद्यन्ते।

उक्तञ्च वाक्यपदीयस्य ब्रह्मकाण्डे—

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः॥ ११२॥ इति।

प्रयत्नेन = अर्थबोधनेच्छया जातेन प्रयत्नेन, समीरिताः = प्रेरिताः, शब्दाख्याः = शब्दपरिणामत्वाच्छब्दः इत्याख्याताः शब्दतन्मात्ररूपाः परमाणवः, स्वशक्तौ = शब्दाद्याकारपरिणमनशक्तौ व्यज्यमानायां सत्याम्, अभ्राणीव = वर्षाकाले मेघपरमाणव इव, प्रचीयन्ते = सङ्घीभवन्तीत्यर्थः। शब्दत्वापत्तिशक्तियुक्तानां परमाणूनां शब्दत्वापत्तिः प्रयोक्तृप्रयत्नेन संह्रियमाणक्रियायां सत्यामेव जायते इति न सर्वदा शब्दभावेन परिणामः। यद्यप्येते परमाणवो जडास्तथापि पुरुषप्रयत्नेन शब्दीभवन्ति।

तत्र वैयाकरणलघुसिद्धान्तमञ्जूषायां नागेशेन—"वायोरणूनां ज्ञानस्य" इत्यत्र अणूनामित्यस्य शब्दतन्मात्रपरमाणूनामित्यर्थः कृतः। तेनेदं मतमार्हतानामिति स्वीकृतम्। वस्तुतस्तु शब्दस्य यत्सूक्ष्मं स्वरूपम्, तदपि अणुशब्देन व्यवह्रियते। उक्तञ्च सारस्वतशास्त्रे ( श्रीशिवमहिम्नस्तोत्रे )—

त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरान्,
अकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः,
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्॥ २७॥

हे शरणद ! तीर्णविकृति = समस्तविकाररहितम्, ओमिति पदम्, त्रिभिः = अकाराद्यैर्वर्णैः, त्रयीम् = वेदत्रयीम्, तिस्रो वृत्तीः = सद्रजस्तमोमयी वृत्तीः, त्रिभुवनम् = भूपातालनाकपृष्ठलोकम्, अभिदधत् = धारयत्। अवरुन्धानम् = निरावरणम्, तुरीयं तव स्वरूपं तु, अणुभिः = सूक्ष्मध्वनिभिः, गृणाति = स्तौति। अत्र स्तोत्रे अणुभिः ध्वनिभिरित्युक्तम्। प्रणवे यो बिन्दुनिष्ठो नादः स एवात्र अणुध्वनिशब्देन व्यवहृतः।

अयमेव ध्वनिः करणव्यापारेण प्रचीयमानः स्थूलः सन् विवर्तमान इव गृह्यते। अनेन 'वायोरणूनां ज्ञानस्य' इत्यत्र अणूनामित्ययं पक्षः वैयाकरणानामेव प्रतिभाति, न तु आर्हतानाम्। बहुषु स्थलेषु वाक्यपदीयादिटीकायाम्—"अविक्रियाधर्मकं हि शब्दतत्त्वं ध्वनिं विक्रियाधर्माणमनु विक्रियते, तच्च सूक्ष्मे व्यापिनि ध्वनौ करणव्यापारेण प्रचीयमाने स्थूलेन अभ्रसङ्घातवद् उपलभ्यमानेन नादात्मना प्राप्तविवर्तेन तद् विवर्तानुकारेण अत्यन्तमविवर्तमानमिव गृह्यते'—इत्यादि-

सन्दर्भेषु 'शब्दतत्त्वस्य ध्वनौ विकृते सति अभ्रसमूह इव प्रचीयमाने नादात्मना विवृते विवर्तमानत्वमिव गृह्यते'—इत्याद्युक्तिभिरणूनां शब्दत्वापत्तिवादो वैयाकरणयाज्ञवल्क्यशिक्षासारस्वतशास्त्रसम्मत एवेति बोद्धव्यम्[१] । याज्ञवल्क्यशिक्षायामपि अकारादिध्वनेर्यत् सूक्ष्मातिसूक्ष्मं स्वरूपम्, तद् अणुपदेन व्यवह्रियते । उक्तञ्च तत्र अणूनां स्वरूपम्—

सूर्यरश्मिप्रतीकाशात् कणिका यत्र दृश्यते ।
अणुत्वस्य तु सा मात्रा बोद्धया च चतुराणवा ॥ ११ ॥
( याज्ञवल्क्यशिक्षा )

सूर्यरश्मिप्रतीकाशात्=यत्र ( गवाक्षप्रविष्टस्य ) सूर्यरश्मिप्रतीकाशः प्रकाशस्तं प्राप्येति ल्यब्लोपपञ्चमी अत्र बोद्धया । तत्र यत्सूक्ष्मं रजो दृश्यते, सा अणुत्वस्य मात्रा बोद्धया । अयमाशयः—यथा 'निमेषो मात्राकालः'—इत्यत्र निमेषपदेन अक्षिस्पन्दनकालो लक्ष्यते, तथाऽत्रापि कणिका-पदेन गवाक्षप्रविष्टसूर्यकिरणसम्पर्कात् परिदृश्यमानसूक्ष्मरजःकणिकास्पन्दनकालो बोद्धव्यः । तेन अत्र अणुशब्देन वैशेषिक-पौराणिकाणुपदार्थौ, 'तस्य षष्ठतमो भागः', 'तस्य त्रिंशत्तमो भागः'—इत्याद्यात्मकौ न ग्राह्यौ । वस्तुतस्तु अत्र अणुशब्देन गवाक्षप्रविष्टसूर्यकिरणपरिदृश्यमानाणुः, तस्य स्पन्दनं वा न गृह्यते, अपितु गवाक्षप्रविष्टसूर्यकिरणपरिस्फुरदणुस्पन्दनजन्यः सूक्ष्मो ध्वनिः गृह्यते । चतुराणवा=अणोरिमानि परिमाणानि आणवानि, चत्वारि आणवानि यस्यां सा चतुराणवा मात्रा भवति ।

एतदेव याज्ञवल्क्यशिक्षायां स्वरप्रकरणे स्पष्टीचकार—

मानसे चाणवं विद्यात्, कण्ठे विद्याद् द्विराणवम् ।
त्रिराणवं तु जिह्वाग्रे, निःसृतं मात्रिकं विदुः ॥१२॥ इति ।

विवक्षायां सत्यां वर्णो यदा मनसि समागच्छति, तदा आणवम्=अणुपरिमाणमितम्, एकाणुस्पन्दनसदृशं सूक्ष्मं जानीयात् । कण्ठं समागतं द्विराणवम्, जिह्वाग्रे निःसृतश्च त्रिराणवम्, निःसृतम्=मुखाद्बहिर्निःसृतं वर्णमात्रिकम् चतुराणवं विदुः । तथा च परा=गवाक्षप्रविष्टसूर्यकिरणैः परिस्फुरदणुस्पन्दनजन्यध्वनितुल्या पश्यन्ती द्विराणवा, मध्यमा त्रिराणवा, वैखरी चतुराणवा इत्यर्थः । अत्र सर्वत्र 'द्विराणवा' इत्यादिपदेन 'गवाक्षे सूर्यप्रकाशस्थितद्वयणुस्पन्दनसदृशः—इत्येवमर्थो ग्राह्यः[२] ।

---

१. श्रीरामाज्ञापाण्डेयविरचितायां व्याकरणदर्शनपीठिकायां २४तमे पृष्ठे एतदीयोंऽशो द्रष्टव्यः ।

२. याज्ञवल्क्यशिक्षायां "मानसे चाणवम्" ( १२ )—इत्यत्र स्वरप्रकरणे शिक्षावल्लीविवृताख्यटीकायामेतदीयोंऽशो द्रष्टव्यः ।

एवमेव शुक्लयजुःप्रातिशाख्येऽपि सूक्ष्मातिसूक्ष्मो ध्वनिरणुपदेन व्यवहृतः। तथा च श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डे 'वायोरणूनां ज्ञानस्य'— इत्यत्र अणूनामित्यनेन आर्हतानां मतं न प्रतिपादितम्, अपि तु याज्ञवल्क्यशिक्षादीनाम्— इति निश्चप्रचं जातम्।

६. ज्ञानवादः

ज्ञानमेव विवक्षाधीनतां स्वीकृत्य ध्वन्यात्मना विवर्तते। पूर्वोक्ता सर्वा प्रक्रिया वैखर्यामेव शब्दस्येयत्तां जानतां स्थूलदृशां सरणिमनुसरति। शब्दस्य सूक्ष्मातिसूक्ष्मं स्वरूपं साक्षात्कुर्वतां मनीषिणां वर्णाभिव्यक्तेर्विलक्षणा प्रक्रिया दृश्यते। सूक्ष्मवाक्स्वरूपं ज्ञानमेव अकारादिध्वन्यात्मना आविर्भवतीति तेषां राद्धान्तः। तदुक्तं वाक्यपदीये ब्रह्मकाण्डे—

अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥ ११२ ॥ इति।

सूक्ष्मवागात्मना स्थितस्य ज्ञानस्य कथं कादिध्वन्यात्मना विवर्तनम्? इतीमं विषयं समवगन्तुं शरीराद् बहिर्देशे भौतिकवैज्ञानिकैः प्रतिपादितः प्रक्रियात्मको विद्युद्-ध्वन्योः परस्परं परिवर्तनस्य विधिः समवगन्तव्यः। ततः सूक्ष्मवागात्मज्ञानस्य तेजसा पाके निष्पन्ने सति स्थूलध्वन्यात्मना निष्पत्तिः समवगन्तुं पार्यते।

भौतिकवैज्ञानिकैः अकारादिध्वनावूर्जः स्वीक्रियते। ऊर्जसो लक्षणञ्च 'गुरुत्वकाठिन्ययोरभाववत्त्वे सति पदार्थानां स्थानान्तररूपान्तरप्रयोजकत्वम्' इति। यथा सौरप्रकाशः, विद्युद्, अग्निरिति। अस्मत्प्रकोष्ठे यः सौरादिप्रकाशस्तमोऽपनोदादिकार्येषु प्रयुज्यते, तस्मिन् भारवत्त्वं काठिन्यञ्च नानुभूयेते, केवलं तापमात्रं तण्डुलादिद्रव्येषु च विक्लित्यादीनां जनकत्वं प्रत्यक्षीक्रियते। न च ध्वनौ केवलमभारवत्त्वस्य निर्गतकाठिन्यस्य च प्रतीतेर्द्रव्यं स्थानान्तरितं रूपान्तरञ्च कर्तुं शक्तेरभावस्य सत्त्वाद् ध्वनावूर्जोलक्षणस्याव्याप्तिदोषापत्तिः, तेन ध्वनेरूर्जस्त्वं न सिद्ध्यतीति वाच्यम्; विषापहरणादिषु शब्दशक्तेरनुभवात्। नूतना भौतिकशास्त्रिणो ध्वनिद्वारा रासायनिकक्रियया द्रव्याणि निर्मीयन्ते, विषापनोदादिकार्येषु पराश्रव्यध्वनेरुपयोगं विधाय साफल्यं प्राप्ताश्च दृश्यन्ते[1]। ऐन्द्रजालिको मारणमोहनादिसामर्थ्यविशिष्टसावरादिमन्त्राणां प्रयोग-

---

१. "रासायनिक—

पोटैशियम आयोडाइट ( K I ) के घोल में या हाइड्रोजन सल्फाइट ($H^2S$) में पराश्रव्य ध्वनि का सञ्चार होने से इन यौगिकों में से I और S अलग हो जाते हैं। यह प्रक्रिया आक्सीकरण की है। पराश्रव्य ध्वनि से उलटी क्रिया भी होती है, जिसे लघुकरण या रिडक्सन कहते हैं। जैसे मर्क्यूरिक ( Murcuric chloride ) का मर्क्यूरस क्लोराइड ( Morcurous chloride ) में बदल जाना। ( पृ० २३२ )

कुशलो वा यं पदार्थं यथारूपं कर्तुं समीहते, तं तथा विदधाति। अग्नौ तमोपनोदादिसामर्थ्यंवद् विषापहरणादिषु नियतशक्तिकानां शब्दानां सामर्थ्यदर्शनाद् ध्वनेरूर्जस्त्वं समीचीनमेव।

अकारादिध्वन्यूर्जसो विद्युद्रूपेण, ध्वनिधर्मसमाविष्टविद्युतः ऊर्जसश्च ध्वनिरूपेण परिवर्तनं कर्तुं शक्यते। अयं विषयो ध्वनिविज्ञानादिग्रन्थेषु बहुशो व्याख्यातः[1]। यथा ध्वनिश्रावकयन्त्रस्योरःप्राचीरे यदा ध्वनिः समापतति, तदा

---

जैविक—पराश्रव्य ध्वनि से बहुतेरे रोगों के कारण वैक्टीरिया और वाइरस नष्ट हो जाते हैं। इसका उपयोग सामान्यतः पानी दूध आदि को रोग के जीवाणुओं से मुक्त करने में किया जाता है। पराश्रव्य ध्वनि वैक्टीरिया आदि से एन्जाइम, टोक्सिन ( विष ) आदि निकालने में भी सफल होती है जिसका प्रयोग उसे निरापद बनाकर रोगों के भावी आक्रमण से रक्षा में किया जाता है।" ( पृ० २३३ )

जो दो द्रव आपस में नहीं मिलते उन्हें मिलाकर इमल्सन तैयार करना पराश्रव्य ध्वनि का काम है"। ( पृ० २३४ )।

—श्री ललितकिशोरसिंहकृते ध्वनिविज्ञाने।

१. टेलीफोन—इस यन्त्र को ग्रेहमवेल ( Grehom Bell ) ने १८७६ में तैयार किया। इसमें एक स्थायी चुम्बक होता है, जिसके ध्रुवों के पास इस्पात का पतला डायफ्राम रहता है। डायफ्राम का व्यास लगभग २ इञ्च और मोटाई –.००६ और–.०१२ इञ्च के बीच होती है। इसका मध्यभाग दोनों ध्रुवों को छाये हुए, पर उनसे इतना दूर रहता है कि खिंच कर या कम्पन में यह ध्रुवों से सट न जाय, डायफ्राम की ओर दृढ़ता से कसी रहती है। चुम्बक के ध्रुवों के छोरों पर कुण्डली ( Coil ) लिपटी रहती है। डायफ्राम में तनाव रहता है और सामान्य स्थिति में चुम्बक की ओर थोड़ा खिंचा रहता है। चुम्बकीय क्षेत्र में होने से डायफ्राम होकर चुम्बकीय फ्लक्स निकलता है। फ्लक्स का घनत्व B हो तो डायफ्राम पर लगने वाला बल $B_2$ का अनुपाती होता है।

डायफ्राम जब ध्रुवों के पास जाता है या उनसे दूर हटता है, तो फ्लक्स भी बढ़ता-घटता है। फ्लक्स के परिवर्तन के अनुरूप ही ध्रुवों पर लिपटी हुई कुण्डली की विद्युद्-धारा में परिवर्तन होता है।

इसीलिये जब डायफ्राम पर ध्वनि पड़ने से वह कम्पन करता है, तो उसी के अनुरूप कुण्डली की धारा में दोलन होता है। इस रीति से ध्वनि की ऊर्जा विद्युद् की ऊर्जा में बदलती है। इसके विपरीत माइक्रोफोन के साथ जुटे हुए टेलीफोन की कुण्डली में धारा का दोलन होता है तो उसी के अनुरूप डायफ्राम में कम्पन होता है, जिससे ध्वनि उत्पन्न होती है।"—श्रीललितकिशोरसिंह, एम० एस० सी० कृते ध्वनिविज्ञान ग्रन्थे पृ० २३५–२३६।

इस्पातनिर्मितं सूक्ष्मतन्तुरूपम् उरसः प्राचीरमपि[1] ध्वन्यनुरूपं परिस्पन्दते। ध्वनिधर्मसमाविष्टमुरःप्राचीरञ्च त्वराकम्पनशीलनामकं[2] तत्त्वं स्वानुरूपं कम्पयति। परिस्पन्दमानं त्वराकम्पनशीलञ्च तत्त्वं ध्रुवसंलग्नं विद्युतः कुण्डलिनीं परितो धुनोति। कुण्डल्या विद्युद्धारायाश्च ध्वन्यनुरूपः परिस्पन्दः समुदेति, विद्युच्च च ध्वनिधर्मसमाविष्टा जायते। एवं ध्वन्यूर्जसो विद्युदूर्जोरूपेण परिवर्तनं निष्पद्यते।

यदा ध्वन्यनुरूपपरिस्पन्दमाना विद्युद्धारा ध्वनिश्रावकयन्त्रस्थं[3] ध्वन्युत्तेजकयन्त्रं लभते, तदा ध्वनिधर्मसमाविष्टाया विद्युद्धाराया ध्वनिरूपेण परिणामः सञ्जायते। इयमेव क्रिया विद्युदूर्जसो ध्वन्यूर्जोरूपेण परिणमननाम्ना प्रोच्यते। नूतनध्वनिविद्वद्भिः यथा शरीरान्तःप्रदेशे मूलाधारे अग्निवायुतत्त्वसमायुक्ता कुण्डलिनी विद्यते, तथैवात्रापि ध्वनिश्रावकाख्ये[4] भौतिके यन्त्रे विद्युत्-कुण्डलिनी संस्थिता भवति। तया कुण्डल्या एव अकारादिध्वनीनाँ समभिव्यक्तिः। यथाऽत्र यन्त्रे ध्वनिं विद्युद्रूपेण परिवर्त्य पुनस्तस्य ध्वन्यूर्जोरूपेण परिणतिः, एवं देहान्तरालेऽपि हृदि स्थितं सूक्ष्मवागात्मकं ज्ञानं विद्युति परिवर्त्य तद्रूपेण कण्ठादिस्थानेषु प्रेष्यते। कण्ठादिस्थानेषु च सूक्ष्मवाग्धर्मसंश्लिष्टाया विद्युतश्च कादिध्वनिरूपेण परिणामो निष्पद्यते। ततः श्रूयते—क इति, ख इति।

तथा चोक्तं वाक्यपदीयस्य ब्रह्मकाण्डे—

स मनोभावमापद्य तेजसा पाकमागतः।
वायुमाविशति प्राणमथासौ समुदीर्यते॥ ११३॥

अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते॥ ११४॥ इति।

अत्र तेजःपदेन कायाग्नेर्ग्रहणं कर्तव्यम्। कायाग्निमेवात्र विद्युत्स्थानापन्नं विजानीयात्, यतो हि प्रकाश-विद्युद् अग्नीत्यादयः सर्वे अग्नेरेव भेदाः, न तु तद्भिन्नाः। ज्ञानस्य एव शब्दरूपेण परिणामः, इत्येवं शाब्दिका मन्यन्ते। ज्ञानमप्यूर्जःशक्तिभेदः। सूक्ष्मशब्दस्वरूपेण स्थितं घटपटादिविषयकं ज्ञानं कम्बुग्रीवादिमद्रूपार्थे घटशब्दः प्रयोक्तव्यः, पटशब्दश्च न प्रयोक्तव्यः'—इत्येवं सङ्कल्पात्मकमनसा सह संयोगे सति तद्रूपेण परिणमते। 'स मनोभावमापद्य तेजसा पाकमागतः' इत्यस्येदमेव तात्पर्यं विद्यते। ज्ञानञ्च सूक्ष्मवाक्स्वरूपमेवेति सूक्ष्मवाग्ज्ञानयोर्नास्ति भेदः।

तथा चोक्तं वाक्यपदीयस्य ब्रह्मकाण्डे—

अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः। इति।

---

१. डायफ्राम। २. फ्लक्स। ३. टेलीफोन। ४. इनद्व द टेलीफोन।

सूक्ष्मशब्दस्वरूपाया घटपटादिविषयकज्ञाननिष्ठोर्जसोः मनोरूपेण परिवर्तने जाते सति मनोऽपि सूक्ष्मशब्दनिष्ठधर्मेण समाविष्टं जायते। सूक्ष्मशब्दनिष्ठधर्मसमाविष्टस्य मनसश्च कायाग्निना यदा सम्बन्धः सञ्जायते, तदा कायाग्नौ कम्पनं प्रादुर्भवति। यथा बहिःप्रदेशे दूरध्वनिप्रेषकयन्त्रे इस्पातनिर्मितेऽतीव सूक्ष्मे तन्तौ यदा ध्वनिः समापतति, तदाऽतिशयकम्पनशीलं तत्त्वं पुनः पुनः सङ्कुचति, विकसति च। अतिशयकम्पनशीलनामकतत्त्वस्य सङ्कोचविकासौ ध्वन्यनुरूपावेव भवतः। येन क्रमेण ध्वनिनाऽतिशयकम्पनशीलनामकं तत्त्वं परिकम्पते, तेनैव क्रमेण कुण्डलीनिष्ठविद्युद्धारायां परिकम्पनं जायते। एवं रीत्याऽन्तःकरणेऽपि विवक्षया सूक्ष्मशब्दसमाविष्टं सङ्कल्पविकल्पात्मकं मनस्तत्त्वं येन क्रमेण जठराग्निमभिहन्ति, तेनैव क्रमेण जठरनिष्ठविद्युति स्पन्दनं समुत्पद्यते। तेन सूक्ष्मध्वन्यूर्जसो विद्युद्-ऊर्जोरूपेण परिवर्तनं जायते। 'स मनोभावमापद्य तेजसा पाकमागतः' इति श्रीभर्तृहर्युक्तेरिदमेवोपर्युक्तं तात्पर्यं विद्यते। अन्तःकरणनिष्ठध्वनिधर्मसमाविष्टविद्युतस्तु कण्ठताल्वादिस्थानेषु अकारादिध्वनिरूपेण परिवर्तनं सञ्जायते।

सूक्ष्मवाग्धर्मसमाविष्टमनसा जठराग्नौ कम्पने जाते सति सूक्ष्मवाचस्तेजोरूपेण यदा परिवर्तनं जायते, तदा तैजसः शब्दः प्राणवायुमाध्यमेन ऊर्ध्वं समुत्तिष्ठति। अन्तःकरणनिष्ठसूक्ष्मध्वन्यनुरूपं परिकम्पितं तेजश्च वायुस्तद्धर्मेण ( मनोधर्मेण, दाहधर्मेण च ) समाविष्टः सन् ध्वनिग्राहकयन्त्रस्थानापन्नम् अनुनादकयन्त्रस्थानापन्नञ्च कण्ठताल्वादिस्थानं प्रापयति। 'वायुमाविशति प्राणमथासौ समुदीर्यते' इत्यस्येदमेवोपर्युक्तं तात्पर्यं वेदितव्यम्। कण्ठताल्वादिस्थानानि च वायुसाहाय्येन समागतं सूक्ष्मवाग्धर्मसमाविष्टेन मनसा क्रमशः प्रकम्पितं तेजस्तरङ्गमकारादिध्वनिरूपेण परिणतं सम्पादयन्ति। यद्वा—

अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते॥ ११५॥

इति भर्तृहर्युक्तेरनुसारेण अन्तःकरणतत्त्वस्याश्रयतां गतस्तद्धर्मेण, सूक्ष्मवाचा संश्लिष्टमनोधर्मेण, दाहधर्मेण च समाविष्टो वायुरेव ऊर्ध्वं कण्ठताल्वादिस्थानं गच्छति। कण्ठताल्वादिस्थानेष्वपि विद्युद् विद्यते। तत्तद्वर्णाभिव्यक्तिजनककण्ठताल्वादिस्थानानि च स्वनिष्ठतेजःसाहाय्येन विद्युद्धारा अन्तःकरणात् समागतं दाहादिधर्मेण समाविष्टं वायुमकारादिध्वनिरूपेण परिणमन्ते।

'अन्तःकरणतत्त्वस्य' इत्युपर्युक्तकारिकायाः,

"विभज्य स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः[१]"
इत्यस्याश्च कारिकाया इदमेव स्वारस्यं परिलक्ष्यते।

---

१. श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डे ११६ का०।

यथा देहाद् बहिःप्रदेशे ध्वनिग्राहकयन्त्रं ध्वनिप्रेषकयन्त्रेण प्रेषितं विद्युत्तरङ्गम् प्रगृह्य स्वनिष्ठविद्युच्छक्तिसाहाय्येनैव तत्तरङ्गं ध्वनिरूपेण परिणमते, एवमन्तःकरणात् प्रेषितो दाहधर्मेण सवृत्तिकमनोधर्मेण समाविष्टो वायुतरङ्गः कण्ठताल्वादिनिष्ठतेजःसाहाय्येन ध्वनिरूपेण परिणामं लभते। ततः श्रूयते— क इति, ख इति च। अन्तःकरणनिष्ठसूक्ष्मवागात्मकज्ञानसमाविष्टमनोनुसारि प्रकम्पितं तेजः, तत्प्रकम्पितो वायुर्वा मुखे तत्तद्ध्वनिरूपं संलभते। यथा अस्माकं मुखात् समुद्गीर्णा वाग् ध्वन्युत्तेजकयन्त्राभिव्यक्तध्वन्यपेक्षया सूक्ष्मा, अनुनादकयन्त्ररूपेषु कण्ठताल्वादिषु तदपेक्षया बहुगुणिता सञ्जायते।

यद्वा--यथाग्निना जलं वाष्परूपेण परिणामं लभते, वाष्पद्वारा च विष्टन नामकं यन्त्रं गतिमत् सञ्जायते। वाष्पस्य विष्टनयन्त्रेण संयोगे जाते सति वाष्पतत्त्वं यान्त्रिकोर्जोरूपेण विपरिणमते। यान्त्रिकोर्जसश्च विद्युदुत्पादके यन्त्रे[1] विद्युत्-ऊर्जोरूपेण, विद्युत ऊर्जसश्च दर्पणकुतुपान्तराले सूक्ष्मतन्तुना[2] सह संयोगे जाते सति प्रकाशरूपेण परिणामः सञ्जायते। अयं विषयो डोनाल्डवारकृते 'परमाणुशक्ति' इत्यभिधेये ग्रन्थे बहुशः प्रतिपादितः।

एवं सूक्ष्मवागात्मज्ञाननिष्ठोर्जसो मनसा सह संयोगे सति, तस्या मनोरूपेण मानसशक्तेश्च तेजसा सह संयोगे सति, तस्याः कायाग्निरूपेण कायाग्नेश्च प्राणवायुना सह संयोगे सति वायुनिष्ठोर्जोरूपेण परिवर्तनं क्रमशः सञ्जायते। सूक्ष्मवाक्संश्लिष्टमनोधर्मेण दाहधर्मेण च समाविष्टो वायुर्यदा कण्ठताल्वादि स्थानं लभते, तदा कण्ठताल्वादिनिष्ठोर्जःसहकारेण तस्य वायोर्ध्वन्यूर्जोरूपेण परिणामो भवति। ततः श्रूयते—'अ' इति, 'आ' इति च। यथा जलस्य क्रमशः स्वविजातीयविद्युदूर्जोरूपेण परिवर्तनम्, एवं वायोरपि कण्ठताल्वादिरूपयन्त्रे स्वविजातीयध्वनिरूपेण परिणामो निष्पद्यते। रसायनशास्त्रदृष्ट्या भौतिकविज्ञानदृष्ट्या च वर्णाभिव्यक्तिप्रतिपादिकायाः—

'स मनोभावमापद्य तेजसा पाकमागतः'।

इत्यादिश्रीभर्तृहर्युक्तकारिकाया अपीत्थमेव व्याख्यानं कर्तुं शक्यते। इत्थमेव च आस्याद् वर्णा अभिव्यज्यन्ते।

### अत्र युक्तायुक्तत्वविचारः

वस्तुतस्तु नैते श्रोत्रग्राह्या अकारादिध्वनयो वायोः परिणामाः, न वा तेजसोर्जःपरिणामाः, किन्तु प्राणे बुद्धौ च शब्दस्य या अतीव सूक्ष्मा शक्तिर्विद्यते,

---

१. इन टू द डाइनामा।
२. विथ द फेलामेन्ट।

सा एव वक्तुर्विवक्षया कण्ठताल्वादिरूपानुनादकयन्त्रे स्वपरश्रोत्रग्राह्यस्थूलध्वन्यात्मना कादिभेदं प्रपद्यते। एतदेव श्रीभर्तृहरिचरणा अपावृण्वन् वाक्यपदीयस्य ब्रह्मकाण्डे—

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥ ११७॥ इति।

ध्वनिशक्तिरेव प्राणस्यापि शक्तिः। सा प्राणमुन्मीलयति। उक्तञ्च स्वच्छन्दतन्त्रस्य चतुर्थे पटले—

वर्णाः शब्दात्मकाः सर्वे जगत्यस्मिंश्चराचरे।
स्थिताः पञ्चाशता भेदैः शास्त्रेष्वानन्त्यकोटिषु॥ २४७॥

शब्दात् प्राणः समाख्यातस्तस्माद् वर्णास्तु प्राणतः।
उत्पद्यन्ते लयं यान्ति यत्र शब्दो लयं गतः॥ २४८॥ इति।

कोटिसंख्येषु शास्त्रेषु अकारादिपञ्चाशता भेदैर्मातृकारूपैः व्यक्तवाग्वति जङ्गमे, अव्यक्तवाग्वति अन्तःसंज्ञे स्थावरे अव्यक्तध्वनिवाच्याक्षराद्यभिव्यञ्जके ये वर्णाः स्थिताः ते सर्वे शब्दात्मकाः ध्वनितत्त्वात्मकाः, शब्दनरूपाः। शब्दोऽपि प्राणनस्य आत्मा, अतः प्राणो ध्वनिसतत्त्वः। अत एवास्माद् ध्वनिरूपाद् वर्णा जायन्ते, यत्र च शब्दात्मा ( शब्द एव आत्मा यस्य स प्राणः ) प्राणो लयं याति तत्रैव वर्णा लीयन्ते। इति ध्वनिसतत्त्वे प्राणनात्मनि प्राण एव वर्णाध्वा विद्यते। अत्र "शब्दात् प्राणः समाख्यातः" इत्याद्युक्त्या मदुक्तं स्पष्टीभवति। प्राणोऽकारादिवर्णानामध्वा, न तु प्राण एव अकारादिवर्णात्मना विवर्तते। 'यत्र शब्दो लयं गतः' इत्युपर्युक्तश्लोकघटकस्य लयशब्दस्य 'सूक्ष्मस्वरूपेणावस्थानम्' इत्यर्थो ग्राह्यः, न तु नाशः। अयं विषयो ध्वनितत्त्वाख्यपरिच्छेदे बहुशः प्रतिपादितः। स च शब्दः कः, यः प्राणस्यापि शक्तिभूत इति चेद् ? एतदुक्तम्—

शास्त्रं शब्दात्मकं सर्वं शब्दो हंसः प्रकीर्तितः॥ इति।

( स्वच्छन्दतन्त्रम्, प० ४,३४१ )

प्राणिनां देहमध्ये तु स्थितो हंसः सदाऽच्युतः।
हंस एव परं सत्यं हंस एव तु शक्तिदः॥ ६०॥ इति।

( योगोपनिषदि ब्रह्मविद्योपनिषद् )

यत् किञ्चित् क्वचिच्छासनाच्छास्त्रं तच्छब्दात्मकं पञ्चाशद्वर्णराश्यात्मकम्, शब्दराशिश्च हंसोच्चारात्मा। अयमेव शब्दराशेरात्मभूतो हंसः प्राणस्य शक्तिः। अतएव 'हंस एव परं सत्यं हंस एव तु शक्तिदः' इत्युक्तम्। अयमेव हंसः प्रतिश्वासं

समुच्चरन् 'सोऽहम्, सोऽहम्' इत्येवं श्रूयमाणोऽनुभूयते[1]। 'सोऽहम्' इत्यत्र 'अहम्' इति वर्णराशेः प्रत्याहारभूतम्। अतएव हंस एव परा मातृका प्रोच्यते। तदुक्तम्—

हंस एव परं वाक्यं हंस एव तु वैदिकम्।
हंस एव परो रुद्रो हंस एव परात् परम्॥ ६१॥

सर्वदेवस्य मध्यस्थो हंस एव महेश्वरः।
पृथिव्यादि शिवान्तं तु अकाराद्याश्च वर्णकाः॥ ६२॥

कूटान्तो हंस एव स्यान्मातृकेति व्यवस्थिताः॥ इति।
( योगोपनिषदि यौगशिखोपनिषद् )

आत्मकूटशब्दाभ्यामत्र साकारः प्रोच्यते। अकारादि-हकारान्ताः, क्षकारश्चेति सर्वे वर्णाः हंससतत्त्वाः अहमिति मातृकास्वरूपो हंसो मूलाधारस्थकमलस्थितयोनिमध्ये स्थितं स्वायम्भुवं लिङ्गं वलयाकारेणाच्छाद्य स्थितायां कुण्डल्यां तिष्ठतीति पूर्वमत्रैव प्रतिपादितम्। उक्तञ्च—

गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम्॥ १६८॥
शिवस्य जीवरूपस्य स्थानं तद्धि प्रचक्षते।
यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता॥ १६९॥

यस्मादुद्यत्पते हंसो यस्मादुत्पद्यते मनः।
तदेतत् कामरूपाख्यं पीठं कामफलप्रदम्॥ १७१॥ इति।
( योगोपनिषदो योगशिखोपनिषद् )

अत्र 'उत्पद्यते' इत्यस्य ऊर्ध्वं गच्छतीत्यर्थः। इत्थं प्राणस्था हंसाख्या शब्दशक्तिरेव विवक्षयां कण्ठताल्वादिस्थानेभ्यः स्वरव्यञ्जनात्मनाऽभिव्यज्यते।

यत्तु पूर्वं ध्वन्यभिलेखनयन्त्रस्य[2] दृष्टान्तद्वारा वायोः परिणामभूतः शब्दः प्रतिपादितः, तन्न समीचीनम्; ध्वनिपेटिकायां[3] वायुं प्रपूर्य मण्डलकोपरि[4] संश्लिष्टां सूचिकाञ्च सन्निधाप्य मण्डलकयन्त्रद्वारा यदा परितो भ्राम्यति, मण्डलकस्य परिभ्रामणेन ध्वन्यनुरूपेषु उच्चावचगर्तेषु सूचिकाया आघातः सञ्जायते। मण्डलकनिर्मितध्वनिगर्तसूचिकयोश्च परस्परमाघाताव्यवहितोत्तरं

---

१. अयं विषयोऽस्मिन्नेव ग्रन्थे ध्वनितत्त्वाख्यपरिच्छेदे स्पष्टतया प्रतिपादितः। तत्रापि एतदीयोंऽशो द्रष्टव्यः।

२. आफ द फोनोग्राफ।

३. इन टू द साउण्डबॉक्स।

४. आन द रिकार्ड।

घट-पटादयोऽतीव सूक्ष्मा ध्वनय एव समुत्पद्यन्ते । त एव ध्वनयो ध्वन्युत्तेजकयन्त्रं गतास्तारस्वरेण अस्माभिः श्रूयन्ते । न च ध्वनिगर्तसूचिकयोः परस्परं सङ्घर्षे सति अतीव सूक्ष्मा घटपटादिध्वनय एव अभिव्यज्यन्ते—इति मया स्वीक्रियते । त्वया तु 'सूचिकायां ध्वनिगतानुरूपं कम्पनं प्रादुर्भवति, तत्कम्पनमेव ध्वन्यभिलेखनयन्त्रस्थं वायुम् आत्मसात् कुर्वद् ध्वन्युत्तेजकेन तारस्वरेण श्रूयते' इत्येवं स्वीक्रियते, आवयोः पक्षयोर्विनिगमनाविरहात् किमपि तथ्यं याथार्थ्यं न भजतीति वाच्यम्; सत्कार्यवादिमतानुसारेण तत्साधनात् । सत्कार्यवादिनः कार्यस्याभिव्यक्तेः पूर्वमेव उपादानकारणे सत्सत्तां स्वीकुर्वन्ति । मयूराद्यण्डेषु बीजेषु वा लीयमानानि सूक्ष्माण्यङ्गान्येव बहिः स्थूलरूपेण अभिव्यज्यन्ते । बीजे सूक्ष्मरूपेण शाखा-पल्लवादीनां सत्ताया अभावे स्थूलवृक्षस्य समुत्पत्तिरसम्भवा । एवं ध्वन्यभिलेखनयन्त्रस्य मण्डलकेऽपि ध्वनिगर्तसूचिकयोराघाते सति प्रथमं घटपटाद्यात्मकः सूक्ष्मो ध्वनिः समुदेति । स एव ध्वनिः ध्वन्यभिलेखनयन्त्रस्थेन ध्वन्युत्तेजकयन्त्रेण तारस्वरेण श्रूयते । यदि मूले सूक्ष्मघटपटाद्यात्मकस्यध्वनेरभिव्यक्तिर्न स्यात्, तर्हि तस्य स्थूलध्वन्यात्मनाऽभिव्यक्तिरसम्भवा । किञ्च, 'यत्र यत्र ध्वनिः, तत्र तत्र कम्पनम्, यद्वा यत्र यत्र कम्पनम्, तत्र तत्र ध्वनिः, ध्वनिपिण्डस्य कम्पनात् प्रादुर्भवति, यथा नाद्यमानायां घण्टायाम्' इत्येवं प्रत्यक्षप्रमाणीकृतानुमानेन यदि मण्डलकोपरि सूचिकायामाघाते सति कम्पनं प्रादुर्भवति, तर्हि तत्र सूक्ष्मा घण्टादयो ध्वनयोऽपि अवश्यमेव अभिव्यज्यन्ते । मूलभूताः सूक्ष्मा ध्वनय एव स्थूलध्वनिरूपेण श्रूयन्ते । एवं रीत्या विचार्यमाणे सति ध्वन्यभिलेखनयन्त्रे मण्डलकोपरि सूचिकया शब्द एव अभिव्यज्यते, न तु ध्वनिगर्तानुरूपपरिकम्पितसूचिकास्पन्दनानुरूपवायवीयतरङ्गा ध्वनिरूपेण परिणताः श्रूयन्ते । किञ्च, ये ज्ञानस्य शब्दत्वापत्तिमामनन्ति, तेषामपि मतानुसारेण बीजे महीरुह एव ज्ञाने सन्निहिता सूक्ष्मा वागेव स्थूलध्वन्यात्मनाऽभिव्यज्यते । अतएव भर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥ ११२ ॥

इत्यस्यां कारिकायां 'सूक्ष्मवागात्मना स्थितः' इत्युक्तम्, न तु केवलं ज्ञानमात्रं शब्दात्मना आविर्भवति । सूक्ष्मवागात्मना स्थितं घटपटादिविषयकं ज्ञानमेव स्थूलनादात्मना बहिरभिव्यज्यते । ज्ञानस्वरूपायाः सूक्ष्मवाचो ध्वनिरतीन्द्रियः । अतः सा सूक्ष्मा । स्थूलायाश्च वाचो ध्वनिः श्रोत्रेण गृह्यते, अतः सा स्थूला । स्थूलया अपि वाचा घटपटादिविषयकं ज्ञानं जायते । अतः साऽपि तादात्म्यात् ज्ञानस्वरूपा ।

यत्तु विजातीयरूपेण पदार्थस्य परिवर्तनं प्रतिपादयन् जलस्य विद्युद्रूपेण परिवर्तनं दृष्टान्तमुखेन समुपस्थाप्य नादशून्यस्य ज्ञानस्य ध्वनिविशिष्ट-

शब्दात्मना परिणतिः पूर्वं प्रतिपादिता, साऽपि न समीचीना; सत्कार्यवादिमतानुसारेण अभिव्यक्तेः पूर्वमेव जले सूक्ष्मरूपेण विद्युतः समुपस्थितेः सत्त्वात्। जले सन्निहितमग्नितत्त्वमेव यान्त्रिकक्रियया विद्युदात्मना अभिव्यज्यते। जलेऽग्नितत्त्वस्यानुसंसर्गः सांख्यैः स्वीक्रियते। तथा चोक्तं श्रीमद्भागवते तृतीयस्कन्धे—

भूतानां नभआदीनां यद् यद् भव्यावरावरम्।
तेषां परानुसंसर्गाद् यथासंख्यं गुणान् विदुः॥ इति।
( भा०, स्क० ३, अ०५, श्लो० ३६ )

वायौ आकाशस्य, अग्नौ च आकाशवायुतत्त्वयोः, जले च आकाशवाय्वग्नितत्त्वानाम्, पृथिव्याश्च नभआदीनां चतुर्णामनुसंसर्गोऽस्ति। पृथिव्यादिष्वग्नितत्त्वस्य सत्त्वादेव काष्ठद्वयस्य परस्परमनुसंसर्गेण अग्निः प्रज्वलति। इममेव सत्कार्यवादं स्पष्टीचकार श्रीभर्तृहरिः वाक्यपदीयस्य ब्रह्मकाण्डे—

अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम्।
तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्॥ ४६॥ इति।

यथा अरणिस्थं ज्योतिः प्रकाशान्तरस्य बहिर्दृश्यमानस्याग्नेः कारणम्, तथैव बुद्धिस्थः=बुद्धौ सूक्ष्मरूपेण स्थितोऽक्रमिकश्च शब्द एव श्रुतीनां श्रूयमाणशब्दानामुपादानं कारणम्। उपदेशकाले शैशवावस्थायां वृद्धैर्ये घटपटादयः सक्रमाः शब्दाः समुपदिष्टाः, त एव शब्दाः श्रोत्रद्वारा शिशोर्बुद्धिदेशं प्रविश्य अक्रमिकरूपेण तत्र तिष्ठन्ति। विवक्षया शिशुर्वृद्धैः समुपदिष्टान् विच्छिन्नक्रमरूपान् बुद्धिदेशं गतान् तानेव शब्दान् पुनः पुनः 'घटः पटः' इत्येवं सक्रमरूपेण समुच्चारयति। एतदेव स्पष्टीचकार श्रीभर्तृहरिः—

यथैकबुद्धिविषया मूर्तिराक्रियते पटे।
तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्॥ इति।
( वा० प०, ब्र० का०, ५२ )

यथैकबुद्धिविषया मूर्तिः चित्रपटे निर्मीयते। 'एकबुद्धिविषया' इत्यस्याक्रमिकरूपेण बुद्धौ स्थिता मूर्तिः। बहिःस्थिता मूर्तिः पूर्वं सक्रमरूपेण चित्रकारस्य बुद्धौ समाविशति, बुद्धिदेशं समाविष्टा च तत्र विच्छिन्नक्रमरूपेण तिष्ठति। अक्रमिकां बुद्धिदेशस्थितामेव मूर्तिं पुनश्चित्रफलके क्रमरूपेण निर्मीति। एवं पूर्वं सक्रमः शब्दो बुद्धिदेशं समाविश्य तत्र अक्रमतां लभते। स एव शब्दो विवक्षायां सत्यां पुनः सक्रमरूपं लभते।

किञ्च, अक्रमिकस्यापि शब्दस्य जीवरूपेण हृदयादिगुहाप्रवेश उक्तः। तद् यथा श्रीमद्भागवतस्य एकादशस्कन्धे द्वादशाध्याये—

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः ॥१७॥ इति।

प्राणेन घोषेण गुहां मूलाधारादिस्थानं प्रविष्टो जीवो हंसः मात्रास्वरादिरूपेण कण्ठताल्वादिभ्यो व्यक्तरूपेण अभिव्यज्यते।

यथा ध्वनिप्रेषककेन्द्रस्थानात् प्रसारयिष्यमाणः सम्वादो विसम्वादो वा ध्वन्युत्तेजकयन्त्रस्य पुरःसरं प्रोच्चरितः। तत्र ( ध्वन्युत्तेजकयन्त्रे ) विद्युद्गतिं लब्ध्वा ध्वनिवर्द्धकयन्त्रेण च सम्वर्द्धितः सन् ध्वनिग्राहकयन्त्रस्य तरङ्गेण समन्वितो[1] भूत्वा वायवीयं[2] प्रविशति। तच्च वायवीयं विद्युच्चुम्बकीयतरङ्गद्वारा सर्वतो दिक्षु तं सम्वादविसम्वादं प्रेषयति। विद्युच्चुम्बकीयतरङ्गसहकारेण विप्रकृष्टदेशेषु यद्वा अनतिदूरदेशेषु गृहे वने वा स्थितेषु ध्वनिग्राहकयन्त्रेषु[3] ध्वनयः समाविशन्ति। तत्र विद्युद्ध्वनितरङ्गयोः पृथक्कर्तृयन्त्रं विद्युतो ध्वनिं पृथक्कृत्य ध्वनिग्राहकयन्त्रस्थं ध्वन्युत्तेजकनामकं भागं प्रवेशयति। ततस्त एव ध्वनिप्रेषककेन्द्रस्थानात् प्रेषिता ध्वनयः श्रूयन्ते, न तु तद्भिन्नाः। एवं रीत्याऽन्तःकरणेऽपि प्राणस्था बुद्धिस्था च वाग्वक्तुर्विवक्षया कायाग्निसन्तप्तवायुमाध्यमेन अनुनादकयन्त्रस्थानापन्नं भ्रूमध्ये कण्ठताल्वादि स्थानं लभते। ताल्वादिस्थानञ्च तेजःसन्तप्तप्राणवायुतः शब्दं पृथक्कृत्य तमभिव्यनक्ति। ततः श्रूयते—'अ' इति, 'आ' इति च।

वस्तुतस्तु इच्छाज्ञानक्रिया-अग्नि-वायवः अकारादिहकारान्तमातृका च तस्याः कुण्डलिनीशक्तेः अवयवभूताः। यथा इच्छाज्ञानक्रियादयस्तस्या अङ्गभूताः, एवं परा मातृका अपि अङ्गभूता। इच्छाज्ञानक्रियावायवश्चैते सर्वे कुण्डलिनीस्थमातृकायाः अभिव्यक्तेः साधनीभूताः। एवम् अग्नीषोमावपि तदभिव्यक्तेः साधनीभूतौ। अकारादिध्वनिभिः सह सम्बन्धस्य सत्त्वात् संसर्गवशाद् आभासते 'अकारादिध्वनयो वाय्वाद्युपादानभूताः' इति। वस्तुतस्तु नेदमित्थम्। शान्तादिशक्तीनां समरसीभूतां परादिवाचं यत् स्वीकुर्वन्ति, तदपि तादात्म्यसम्बन्धस्य सत्त्वादेव। तादात्म्यञ्चात्र तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति।

उक्तञ्च स्वच्छन्दतन्त्रस्य पञ्चमे पटले—

ईश्वरो बिन्दुदेवस्तु कण्ठे शब्दः प्रवर्तते।
तत्र शब्दः क्रियान्तःस्थः क्रियाशक्तिरिति स्मृतः ॥ ७५ ॥ इति।

---

१. मोडलेटेड विथ रेडियो फ्रीक्वेन्सी।
२. इन टू द एरियल।
३. इन टू द रेडियो।

क्रियान्तःस्थः शब्दः क्रियाशक्तिरुच्यते। वामकेश्वरतन्त्रे रौद्रक्रिया-शक्त्योः समरसीभावस्वरूपत्वं वैखर्या यदुक्तम्, तत्तु रौद्रक्रियान्तस्थत्वादेव, न तु वास्तविकरूपेण। एवं शान्तेच्छयोः समरसीभावस्वरूपत्वं यत् परायाः प्रतिपादितम्, तदपि शान्तेच्छयोरन्तःस्थत्वादेव अध्यासवशादुक्तम्, न याथार्थ्येन। एवं वामकेश्वरतन्त्रे पश्यन्तीमध्यमाविषयेऽपि यदुक्तं तस्यापि मदुक्तदिशा तात्पर्यं बोध्यम्।

किञ्च, 'आयुर्घृतम्' इत्यत्र यथा घृतमेव आयुरिति वाक्यार्थोऽवगम्यते। वस्तुतस्तु घृतमायुर्नास्ति, किन्तु आयुषो निमित्तम्। घृतभक्षणेन आयुः सम्वर्धते। अन्तरेणापि निमित्तशब्दं निमित्तार्थोऽवगम्यते। इदं तथ्यं महाभाष्यकारपतञ्जलिरपि पोषयति। तथैव 'अग्निरेव वाक्' इत्येवं यत्र कुत्रापि निगमागमादिषु वाक्यं समुपलभ्यते, तत्र सर्वत्र अग्न्यादिकं ध्वनेर्निमित्तमेव कारणं स्वारस्येनावगन्तव्यम्। यथा सन्तप्तमयःपिण्डमेव 'अयमग्निः' इत्येवं लोकः कथयति, अथवा अङ्गारकमेव अग्निं प्रवदन्ति; वस्तुतस्तु विचार्यमाणे सति नेदं तथ्यं प्रतिभाति, अग्निपिण्डयोस्तादात्म्यसम्बन्धवशात् तथा प्रतीतेः। एवं लोकमातृका न ज्ञानस्य परिणामभूता, अपितु अधिष्ठानभूता। अत एवोक्तं शिवसूत्रे—

'ज्ञानाधिष्ठानं मातृका' इति।

ज्ञानस्य घटपटादिध्वनीनाञ्च परस्परं तादात्म्यसम्बन्धः स्वीक्रियते, न तु ज्ञानस्य परिणामः। उक्तञ्च श्रीभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

ज्ञानं प्रयोक्तुरर्थश्च स्वरूपञ्च प्रतीयते।
शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः॥
(वा० प०, ३।३१)।

इत्यादिना शब्दार्थज्ञानानामध्यासस्योपादानं कृतम्। एवं वाय्वग्नीच्छाज्ञानक्रियादीनाम्, अथ च अकारादिध्वनीनां परस्परं सम्बन्धस्य सत्त्वाद् अध्यासवशादेव ज्ञानादिकं शब्दोपादानं कैश्चित् स्वीकृतम्। तेषामिदं स्वीकृतिर्भ्रान्तिमयी, न तु वास्तविकी।

किञ्च, यथा लोके द्विचक्रिकाचालकं[1] त्रिचक्रिकाचालकं[2] वा जनमाह्वयति कश्चित्—'हे द्विचक्रिके! हे त्रिचक्रिके! अत्रागच्छ' इति। अस्याह्वानस्य द्विचक्रियाः यद्वा त्रिचक्रिकायाः समागमने न तात्पर्यम्, अपि तु त्रिचक्रिकया यद्वा द्विचक्रिया सहैव तच्चालकस्य समागमने तात्पर्यम्। त्रिचक्रिकादिभिः सह सम्बन्धस्य सत्त्वादेव अध्यासवशात् तच्चालकमेव लक्षणया त्रिचक्रिकादिनाम्ना दूरात् सम्बो-

१. साइकिल-चालकः।
२. 'रिक्सा चालक' इति नाम्ना हिन्दीभाषायां प्रसिद्धम्।

धयन्ति । एवमकारादिध्वनेरभिव्यक्तौ साधनीभूतस्य वाय्वादेरुपादानत्वम् अध्यासवशादेव स्वीकुर्वन्ति । वस्तुतस्तु प्राणादयः सर्वे वर्णाभिव्यक्तेः साधनीभूताः । यद्वा, अकारादिध्वनीन् मूलाधाराद् आस्यं प्रापयितुं माध्यमीभूताः; केनचिन्माध्यमेन ध्वनिसञ्चारस्य सम्भवात् । इत्थम् एतावता ग्रन्थप्रबन्धेन 'अकारादिध्वनयो न कस्यचित् परिणामभूताः, किन्तु मूलाधारे सूक्ष्मस्वरूपेण परामातृकाख्यामादधानास्तिष्ठन्ति'—इति तत्त्वं विदांकुर्वन्तु सज्जनाः । तथा च श्रुतिरपि प्रतिपादयति—

सूक्ष्मामर्थेनाप्रविभक्तां तत्त्वमेकां वाचमभिष्यन्दमानाम् ।
तामन्ये विदुरन्यामिव च नानारूपामात्मनि सन्निविष्टाम् ॥ इति ।

अभिष्यन्दमानाम् = तत्तद्रूपेणाभिव्यक्ताम्, अन्यामिव = भेदवतीमिव, आत्मनि = चित्ते ।

महाभारतेऽपि उक्तम्—

प्राणापानान्तरे देवी वाग्वै नित्यं स्म तिष्ठति ।
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ॥ इति ।

एते श्रुति-भारते हरिग्रन्थे ( वाक्यपदीयटीकायां १४४ कारिकायां ) इत्यत्र स्पष्टे ।

एतच्च तथ्यं न केवलं श्रुतिः पुराणं वा प्रतिपादयति, अपि तु आगमशास्त्रमपि अनुमोदते । उक्तञ्च कामधेनुतन्त्रस्य अष्टमे पटले—

वर्णरूपमयी देवी कुण्डली परदेवता ॥ २३ ॥ इति ।

अत्र 'कुण्डली' पदेन मूलाधारस्थिता कुण्डलिनी गृह्यते ।

अत्र अकारादिध्वनेरभिव्यक्तौ अग्नीषोमयोः वाय्वग्नीच्छाज्ञानक्रियाणामित्थं योजना कार्या—आत्मा ज्ञानशक्त्या अर्थं जानाति, इच्छाशक्त्या च ज्ञातमर्थं वक्तुमिच्छति, वक्तुरिच्छया च वायौ अग्नौ च स्पन्दनमयी क्रिया शक्तिरुदेति । मूलाधारस्थस्याग्नेश्च कार्यत्रयम् वायुं सन्ताप्य मूलाधारात् मूर्धपर्यन्तमुत्थापयति । सहस्रारस्थं सोमञ्च सन्ताप्य द्रावयति, तेन मूलाधारस्थोऽग्निः, प्रदीपे घृतमिव सोमं लब्ध्वा प्रज्वलति । प्रत्यक्षरमुच्चारणे च सोमं विग्लापयति । प्रत्यक्षरमुच्चारणे सहस्रारस्थविन्दोः सोमः स्यन्दति ।

पातञ्जले महाभाष्ये 'तपरस्तत्कालस्य' ( १।१।७० ) इति पाणिनीयसूत्रव्याख्यावसरे—

'द्रुतायां तपरकरणे मध्यमबिलम्बितयोरुपसंख्यानम्' इत्यत्र वार्त्तिके—

'कालभेदात् ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम्, ये च मध्यमायां वर्णास्त्रिभागाधिकास्ते विलम्बितायाम्' इति ।

अत्र कैयटः—'द्रुतं श्लोकम् ऋचं वोच्चारयति वक्तरि नाडिकया यस्या नव पानीयपलानि स्रवन्ति, तस्या एव मध्यमायां वृत्तौ द्वादशपलानि स्रवन्ति, नवानां त्रिभागास्त्रीणि पलानि, तदधिकानि नव द्वादश सम्पद्यन्ते। विलम्बितायां वृत्तौ षोडश पलानि स्रवन्ति' इति।

अत्र 'नाडिकया' इत्यस्य सुषुम्नया इत्यर्थः। अत्र पानीयशब्देन अमृत-बिन्दवो गृह्यन्ते। अयं विषयोऽग्रे विशदरूपेण प्रतिपादयिष्यते।

अग्नेस्तृतीयश्च कार्यं विद्यते अकारादिध्वनीनां हृदयादिस्थानेषु पाकं विधाय तेषां स्थूलस्वरूपता यद्वा स्वपरश्रोत्रग्राह्यस्वरूपतासम्पादनम्। उक्तञ्च श्रीमर्तृ-हरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

'स मनोभावमापद्य तेजसा पाकमागतः'। इति।

तदित्थम् 'अग्नीषोमेच्छाज्ञानक्रियावायुप्रभृतीनां ध्वनेरभिव्यक्तौ निमित्तम्' इत्यायातम् एतावता ग्रन्थप्रबन्धेन।

### अकारादिध्वनेर्नादात्मकस्वरूपाद् भेदः

यथाऽस्माकं छायाचित्रं न विम्बाद् भिन्नम्। छायाचित्रस्य प्रतिविम्बस्य वा बिम्बापेक्षया अल्पत्वं महत्त्वं वा भवतु नाम, किन्तु विम्बप्रतिम्बयोः चित्र-प्रति-चित्रयोश्च आकृतौ न भेदः; एवमेकस्यैव अकारादिध्वनेः प्रतिविम्बम् अभिव्यक्ति-र्वा सर्वेषां मुखाद् एकनादात्मिका स्यात्; सर्वेषां मूलाधारे परायां वाचि समेषां वर्णानां समानस्वरूपस्थसत्त्वात्। किन्त्वेतद्विपरीतं दृश्यते लोके।

अत्रेदं विदांकुर्वन्तु सज्जनाः—यथाऽस्माकं विम्बस्य प्रतिबिम्बं छायाचित्रं वा चित्रपटे नीलपीतादिरङ्गै रञ्जितं सद् विम्बाद् भिन्नवर्णकं प्रतिभाति; तथैव सर्वेषां प्राणिनां मूलाधारस्थाने परावाक् एकैव, परन्तु कण्ठताल्वादिस्थानस्य स्थूलत्वं सूक्ष्मत्वादिगुणवशाद् एकस्यैव अकारादिध्वनेः प्रत्येकं मानवस्य मुखाद् विभिन्नो नादः श्रूयते। केनचिदुच्चरितस्य अकारस्य नादः स्थूलः, कस्यचिन्मधुरः, कस्यचिच्च सूक्ष्म इति। अयं भेदः कण्ठताल्वादिस्थानस्य सूक्ष्मत्वादिगुणदोष-वशादेव बोद्धव्यः। किञ्च, केषुचित् पदार्थेषु स्वातिरिक्तपदार्थान् स्वप्रभावेण प्रभा-वितान् कर्तुं शक्तिर्विद्यते। यथा उपनेत्रकम्[1]। उपनेत्रकवर्णानुसारेणैव पदार्था दृश्यन्ते। यदि उपनेत्रकं नीलम्, तर्हि श्वेतोऽपि पदार्थो नीलः। यदि पीतं तर्हि सर्वं पीतमेव दृश्यते। केवलं शुक्लेनैव उपनेत्रकेण सर्वे पदार्थाः स्वस्वरूपेण चक्षुषा गृह्यन्ते। शुक्लवर्णे समेषां नीलपीतादिवर्णानां समरसीभावाद् शुक्लोपनेत्रके न पदार्थाः स्वातिरिक्तवर्णका दृश्यन्ते। एवं केचित् पदार्था अकारादिध्वनिमपि स्व-

१. उपनेत्रकम्='चश्मा' इति हिन्दीभाषायाम्।

शक्त्या मुखोच्चरितनादापेक्षया भिन्ननादात्मकं कर्तुं क्षमाः। यथा पनीर-कर्गल-निर्मिते वाद्ये प्रोच्चरिता घटपटादिशब्दाः आस्योच्चरितनादापेक्षया भिन्ननादात्मकाः, पनीरकर्गलनिर्मिते वाद्ये अकारादिध्वनयः स्पष्टतया आस्यापेक्षया उच्चैः श्रूयन्ते। तत्र वाद्ये मुखं संयोज्य शब्दानामुच्चारणे कृते सति स्पष्टतया तेषामभिव्यक्तिर्जायते। भेदस्तु एतावानेव यत् कन्दरादिषु प्रच्छन्नो भूत्वा अस्मत्परिचितोऽपि पुरुषः पनीरकर्गलनिर्मितेन वाद्येन श्लोकं स्तोत्रं वा उच्चारयति, तर्हि सर्वे शिवरामदुर्गादिशब्दाः स्पष्टतया श्रूयन्ते, तद्वाच्यार्थोऽपि ज्ञायते, किन्तु नेदं ज्ञायते—इमं श्लोकं को गायति ? इति। यदि स एव परिचितः पुरुषः कन्दरादिषु प्रच्छन्नः सन् पूर्वं प्रोच्चरितं श्लोकमेव पनीरकर्गलनिर्मितवाद्यं विना गायति, तर्हि श्लोकध्वनिनैव ज्ञायते—देवदत्तो गायतीति। इत्थं केषुचित् पदार्थेषु अकारादिध्वनिं स्वशक्त्या प्रभावितं कर्तुं क्षमता विद्यते। एवं कण्ठताल्वादिस्थानेषु एतादृशी विद्युच्छक्तिर्विद्यते, यया तत्र एक एवाकारः प्रभावितः सन् विभिन्ननादात्मकः श्रूयते देवदत्तेन उच्चरितः अकारः। अयं च अकारो यज्ञदत्तेन उच्चरित इति।

काँश्चिच्च पदार्थान् ध्वनिरपि स्वप्रभावान्वितान् विदधाति। यथा ध्वन्यभिलेखनयन्त्रस्य[1] मण्डलकम्। विभिन्नजनैः समुच्चरितः एक एव वर्णो ध्वन्यभिलेखनयन्त्रस्य मण्डलके स्वानुरूपम् उच्चावचमेकमेव रेखया अङ्कनं करोति। मया प्रोच्चरितोऽकारो मण्डलके यादृशं रेखया स्वानुरूपं गर्तं निर्माति, तादृशमेव गर्तं परैरपि प्रोच्चरितः। किन्तु ध्वन्यभिलेखनयन्त्रस्य मण्डलकात् सूचिकासङ्घर्षणेन यदा अकारोऽभिव्यज्यते, तदा मया यादृशोऽकारः प्रोच्चरितस्तादृश एव अकारध्वनिः, अन्येन च यादृशोऽकारः प्रोच्चरितस्तादृश एव स ध्वनिरभिव्यज्येत। किञ्च, ध्वन्यभिलेखनयन्त्रस्य मण्डलकात् अभिव्यक्तस्य ध्वनेः श्रुत्येदमपि वक्तुं शक्यते यदयं ध्वनिर्देवदत्तस्य, अयञ्च यज्ञदत्तस्येति, अत्र किं कारणम् ? ध्वन्युत्तेजकयन्त्रस्य मण्डलकं येन पदार्थेन निर्मितम्, तस्य पदार्थस्य परमाणुं ध्वनिः स्वप्रभावान्वितं विदधाति। अतएव विभिन्नजनैः समुच्चरितस्य एकस्यैव ध्वनेः मण्डलके ध्वन्यनुरूपा रेखाकृतिः समानरूपा, तथापि मण्डलकात् तस्याभिव्यक्तिविभिन्नवक्तृमुखाद् अभिव्यक्त्यनुसारेण विभिन्ना इति। कण्ठताल्वादिस्थानानि तु स्वशक्त्या ध्वनिमेव प्रभावयन्ति। अतः सर्वेषां मूलाधारे एकस्यैव पराख्यध्वनितत्त्वस्य सत्त्वेऽपि तत्र स्थितस्य अकारादेर्ध्वनिः विभिन्नकण्ठेभ्यो विभिन्ननादात्मना श्रूयते। देवदत्तयज्ञदत्ताभ्यां प्रोच्चरितयोरकारयोस्तु न भेदः, किन्तु स्वरभेदो ( ध्वनिभेदः ) दृश्यते। अयञ्च सर्वो भेदः कण्ठताल्वादिस्थानस्य सूक्ष्मत्व-स्थूलत्वादिभेदानुसारेण बोद्धव्यः।

---

१. टेप रिकार्ड।

## मूलाधाराद् ध्वनिसञ्चाररीतिः

अत्रेयं शङ्का जागर्ति अस्माकम्—कया रीत्या वक्तुरिच्छया प्रेरितेन मनसा मूलाधारस्थो वह्निरुद्दीपितः सन् मूलाधारस्थमेव वायुं सन्तप्तीकृत्य तन्माध्यमेन नाभिहृदयादिस्थानानि उल्लङ्घ्य कण्ठताल्वादिस्थानमकारादिवर्णान् प्रापयति ? वायुमाध्यमेन गन्धवत्, यद्वा सूर्यप्रकाशेन अथवा विद्युता प्रतिबिम्बवत्। यथा वायुर्गन्धं गृहीत्वा स्थानान्तरं प्रापयति तद्वद्, आहोस्विद् यथा सूर्यप्रकाशोऽस्माकं प्रतिबिम्बं दूरदेशं प्रापयति, बिम्बं तु स्वदेशस्थमेव भवतीतिवद् वा। उभयमपि सम्भवति। प्रथमपक्षे मूलाधारस्थिता हंसाख्या अहमिति परामातृका विवक्षया अग्निसन्तप्तवायुमाध्यमेन स्वयमेव नाभ्यादिस्थानक्रमेण स्थूलभावं स्वीकुर्वन्ती भ्रूमध्यादिदेशं लभते। कण्ठताल्वादिस्थानेषु अकारादिध्वन्यभिव्यक्तिसाधनीभूतचक्रेषु विद्युच्छक्त्या मूलाधारापेक्षया व्यक्तरूपेण च अभिव्यज्यन्ते। यथा ध्वन्युत्तेजकयन्त्रापेक्षया अस्माकं सूक्ष्मा वाक् तद्यन्त्रं गता अस्मदुच्चरितापेक्षया स्थूला तारस्वरेण बहुदूरश्च श्रूयते। एवं मूलाधारस्था परा वाक् कण्ठोच्चारितवागपेक्षया तीव्रा। सूक्ष्मा सा च मूलाधारात् नाभ्यादिस्थानमुल्लङ्घयन्ती भ्रूमध्यादिदेशं गत्वा स्थूलस्वरूपेण समुपलभ्यते।

यद्वा प्रतिबिम्बन्यायोऽप्यत्र विषये समीचीन एव। यथा प्रातः काले सूर्यप्रकाशेऽस्माकं प्रतिबिम्बं विम्बापेक्षया तीव्रदीर्घं बिम्बपरिमितम् न प्रतिबिम्बम्। सूर्यप्रकाशमाध्यमेन च अस्माकं प्रतिबिम्बं बहुदूरं गच्छति, एवं वक्तुरिच्छया जातेन प्रयत्नेन वाय्वग्निसङ्घर्षणात् मूलाधारे समभिव्यक्तस्य सूक्ष्मातिसूक्ष्मस्य अकारादिध्वनेः प्रतिबिम्बं सुषुम्नामार्गेण वाय्वग्निमाध्यमेन नासिकान्तं भ्रूमध्यादिदेशं समायाति। कण्ठताल्वादिस्थानेषु च विद्युन्माध्यमेन मूलाधारात् समागतं सूक्ष्मवाचः प्रतिबिम्बं स्वविम्बापेक्षया स्थूलम्, मूलाधारे समभिव्यक्ता वाक् च स्वदेशस्थिता एव अत्र पक्षे। वस्तुतस्तु सर्वशक्तिमयी सर्वत्र व्याप्ता सा चिन्मयी अहन्ता मूलाधारत्वावच्छिन्ने देशे परावागात्मना, मणिपूरदेशावच्छिन्ने च पश्यन्त्यात्मना, हृद्देशे च अनाहतात्मना, कण्ठदेशे च वैखर्यात्मना—इति स्थानोपाधिभेदेन तत्रतत्र देश एव विभिन्नरूपतया भासते। एवं जिह्वादीन्यङ्गान्यपि वर्णाभिव्यक्तौ करणतया निमित्तानि।

## अकारादिध्वनेरभिव्यक्तौ आस्यान्तःस्थानि निमित्तान्यङ्गानि—

### जिह्वा

सुषुम्नापार्श्वस्थसरस्वतीनाडीसम्बद्धा जिह्वा दन्तादिस्थानं संस्पृश्य सुषुम्नारन्ध्रतस्तालुमार्गेण आकृष्य वैखरीरूपतामापादयति।

भ्रूमध्यदेशः, नासिकास्थि च—

नासिकास्थिविहीनः पुरुषः शब्दमुच्चारयितुं न समर्थः। नासिकामध्यदेशस्थ-स्यास्थ्नः सुषुम्नाख्यनाड्या सह सम्बन्धो विद्यते। अकारादिध्वनयश्च मूलाधारात् प्राणवायुमाध्यमेन मूर्द्धदेशं समागत्य सुषुम्नारन्ध्रत एव तालुमार्गेण कण्ठदेशं संक्राम्यन्तो निःसरन्ति। नासिकास्थ्नश्च सुषुम्नया सह सम्बन्धात् तद्विहीनः पुरुषः वर्णस्योच्चारणेऽक्षमः। अयं विषयो मया प्रत्यक्षीकृतोऽनुभूतश्च। तद्यथा—

श्रीरामसुमिरनदासाख्यः कश्चित् पुरुष उत्तरप्रदेशस्य देवरियामण्डले वोदर-वाराख्यस्टेशनपार्श्वे असनाग्रामे सम्प्रति निवसति। अस्य ग्रामस्य पत्रालयोऽपि असनाग्राम एव। अस्य पितृप्रदत्तं नाम मिलितिरीति। कदाचिदस्य मल्लयुद्धे नासिकास्थि मध्यभागतः खण्डितम्। झिल्लिका ( नासिकाश्लेषः ) अपि भग्ना। नासिकायाः छिद्रद्वयञ्च अवरुद्धम्। तेन स आस्यमार्गेण एव श्वसिति। यदुच्चारयति तत्सर्वं श्वासात्मकेन एव अक्षरेण। अकारादिध्वनिषु नादो न जायते। यथा द्वौ पुरुषौ परस्परं कर्णयोः गोपनीयं वाक्यं कथयतः, तत्र यादृग् उच्चारणं भवति, तादृशमेवायं नासिकाविहीनः पुरुष उच्चारयति। एतादृशमप्युच्चारणं बहुक्लेशेन करोति, न तु सौविध्येन। त्रिपुटीमध्ये ( भ्रूमध्यदेशे ) एकांगुलपरिमाणकमस्थि अवशिष्टम्। यदि तदपि निःसृतं स्यात्, तर्हि कथमपि उच्चारणं न सम्भवेदिति। अस्य पुरुषस्य मुखान्तर्गतकण्ठादीन्यङ्गानि सुरक्षितानि, सुदृढानि च; किन्तु नासिकाया अभावात् शब्दानां सुस्पष्टमुच्चारणं कर्तुमक्षमः। अस्य किं कारणं विद्यते ? मल्लयुद्धे भ्रूमध्यदेशस्य आहतत्वम्, नासिकास्थ्नश्च अभाव एवात्र कारणे स्तः। किञ्च, निखिलज्ञानकेन्द्रभूतया सुषुम्नया सह नासिकास्थि सम्बद्धम्। अतएव नासिकास्थ्नि आघाते सति कर्णचक्षूरसनादिषु ज्ञानेन्द्रियेषु पीडाऽनुभूयते, चक्षुर्भ्याञ्च अश्रुपातः सञ्जायते। नासिकास्थ्नि आघाते सति सर्वाणीन्द्रियाणि ज्ञानशून्यानि जायन्ते। इदं नासिकास्थि भ्रूमध्यदेशस्थम्। भ्रूमध्यदेश एव 'शब्द-कूटः' प्रोच्यते। सर्वेषामकारादिध्वनीनां नादात्मकत्वसम्पादनमत एव जायते।

उक्तञ्च योगशिखोपनिषदि द्वितीयेऽध्याये—

आकाशमण्डले वृत्तं देवताऽस्य सदाशिवः।
नादरूपं भ्रुवोर्मध्ये मनसो मण्डलं विदुः॥ १७८॥ इति।

भ्रुवोर्मध्ये नादरूपं मनसो मण्डलं विद्यते। मूलाधारे सूक्ष्मरूपेण स्थितः शब्दे भ्रूमध्यदेशं गतः सन् नादरूपतां प्राप्य अनुनादितो भवति। स्वच्छन्दतन्त्रस्य पञ्चमपटलेऽपि इदमेव प्रतिपादितम्। तद्यथा—

स शब्दस्तालुके देवि ईरितः सम्प्रवर्तते।
तस्य किञ्चिद् गतः शब्दो नासिकान्ते प्रवर्तते॥ इति।

नासिकान्ते = भ्रूमध्यदेशे। किञ्च, प्रत्येकं कादिवर्गे पञ्चमवर्णस्यङकारादेः स्थानं नासिका प्रोक्ता। एते च ङकारादयो वर्णाः '' '' इत्यनुस्वारानुनासिकयोः परसवर्णरूपाः; 'त्वं गच्छसि', 'त्वङ् गच्छसि' इत्यादिषु तथा दर्शनात्। '' इतीयं लिपिः नादस्य चिह्नम्। ङकारादीनां नादाभिन्नानुनासिकस्यैव कादिवर्णे परे परसावर्ण्यरूपात्। प्रत्येकं वर्गस्यान्ते च तेषां ङकारादीनां पाठात्, तेषां नासिकास्थानिकत्वाच्च इदमेव द्योत्यते यत् सर्वे वर्णा नासिकान्तदेशे (भ्रूमध्यदेशे) एव नादशक्तिं लभन्ते। इदञ्च तथ्यम् उपर्युद्धृतशास्त्रप्रामाण्येन, अथ च युक्त्या, प्रत्यक्षप्रामाण्येन च प्रतिपादितम्। भ्रूमध्यदेशस्य विकृते सति कथमपि शब्दो नोच्चारयितुं शक्यते। यथा पूर्वमत्रैव प्रसङ्गत एकः पुरुषो वर्णितः। सर्वेषामकारादिध्वनीनां निष्पत्तिः भ्रूमध्यदेश एव। अस्मादेव स्थानात् तालुमार्गेण ध्वनयः कण्ठतो निःसरन्ति। अतएव 'तरन्त्यनेन वर्णा इति तालु' इत्येवं तालुशब्दस्य व्याख्या यथार्थतां भजति। तालुन ऊर्ध्वपटलेन वायुमाध्यमेन भ्रूमध्यदेशमुल्लङ्घयन् वर्णास्तरन्ति, तालुनश्च अधःपटले स्पृष्टादिप्रयत्नेन तत्तद्भागान् जिह्वा स्पृशति।

## कण्ठादिस्थानस्वरूपम्

कण्ठताल्वादिस्थानेषु षोडशाद्यरात्मकानि विशुद्धाद्याख्यानि चक्राणि विद्यन्ते, यत्र समेषामकारादिवर्णानां समष्टिभूता, 'हंसः', 'अहम्', 'सोऽहम्' इत्यात्मिका परामातृका अकारादिव्यष्टिवर्णात्मना विवर्तते।

तैत्तिरीयप्रातिशाख्यमते[1] तु कण्ठोरसोर्मध्यदेशे शब्दा निष्पद्यन्ते, कण्ठादिस्थानेषु च तस्य प्रतिध्वनिर्जायते। कण्ठादिस्थानानि शब्दस्य प्रतिध्वनिकारकाणि यद्वा अनुनादकयन्त्ररूपाणि।

एवमेव भौतिकवैज्ञानिका[2] अपि तैत्तिरीयप्रातिशाख्यमिव कण्ठदेशमेव शब्दनिष्पत्तिस्थानं तद्भिन्नानि ताल्वादिस्थानानि च अनुवादकयन्त्ररूपाणि मन्यन्ते।

---

१. "वायुशरीरसमीरणात् कण्ठोरसोः सन्धाने" (तै० प्रा०, अ० २, सू० २)।
कण्ठोरसोः सन्धाने मध्यदेशे शब्दोत्पत्तिर्भवति।
"प्रतिश्रुत्कानि भवन्त्युरः कण्ठः शिरोमुखं नासिके इति" (तै० प्रा०, २।३)।
(प्रतिश्रुत् = प्रतिध्वनिः)

२. "संगीत के अन्य यन्त्रों की तरह कण्ठ भी ध्वनि उत्पन्न करने का एक यन्त्र है। फेफड़े की वायु का झोंक कण्ठ में बनी स्लिट से निकल कर ध्वनि उत्पन्न करता है और कण्ठ मुख नाक आदि के बने कोटर अनुनादक का काम करते हैं"।
—श्री ललितकिशोरसिंह, एम० एस०-सी० कृते ध्वनिविज्ञाने, पृ० २०६।

पाणिनीयादिशिक्षासु च कण्ठादिकम् अकारादिवर्णानामभिव्यक्तिजनकं स्वीकृतम् । तथा चोक्तं पाणिनीयशिक्षायाम्—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १३ ॥ इति ।

एतेषां कण्ठादिस्थानानां जिह्वादिकरणानाञ्च योगे वर्णोच्चारणोपयोगीनि दशाङ्गानि गण्यन्ते । तद्यथा—

(१) उरः, (२) कण्ठः, (३) नासिका, (४) जिह्वामूलम्, (५) तालु, (६) मूर्द्धा, (७) दन्तमूलम्, (८) ओष्ठः, (९) जिह्वा, (१०) अधोहन्वस्थि ।

तत्र जिह्वामध्यादिभागानां जिह्वायाम्, हन्वस्थिमध्यहन्वस्थिमूलयोश्च हन्वस्थ्यन्तर्भावो विद्यते ।

## भाषावैज्ञानिकमते वर्णोच्चारणोपयोगीन्यङ्गानि

(१) अन्नप्रणाली (२) स्वरयन्त्रम् (३) स्वरतन्त्री (४) काकलकम् (५) अभिकाकलकम् (६) श्वासप्रणाली (७) मुखविवरः (८) अलिजिह्वा (९) नासिकाविवरः (१०) कण्ठः (११) श्वासमार्गः (१२) कोमलतालु (१३) मूर्द्धा (१४) जिह्वा (१५) कठोरतालुः (१६) वर्त्सः (१७) उर्ध्वदन्ताः (१८) श्वासग्रहणस्योत्तममार्गः (१९) नासिका (२०) ऊर्ध्वोष्ठः (२१) अधरोष्ठः (२२) अधोदन्तः (२३) अधोवर्त्स (२४) जिह्वाग्रभागः (२५) मध्यजिह्वा (२६) पश्चजिह्वा (२७) जिह्वामूलञ्चेति सप्तविंशत्यङ्गानि भवन्ति ।

कण्ठस्य च मुख्यतया चत्वारो भागाः सन्ति—

(१) चुल्लिकोपास्थि, (२) मुद्रिकोपास्थि, (३) त्रिकोणिकोपास्थि, (४) स्वरयन्त्रच्छदश्च ।

केचिच्च भाषावैज्ञानिकाः श्वासप्रणाली-श्वासमार्गयोश्च नासिकायामन्तर्भावं कृत्वा षड्विंशत्येवाङ्गानि वर्णोच्चारणोपयोगीनि मन्यन्ते । एतेषां मध्येऽभिकाकलकम् ( कण्ठच्छदः ) स्वरयन्त्रस्य पिधानं वा श्वासप्रणाल्या महान् प्रहरी प्रोच्यते । अस्य कण्ठच्छदस्य कार्यद्वयं विद्यते—

१. जलस्य भोजनस्य वा निगरणवेलायां श्वासमार्गस्य मुखं पिहितं करोति । श्वासमार्गस्य कण्ठच्छदेन पिहितत्वात् जलं भोजनं वा श्वासमार्गं न

प्रविशति। तेन प्राणिनां प्राणरक्षा जायते। अन्यथा भोजनस्य निगरणवेलायां कण्ठच्छदेन श्वासमार्गस्य समवरोधाभावेन भोजने श्वासमार्गं प्रविष्टे सति प्राणहानिः सम्भाव्यते।

२. स्वरतन्त्री प्रकम्प्य ध्वनिं निःसारयति। अयं कण्ठच्छदो वर्तुलाकारो झिल्लिकापटेन निर्मितो विद्यते।

## पूर्वोक्ताङ्गानां कण्ठादिष्वन्तर्भावः

एतेषामङ्गानां प्रत्यङ्गत्वेन कण्ठादिष्वन्तर्भावो विद्यते। अत एव शिक्षाकारैः 'अष्टौ स्थानानि वर्णानाम्' इत्युक्तम्। फुप्फुसादीनां हृदये, स्वरयन्त्रादीनाञ्च कण्ठे कोमलतालुनश्च तालौ, कठिनतालुनश्च मूर्द्धनि, दन्तादीनाञ्च दन्तमूले, ओष्ठद्वयस्य च एकस्मिन्नोष्ठे, श्वासप्रणाल्यादीनाञ्च नासिकायामन्तर्भावः। एवं जिह्वामध्यादिभागस्य जिह्वायामन्तर्भावः कर्तुं शक्यते। इमान्यङ्गानि वर्णोच्चारणेऽतीवोपयुक्तान्यावश्यकानि च सन्ति।

## कण्ठस्थानम्

नूतनाः केचिद् विद्वांसः 'संस्कृतशिक्षासु कोमलताल्वेव कण्ठस्थानं प्रोक्तम्'—इत्येवमनुसन्दधति स्म[1]। तन्न समीचीनम्। कण्ठस्थानं सर्वत्र शिक्षासु तालुभिन्नमेव विद्यते। अतएव पातञ्जले महाभाष्ये तुल्यास्येति सूत्रे कण्ठस्थानस्यास्यबहिर्भूतत्वाद् कण्ठस्थाकारस्य सवर्णसंज्ञानापत्तिः आशङ्किता। तालुन एव कण्ठपदवाच्यत्वे सति तस्य चास्यान्तर्भूतत्वाद् अकारस्य सवर्णसंज्ञायां सिद्धायां तत्प्राप्तिरूपशङ्कोत्थापनं 'सर्वमुखस्थानमवर्णमेक इच्छन्ति' इति तत्समाधानञ्च व्यर्थे स्याताम्। कण्ठस्य तालुभिन्नत्वादेव तुल्यास्येति सूत्रवृत्तौ ताल्वादिस्थानमित्यस्य टिप्पण्याम्[2] —'तालोरादिस्ताल्वादिः कण्ठः, तालुरादिर्येषां तानि ताल्वादीनि। एवं तद्गुणसंविज्ञानबहुव्रीहितत्पुरुषयोः कण्ड्वादिशब्दवद् एकशेषाङ्गीकारेण कण्ठस्थानस्यापि ग्रहणम्' इत्युक्तं सङ्गच्छते।

यत्र काकलकं ( उन्नतभागः ) स्वरतन्तवो वा विद्यन्ते तदेव स्थानं कण्ठपदेन प्रोच्यते। अतएव अमरकोषे श्रीपण्डितशक्तिधरशास्त्रिकृतरसालाख्यव्याख्यायां 'कृकाटिका' शब्दस्य व्याख्यावसरे कृकं कण्ठमततीति कृकाटिका ( ग्रीवाया-मुन्नतभागः) इत्युक्तं संगृह्यते। तथा च कण्ठस्य बाह्यभागे भूषणानि धार्यन्ते, अन्तर्भागे च गलविलम्, स्वरतन्तवश्च विद्यन्ते। कण्ठस्थानस्य विशेषरूपेणोल्लेखो

१. "कोमल तालु के लिये संस्कृतशिक्षाकारों में कण्ठ नाम प्रसिद्ध है। कोमल तालु का अन्तिम भाग हिल-डुल सकता है"।—श्री मङ्गलदेवशास्त्रिकृते भाषाविज्ञाने, पृ० २००।

२. तत्त्वबोधिनीव्याख्योपेतसिद्धान्तकौमुद्याः टिप्पण्याम्।

मदीये 'शब्दतत्त्वं तत्सम्बन्धि आधुनिकविज्ञानञ्च' इति ग्रन्थे 'भौतिकविज्ञानदृष्ट्या कवर्गादिवर्णस्थानम्' इत्यत्र विशदरूपेण कृतः।

कण्ठस्य भागद्वयं विद्यते—(१) प्राक्काकलकभागः, (२) काकलकं तदधोभागश्च। प्राक्काकलकभागस्तु आस्यान्तर्भूतो विद्यते। अतएव तुल्यास्येति सूत्रस्थ-महाभाष्ये 'किं पुनरास्यम् ?' इति प्रश्ने 'लौकिकमास्यम्, ओष्ठात् प्रभृति प्राक्का-कलकात्' इत्युत्तरितं सङ्गच्छते। काकलकादधोभागश्च आस्यबहिर्भूतो विद्यते। अतएव केषाञ्चिन्मतेऽकारस्य काकलकाधस्तात् स्थानस्य सत्त्वात् 'एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति ?' इति शङ्का कृता। 'सर्वं मुखस्थानमवर्णम् एक इच्छन्ति' इति केषाञ्चिन्मतमादाय समाधानं कृतम्। वस्तुतस्तु भाष्यकृन्मते तु अकारस्य प्राक्काकलकस्थानतया, तस्य च आस्यान्तर्भवत्वाच्च शङ्काया अवसर एव नास्ति।

## जिह्वामूलम्

जिह्वामूले द्वे वर्तेते—१. ऊर्ध्वं जिह्वामूलम्, २. अधो जिह्वामूलञ्च। यतो हि चरकसंहितायाम्[1], मानवशरीररचनाज्ञानवतामाधुनिकवैज्ञानिकानां च ग्रन्थेषु द्वे जिह्वे प्रतिपादिते स्तः[2]—१. ऊर्ध्वजिह्वा, २. अधोजिह्वा च। ऊर्ध्वजिह्वा च अलिजिह्वा, उपजिह्वा, आंग्लभाषायायाञ्च 'युवुला' इत्यादिनाम्ना व्यह्रियते। इयञ्च जिह्वा कोमलातालुनोऽन्तिमे भागे मुखे विस्फारिते सति तालुदेशे लम्बायमाना कण्ठविवरं च द्विधा विभक्तं कुर्वन्ती दृश्यते। सर्वप्रथमम् अस्या एव जिह्वाया सृष्टिर्जाता। तथा चोक्तं श्रीमद्भागवतस्य द्वितीयस्कन्धे दशमेऽध्याये—

> मुखतस्तालुनिर्भिन्नं जिह्वा तत्रोपजायते।
> ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते ॥ १८ ॥ इति।

उपर्युद्धृते श्लोके 'तत्र' शब्दे तच्छब्दात् औपश्लेषिकाधिकरणार्थकसप्तम्यन्तात् त्रल्प्रत्ययो विद्यते। तथा च ताल्वेकदेशे जिह्वा उपजातेत्यर्थः।

अधोजिह्वा च अधोदन्तमूलेषु वर्तते। अस्या मूलञ्च कण्ठपार्श्वे स्थितम्। वर्णोच्चारणवेलायां तात्वादिस्थानानि संस्पृश्य तत्र प्राणवायुञ्चावरुद्ध्य अकारादिध्वनेरभिव्यक्तौ साहाय्यं प्रददाति। एवं जिह्वाद्वये सिद्धे सति जिह्वामूलद्वयं सुतरां सिद्ध्यति।

---

१. 'द्वे उपजिह्विके'—चरकसंहिता ( प्र० भा० ) विद्योतिनीव्याख्योपेता—शरीरसंख्या शरीराध्यायः ७, पृ० ९१३ इत्यत्र एतदीयोंऽशो द्रष्टव्यः।

२. डॉ० स्प्राउल महोदया अपि स्वकीये "मानवशरीर की वैज्ञानिक पुस्तक" इति ग्रन्थे 'अलिजिह्वा ( २ ) जिह्वा' इति जिह्वाद्वयं प्रत्यपादयन्त। तत्र एकादश चित्रपटले ( ११ प्लेट ) एतदीयोंऽशो द्रष्टव्यः।

## तालु

मुखे तालूत्पत्तिर्जाता । 'तरन्त्यनेन वर्णाः' इति विग्रहे तरणार्थकतृधातोरुण् प्रत्ययेऽनुबन्धलोपे, तृ + उ इति स्थिते, 'अचो ञ्णिति' ( पा०सू० ७.२.११५) इति वृद्धौ रपरे च कृते रस्य च लत्वे 'तालु' शब्दो निष्पद्यते । यथा जनाः सोपान-मार्गेण प्रासादाद् अधोऽवतरन्ति, तथैव वक्तुरिच्छानुवर्तिना प्रयत्नेन समुत्थितः प्राणवायुर्मूर्ध्न्यभिहतः सन् तालुमार्गेण कण्ठादिस्थानमवतीर्य तत्र च अभिहतः सन् शब्दरूपं प्रतिपद्यते ।

तालुनश्च कार्यद्वयं विद्यते--वर्णानाम्, भोज्यादिचतुर्विधान्नानां च अवतारणम् । १. तत्र वर्णानामवतारणं तालुन ऊर्ध्वपटलाद् भवति । २. तालुनोऽधःपटलाच्च जिह्वासाहाय्येन भोजनादीनामुदरेऽवतारणं जायते ।

तालु च एकमेव वर्तते । एकस्यैव तालुनः कठोरतालु, कोमलतालु च इति भागद्वयं कुर्वन्ति । इदं स्थानम् आस्ये, यो हि वक्त्रसम्मिताऽऽकाशो वर्तते तत्र, छत्राकारं निर्मितं विद्यते । तालुनः कोमलांशो वर्णोच्चारणवेलायां भस्त्रिकावत् संकुचति, विकसति च । कोमलतालुन इयं क्रिया वक्त्रं दर्पणाभिमुखीकृत्य, हकारोच्चारणवेलायां स्पष्टतया दृश्यते । तालुनो मध्यभागः ( कठोरांशः ) मूर्धनाम्ना व्यवह्रियते । दन्तमूलसमीपे तालुनश्च यो भागः स वर्त्सः, यत्र च दन्ता निःसरन्ति, उत्पद्यन्ते वा, तद् दन्तमूलमुच्यते ।

## मूर्द्धा

यद्यपि यत्र शिरोरुहाः सन्ति, तदेव स्थानं मूर्द्धपदेन व्यवह्रियते । अत एव शिरोरुहा मूर्द्धजा अप्युच्यन्ते । तथा च भागवतम्—

अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दमथासिना ।
मणिं जहार मूर्द्धन्यं द्विजस्य सह मूर्द्धजम् ॥ इति ।

( भा०, १।७।५५ )

मूर्ध्नश्च त्रयो भागा भवन्ति—१. बृहन्मस्तिष्कम्, २. लघुमस्तिष्कम्, ३. सुषुम्नाशीर्षकञ्च । बृहन्मस्तिष्कं मूर्ध्नोऽग्रभागः, लघुमस्तिष्कञ्च पृष्ठभागे यत्र मेरुदण्डस्य सन्धिर्वर्तते । सुषुम्नाशीर्षकञ्च मध्ये यत्र ब्रह्मरन्ध्रो विद्यते तत्र निर्मितम् । एवञ्च मुखे न किमपि स्थानमवशिष्यते यन्न मूर्द्धपदवाच्यं भवेत्;

तथाऽपि उपाधिभेदेन यथा एकस्यैव शिरसो[१] विभिन्नान्यङ्गानि छिद्राणि वा मुखं नासिका नेत्रं श्रवणमित्युच्यन्ते, यथा एकस्यैव आकाशस्य उपाधिभेदेन घटाकाशो मठाकाश इत्यादयो भेदा जायन्ते, तथैव ताल्वङ्गस्य अतीवोन्नतत्वाद् मध्यभागो मूर्द्धपदेन प्रातिशाख्यादिषु व्यवह्रियते। तस्य च कोमलभागोऽतीव तरलः। अतः स भागस्तालुपदेन व्यवह्रियते। लोकेऽपि विदुषां मध्ये यः कश्चिदतीवोन्नतिशाली भवति स 'विद्वन्मूर्द्धन्यः' इत्युच्यते। अतीवोन्नतभागस्य मूर्द्धत्वव्यवहारो न केवलमधुनैव दृश्यते, अपि तु अतीव प्राचीनो वर्तते। तथा च ऋग्वेदसंहितायाम्—

'नियद् वृणक्षि श्वसनस्य मूर्द्धनि शुष्णस्य चिद्।' इति।

अस्मिन् मन्त्रे मूर्धपदमुपरिप्रदेशाऽर्थे वर्तते। तथा च सायणाचार्यः 'शुष्णस्य मूर्द्धनि' इत्यस्य 'शुष्णस्य रसानां शोषयितुरादित्यस्य मूर्द्धन्युपरिप्रदेशे' इति भाष्यं कृतवान्। तथा च ऋग्वेदे—

"इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः।
शीर्ष्णः क्षीरं दुह्रते"—

इति मन्त्रे शीर्षपदमुन्नतार्थे वर्तते। सायणाचार्यश्च शीर्ष्णः 'शिरोवद् उन्नतस्य सर्वेषामुत्कृष्टस्य वा' इति भाष्यं कृतवान्। इत्थं मूर्द्धपदमुन्नतार्थेऽपि दृश्यते। अतः "ऋटुरषाणां मूर्द्धा" इत्यादिषु शिक्षावचनेषु मूर्द्धपदं तालुन उन्नतप्रदेशार्थे गृह्यते।

**दन्तस्थानम्**

दन्तोऽस्थिविशेषः भोजनादिपेषणस्य साधनीभूतोऽवयवो वर्तते। यथा 'वृक्षः' इति कथनेन समूलं शाखाद्यर्थो बुद्धयते, यथा वा वृक्षमूलं वृक्षस्यैवावयवभूतमस्ति, न वृक्षाद् व्यतिरिक्तं वर्तते, तथैव 'दन्त' इति कथनेन समूलदन्तस्य ग्रहणं बोद्धव्यम्। दन्तमूलञ्च दन्तस्यैवावयवभूतम्, न तु दन्ताद् व्यतिरिक्तं विद्यते। अतः पाणिनिराचार्यः शिक्षायाम्—"दन्त्या लृतुलसाः स्मृताः' इति श्लोके

---

१. "सप्त महान्ति छिद्राणि—सप्त शिरसि, द्वे चाधः"—( चरकसंहिता, शरीरसंख्या शरीराध्याय ७ )

डा० स्प्राउलमहोदया अपि 'मानव शरीर की वैज्ञानिक पुस्तक' इति स्वकीये ग्रन्थे 'शिर का व्योरा' इति स्थले १. अलिजिह्वा ( युवला ), २. ग्रसनी की पिछली भित्ति, ३. मसूड़े, ४. कोमलतालु इत्यादीति ( एकादश चित्रपटे प्लेट ११ ) शिरसोऽङ्गानि दर्शितवन्तः। एवञ्च एकस्यैव शिरसो विभिन्नान्यङ्गान्युपाधिभेदेन विभिन्नपदव्यवहार्याणि भवन्ति।

'दन्त्याः' इत्युक्तवान्, न तु दन्तमूलीयाः। पाणिनिशिक्षायाम् अवयवत्वेन दन्तमूलस्यापि दन्तपदेन ग्रहणात् 'दन्तमूलीयस्तु तकारवर्गः' इति ऋक्प्रातिशाख्यादिभिर्विरोधो न जायते। वृद्धावस्थायां दन्तेषु त्रुटितेषु तन्मूलमवशिष्यते। अतो वृद्धा अपि, ये दन्तहीनाः सन्ति तेऽपि, तकारादिवर्णान् समुच्चारयन्ति। वृद्धावस्थायां दन्तेषु त्रुटितेषु सत्सु पुनः पुनर्दन्तप्ररोहणशक्तेः क्षीणत्वात् पुनर्दन्ता न निःसरन्ति। किञ्च, ये आजीवनं साधनं ( अपामार्गदन्तधावनादि साधनम् ) कुर्वन्ति, तेषां च वृद्धावस्थायामपि दन्ता प्ररोहन्ति। दन्तमूलञ्च दन्तोलूखलमित्यप्युच्यते। दन्तोलूखलमस्थिमयं विद्यते। अतएव चरकसंहितायां ( प्रथमभागे शरीरसंख्या-शरीराध्याये ) दन्तोलूखलस्यास्थिकोटौ गणना कृता।

## ओष्ठस्थानम्

ओष्ठस्थानं तु लोके प्रसिद्धं वर्तते, तद्विषये विवादो न दृश्यते। अतस्तस्य व्याख्यानमनावश्यकमत्र प्रतिभाति।

## नासिकास्थानम्

नासिका अनुनासिकवर्णानाम् अथ च अनुस्वारस्याभिव्यक्तिजनकस्थानभूतम्। किञ्च, अनुनासिकवर्णानाम् आस्यान्तर्भूतानि स्ववर्गानुसारीणि कण्ठादिस्थानान्यपि अभिव्यक्तिजनकानि। यद्यपि लोके 'मुखं पश्य' इत्युक्ते अक्षिनासिकादीनामेव बोधः सञ्जायते, तथापि व्याकरणशास्त्रे, अथ च शिक्षादिग्रन्थेषु मुखान्तरालमेव मुखपदेन गृह्यते, न तु नासिकाद्यङ्गानि; नासिका च आस्यबर्हिर्भूता। व्याकरणशास्त्रे नासिकाया आस्यबाह्यत्वस्वीकारादेव भगवता पाणिनिना 'मुखनासिकावचनोऽनुनासिकः' इति सूत्रे मुखनासिकयोर्द्वयोर्ग्रहणं कृतम्। नासिकाया आस्यत्वस्वीकारे तु मुखशब्देन तस्या अपि ग्रहणे सिद्धे सूत्रे तद्ग्रहणं व्यर्थमेव स्यात्। व्याकरणशास्त्रे मुखान्तरालस्यैव मुखपदेन ग्रहणात् सिद्धान्तकौमुद्यास्तत्त्वबोधिनीव्याख्यायां तुल्यास्येतिसूत्रे "ओष्ठात् प्रभृति प्राक्काकलकात् आस्यम्" इत्युक्तं सङ्गच्छते।

## हनुमूलम्

यद्यपि पाणिनीयशिक्षायामस्योल्लेखो नोपलभ्यते, तथापि प्रातिशाख्येषु ध्वनेरभिव्यक्तौ करणतयाऽस्योल्लेखो दृश्यते। हनुमूलञ्च द्विधा विद्यते—१. ऊर्ध्वं हनुमूलम्, २. अधो हनुमूलञ्च। यद्यपि चरकसंहितायाम् एकमेव हन्वस्थि लिखितं दृश्यते, तथाऽपि हनुमूलन्तु द्विधा प्रतिपादितम्[1]। नूतनाः साम्प्रतिका

१. "एकं हन्वस्थि, द्वे हनुमूलबन्धने"—चरकसंहिता ( प्रथमभागे, शरीरस्थाने शरीराध्याये )

विद्वांसस्तु, द्वे हन्वस्थीति स्वीकुर्वन्ति[1]। १. ऊर्ध्वहन्वस्थि, २. अधो हन्वस्थि च। एवञ्च, हन्वस्थिविषये मतभेदो हनुमूलविषये च मतैक्यं दृश्यते।

तैत्तिरीयप्रातिशाख्ये हनुमूलं कवर्गस्याभिव्यक्तिस्थानं प्रोक्तम्। उक्तञ्च—

'हनुमूले जिह्वामूलेन कवर्गे स्पर्शयति'। ( २।३५ ) इति।

**उरःस्थानम्**

यद्यप्युरः स्थानम् सर्वापेक्षयाऽतीवोपयोगित्वात् सर्वप्रथममस्य व्याख्यानमावश्यकम्, तथापि आस्यबहिर्भूतत्वात् पश्चाद् विचार्यते। उरःस्थानस्य बाह्याभ्यन्तरभेदो विद्यते। बाह्यभागे भूषणादीनि धार्यन्ते। आभ्यन्तरभागे च ज्ञानाश्रययोः जीवात्मपरमात्मनोश्च निवासः फुफ्फुसादीनि च विद्यन्ते। फुफ्फुसादिकं प्रसारणाकुञ्चनक्रियाभ्यां श्वसित्युच्छसिति च।

सरस्वतीनाडीं सम्बद्धा जिह्वा तात्वादिस्थानानि स्पृष्टादिप्रयत्नैः संस्पृश्य विवृत्य च कुण्डलीस्थितां वाचं सुषुम्नामार्गेण अग्निसन्तप्तवायुमाध्यमेन मूर्द्धदेशमानीय सुषुम्नारन्ध्रतालुमार्गेण कण्ठं गतां बहिर्निःसारयति।

उक्तञ्च प्रपञ्चसारतन्त्रे—

समीरिताः समीरेण सुषुम्नारन्ध्रनिर्गताः।
व्यक्तिं प्रयान्ति वदने कण्ठादिस्थानघट्टिताः॥ ५९॥ इति।

यथा ध्वनिप्रेषककेन्द्रस्थानाद् विद्युता सह समरसीभूते सति सक्रमाऽपि वाक् अक्रमा भवति, पुनश्च ध्वनिग्राहकयन्त्रविद्युद्ध्वन्योः पृथक्कर्तृ यन्त्रं विद्युतो ध्वनिं विविच्य पुनस्तां सक्रमां विदधाति। एवं शरीरान्तःप्रदेशेऽपि वर्णाभिव्यक्तिविषये योजना कर्तव्या। वृद्धैः समुपदिष्टा सक्रमा घटपटादिवाक् बुद्धिदेशं प्राणदेशञ्च गता सती अक्रमरूपेण मूलाधारस्थेनाग्निना सह समरसीभूता अक्रमरूपेण तिष्ठति। पुनश्च विवक्षायाम् अग्निसन्तप्तवायुमाध्यमेन तालुदेशं प्राप्य तत्र सक्रमा सती वक्त्राद् बहिरभिव्यज्यते। रुद्रः तालुदेशस्याधिष्ठातृदेवता स्मृतः। सर्वे वर्णाश्च रुद्रशक्तिस्वरूपाः। रुद्रोऽग्निस्वरूपोऽपि स्मृतः। तालुदेशे अष्टारात्मकं चक्रं विद्यते। तालुदेशस्याधिष्ठातृदेवता अग्निस्वरूपो रुद्रः स्वशक्तिस्वरूपान् पञ्चाशद्

---

१. "नासिका का ठूँठदार आधार बनाने वाली बहुसंख्यक आनन अस्थियाँ, घुमावदार गण्डास्थियाँ, प्रत्येक नेत्र को सुरक्षित रखने वाले नेत्रकोटर और ऊर्ध्व हन्वस्थि या ऊपरी जबड़ा भी कपोल के समान ही तन्तुमय जोड़ों द्वारा जमे होते हैं, परन्तु अधोहन्वस्थि या निचला जबड़ा अनेक दिशाओं में गति कर सकता है। जैसे ऊपर नीचे और कुछ सीमातक घूर्णन"।—एडिथ ई० स्प्राउल, एम० डी०. 'मानव शरीर की वैज्ञानिक पुस्तक' पृ० सं० २४१–२४२। अनुवादकः श्रीकृष्णशङ्करः।

वर्णान् तालुदेशे अष्टारात्मकचक्रे[1] अष्टवर्गैः सम्पाद्य[2] षोडशारात्मकण्ठदेशाद् बहिरभिव्यनक्ति। तालुन ऊर्ध्वपटले एव तत्र विद्यमानो रुद्रात्मकोऽग्निरेव अक्रमां वाचं सक्रमां विदधाति। अत्र रुद्रक्रियाशक्त्योः समरसीभावो वैखरीत्युच्यते। अत्र तालुदेशे रुद्र एव ध्वनिग्राहकयन्त्रस्थ ध्वनिविद्युद्विश्लेषणकर्तृयन्त्रस्थानापन्नो बोद्धव्यः। यद्वा, रुद्रेणाधिष्ठितत्वात् ताल्वेव ध्वनिविद्युद्विश्लेषणयन्त्रमत्र स्वीकर्तव्यम्। मानवकृतध्वनिप्रेषकग्राहकयन्त्राणि ईश्वरकृतमुखादियन्त्रवदेव। प्रत्येकं शब्दस्योच्चारणे मूलाधारात् समुत्थितेन वह्निना सन्तप्तात् सोमार्द्धचन्द्राद् अमृतबिन्दवो निपतन्तीति पूर्वं प्रतिपादितम्। द्रुतवृत्त्या उच्चारणे कृते सति अमृतस्य नव विन्दवः, मध्यमायां द्वादश, विलम्बितायाञ्च षोडश अमृतबिन्दवोऽष्टारचक्रे तालुदेशे निपतन्ति। एतत् सर्वम् "तपरस्तत्कालस्य" (पा० सू० १।१।७०) इति पाणिनीयसूत्रस्थ महाभाष्यस्य प्रदीपाख्यटीकायां प्रतिपादितम्।

किञ्च, ऋक्ततन्त्रव्याकरणमपीदं तथ्यं दृढीकरोति। अतएव तस्मिन् व्याकरणशास्त्रे द्वितीयप्रकरणे चतुर्थदशके शाकटायनः—"द्रुतायां मात्रा" (सू० १) इत्युक्तवान्। द्रुतायां मात्रा त्रिकला भवति। पञ्चकला विलम्बितायाम्। "वर्णान्तरं परमाणु" (सू० ४)। वर्णान्तरं परमाणुमात्रं भवति। "तत्कलार्द्धम्" (सू० ३५) स्वरयोरर्द्धमात्रा भवति।

ऋक्तन्त्रप्रातिशाख्ये शौनकश्च—

'तिस्रो वृत्तीरुपदिशन्ति—वाचो विलम्बितां मध्यमां च द्रुताञ्च"। इति। (प० १३, सू० ४६) तिस्रो वृत्तीर्वाच उपदिशन्त्याचार्याः, विलम्बिता बालानामध्यापनादिषूपदिशन्ति, मध्यमाञ्च व्यवहारादिषु, द्रुतामध्ययनस्य बहुरूपाभ्यासे उपदिशन्ति।

---

१. "कण्ठोर्ध्वे परमेशानि लम्बिका चतुरंगुले।
तस्यामष्टदलं पद्मं रसिकादिभिरावृतम्" ॥ इति।

२. "तस्माद् एकांगुलादूर्ध्वं विशुद्धं षोडशारकम्"।
श्रीगोपीनाथकविराजसम्पादिते लुप्तागमसंग्रहे (पृ० १६९)

"सहस्रारं भवेच्चक्रं ताभ्यामुपरि संस्थितम्।
ततश्चक्रात् समुद्भूतं ब्रह्माण्डं तदुदाहृतम्" ॥ १३३ ॥
(श्रीतन्त्रालोकः, चतुर्थाह्निकम्)

ताभ्यां षोडशाराष्टाराभ्यामेव चक्राभ्यां सकाशात् सहस्रारं चक्रं विद्यते। सहस्रारचक्रस्य सकाशादधस्तात् तालुदेशे अष्टारात्मकम् कण्ठदेशे च षोडशारात्मकं चक्रं स्थितम् इति सुतरां ज्ञायते।

"वृत्त्यन्तरे कर्म विशेषमाहुः" ( ऋ० प्रा०, प० १३, सू० ४७ )।

अन्या वृत्तिर्वृत्त्यन्तरम्, तस्मिन् वृत्त्यन्तरे कर्मविशेषमाहुराचार्याः। विलम्बितायां प्रातः सवनं भवति। मध्यमायां माध्यन्दिनं सवनम्। द्रुतायां तृतीयं सवनमित्यादि।

"मात्राविशेषः प्रतिवृत्त्युपैति" ( ऋ० प्रा०, प० १३, सू० ४८ )

वृत्तिं वृत्तिं प्रति प्रतिवृत्ति मात्राविशेषो मात्राधिक्यमुपैत्युपगच्छति। द्रुतायां वृत्तौ ये वर्णास्ते मध्यमायां त्रिभागा अधिका भवन्ति।

एवमुपर्युक्तप्रामाण्येन अमृतबिन्दुक्षरणादेव वर्णोच्चारणशक्तिर्भवतीति निश्चितं जातम्। अयं विषयोऽग्नीषोमवादव्याख्यानावसरेऽत्रैव पूर्वं व्याख्यातः। 'को वर्णः कस्मात् स्थानाद् अभिव्यज्येत' इत्ययं विषयो व्याकरणशिक्षा-प्रातिशाख्यादिषु विशदरूपेण स्पष्टीकृतः। तद्यथा भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्यां सूक्ष्मरूपेण एतत् प्रतिपादितम्। तद् यथा—

"तुल्यास्यप्रयत्नं सवर्णम् ( पा० सू० १।१।९ )

"ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्च—इत्येतद् द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञः स्यात्। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्द्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य।

"यत्नो द्विधा—आभ्यन्तरो बाह्यश्च। आद्यश्चतुर्द्धा, स्पृष्टेषत्स्पृष्टसंवृतविवृतभेदात्। तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। विवृतमूष्मणां स्वराणाञ्च। ह्रस्वस्यावर्णस्य प्रयोगे सम्वृतम्। प्रक्रियादशायां तु विवृतमेव।

"बाह्यप्रयत्नस्त्वेकादशधा—विवारः, सम्वारः; श्वासो नादो घोषः, अघोषोऽल्पप्राणो महाप्राणः, उदात्तोऽनुदात्तः, स्वरितश्चेति।

"खयां यमाः खयः ≍क≍पौ विसर्गः शर एव च।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते॥
कण्ठमन्ये तु घोषाः स्यु सम्वृता नादभागिनः।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः॥

"वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः। पलिक्क्नी, चख्ख्नतुः, अग्ग्निः, घ्घ्नतीत्यत्र क्रमेण क-ख-ग-घेभ्यः

परे तत्सदृशा एव यमाः। तत्र वर्गाणां प्रथमद्वितीयाः खयः, तथा तेषामेव यमाः, जिह्वामूलीयोपध्मानीयौ, विसर्गः शषसाश्चेत्येतेषां विवारः श्वासो घोषश्च। अन्येषां तु सम्वारो नादो घोषश्च। वर्गाणां प्रथमतृतीयपञ्चमाः, प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः। अन्ये महाप्राणा इत्यर्थः"।

वस्तुतस्तु बाह्यप्रयत्नास्त्वेकादशधेति भट्टोजिदीक्षितोक्तिः युक्ता, अचां सम्वारनादघोषप्रयत्नस्वीकारात्। एते उदात्तादयः स्वरधर्माः[1]।

"कादयो मावसानाः स्पर्शाः। य र ल वा अन्तःस्थाः। श ष स हा ऊष्माणः। अचः स्वराः। ≍क≍प इति कपाभ्यां प्रागर्द्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ। अं अः इत्यचः परावनुस्वारविसर्गौ"। इति।

एवमत्र संक्षेपरूपेण स्थानप्रयत्नौ सम्पादितौ। एकस्यैव वर्णस्य स्थानप्रयत्नविषये मतभेदः शिक्षाप्रातिशाख्यादिग्रन्थेषु समुपलभ्यते। अयं विषयो मया विस्तृतरूपेण "शब्दतत्त्वं ( तत्सम्बन्धि ) आधुनिकविज्ञानञ्च" इत्याख्ये स्वशोधग्रन्थे विशदरूपेण प्रतिपादितः। किञ्च, मतभेदानां परिहारः समन्वयश्चैतद् द्वयमपि विशदीकृतम्। तत्रैव एतदीयोंऽशो द्रष्टव्यः। पिष्टपेषणस्य नास्त्यावश्यकता। अकारादिध्वनेरभिव्यक्तिविषये करणस्थानप्रयत्नानां मूलाधारस्थवाय्वग्न्योः ताल्वादिस्थानाधिष्ठातृताञ्च वक्तुरिच्छया मनसः सर्वेषां प्रेरकस्य चिदात्मनश्च सुषुम्नाकुण्डल्योश्च किं कार्यम्? कश्च परस्परं सम्बन्धः?—इत्येतत् सर्वम् आधुनिकध्वनिग्राहकयन्त्राद्युदाहरणमुखेन प्रतिपादितम्। मदुक्तदिशैव च वर्णाभिव्यक्तिविषये योजना कर्तव्या विद्वद्भिः।

### अकुहविसर्जनीयादीनां कथं कण्ठादिसस्थानत्वम्?

अत्रेदं विचारणीयं विद्वद्भिः—अकुहविसर्जनीयानां कथं सस्थानत्वम्? कवर्गस्य तालुस्थानात्, एवं हकारस्य च मूर्द्धस्थानात् कथं न अभिव्यक्तिः? एवं चवर्गादीनां यत् स्थानं शिक्षादिषु प्रोक्तम् तद्भिन्नस्थानात् कथं नाभिव्यक्तिस्तेषामिति चेद्? अत्रेत्थं योजना कर्तव्या—अकुहविसर्जनीयानामस्ति कश्चिद् विशिष्टः परस्परं सम्बन्धः। तत्र अकारादिध्वनेर्द्विधा अभिव्यक्तिः—यात्निकी, अयात्निकी चेति। अयं विषयोऽस्य परिच्छेदस्य प्रारम्भ एव मया प्रतिपादितः। कवर्गहकारविसर्जनीयानामकारादेव अयात्निकी अभिव्यक्तिः। अतो यस्मात् स्थानाद् अकारोऽभिव्यज्यते, तदेव कवर्गादीनामपि यात्निकम् अभिव्यक्तिस्थानम् इच्छाशक्तिरूपाद् ईश्वराद् चवर्गयकारशकाराणाम् अभिव्यक्तिः यत्नं विना सृष्टेरादौ जाता। अतः शरीरान्तःप्रदेशेऽपि इकार-चवर्ग-यकार-शकाराः सस्थानाः। उक्तञ्च श्रीतन्त्रालोकस्य तृतीयाह्निके—

---

१. विषयोऽयं सिद्धान्तकौमुद्याः संज्ञाप्रकरणे शिवदत्तमिश्रविरचितटिप्पण्यां प्रतिपादितः।

यत्तदक्षरमव्यक्तं कान्ता कण्ठे व्यवस्थितम् ।
ध्वनिरूपमनिच्छं तु ध्यानधारणवर्जितम् ॥ १४७ ॥

तत्र चित्तं समाधाय वशयेद् युगपज्जगत् ।
अतएव विसर्गस्य यद्वत् स्फुटा स्थितिः ॥ १४८ ॥

तद्वत् सानुत्तरादीनां कादिसान्ततया स्थितिः ॥ इति ।

विसर्ग एव हकारात्मनाऽभिव्यज्यते । यथा विसर्गः हकारात्मना स्थूलरूपेण स्फुटितः तद्वत् सानुत्तरादयः अकारादिपञ्चकमेव कादिसान्तत्वेन स्फुटितम् । उक्तञ्च—

अनुत्तरात् कवर्गस्य सूतिः पञ्चात्मनः स्फुटम् ॥ १४९ ॥

एवमनुत्तराद् अकाराद् पञ्चात्मनः ( क, ख, ग, घ, ङ ) इत्येवं पञ्चानां सूतिर्भवति । एवं चवर्गादीनामपि विषये बोद्धव्यम् । एवम् अकारादिभ्यः पञ्चभ्य एव कवर्गादीनां पञ्चानाम्, अथ च यकारादीनामुदयोऽभिहितः । अतएव एषाम् 'अकुहविसर्जनीयानां कण्ठः' इत्यादिना सस्थानत्वमुक्तम् ।

एवं चवर्गादीनामपि विषये बोद्धव्यम् । उक्तञ्च श्रीतन्त्रालोकस्य षष्ठपटले—

कादिपञ्चकमाद्यस्य वर्णस्यान्तः सदोदितम् ।
एवं सस्थानवर्णानामन्तः सा सारसंस्थितिः ॥ २२२ ॥ इति ।

आद्यस्य = समेषां वर्णानामभिभूतस्य अकारस्य अन्तः कादिङान्तपञ्चकं संस्थितम् । तेन यदेव अकारस्योदयस्थानम्, तदेव कवर्गस्येति । सस्थानवर्णानामित्यस्य इकारादीनामित्यर्थः । तद् इकारोदयस्थाने चवर्गस्य यकारशकारयोश्चोदय इत्यादिक्रमः[1] ।

## सूक्ष्मरूपेण वर्गभेदनिरूपणम्

अहमिति प्रत्याहारान्तर्गताः अकारादिहान्ता ध्वनयः स्वाभिव्यक्तिजनकस्थानेभ्योऽभिव्यक्ताः अष्टवर्गेषु संविभक्ता इति पूर्वं प्रथमपरिच्छेदे एव प्रतिपादितम् । क्वचित्तु नववर्गात्मनाऽपि एतेषां वर्णानां विभाजनं समुपलभ्यते । तद्यथा मालिनीविजयतन्त्रे[2] । प्रपञ्चसारतन्त्रे तु 'अ क च ट त पयाद्यैः सप्तभिवर्णवर्गैः' इति प्रथमे मङ्गलाचरणश्लोके सप्तवर्गात्मिका पठ्यते । 'सप्तभिवर्णवर्गैः' इति प्रथमे मङ्गलाचरणश्लोके सप्तवर्गात्मिका पठ्यते । सङ्केतपद्धतिमनुसरद्भिः शिवानन्दविद्यानन्दामृतानन्दादिभिरपि यथायथमष्टवर्गात्मिका नववर्गात्मिका च मातृका व्याख्यायते । अत्र वर्गभेदस्य यद् वैषम्यम्, तत्र ऐतिहासिकम्, साम्प्रदायिकं

---

१. श्रीतन्त्रालोके, ( तृतीयाह्निके श्लो० १६२–१६४ ) । इत्यत्रापि एतदीयोंऽशो द्रष्टव्यः ।
२. मालिनीविजयोत्तरे ३ । ११ ।

च कारणम्। शारदातिलके (७।१४ इत्यत्र) तु द्वात्रिंशदक्षरा नववर्गमयी भूतलिपिरुपदिष्टा। तत्रायं वर्णविन्यासक्रमः—

| | |
|---|---|
| अ इ उ ऋ ऌ | इति प्रथमो वर्गः |
| ए ऐ ओ औ | इति तृतीयो वर्गः |
| ङ क ख घ ग | इति चतुर्थो वर्गः |
| ञ च छ झ ज | इति पञ्चमो वर्गः |
| ण ट ठ ढ ड | इति षष्ठो वर्गः |
| न त थ ध द | इति सप्तमो वर्गः |
| म प फ भ ब | इति अष्टमो वर्गः |
| श ख स | इति नवमो वर्गः |

भवतु नाम, वर्णसङ्घट्टशरीराणां सप्तकोटिमहामन्त्राणां जननी या लोकमातृका, तस्याः स्वरुचिवैचित्र्याद् विभिन्नरूपेण वर्गीकरणम्। एतत्सर्वं रुचिवैचित्र्याद् बोद्धव्यम्।

अकारादिध्वनीनां स्वरादिसंज्ञाविचारः एतत्सर्वं यद् वर्णगतमुक्तम् तत्सर्वमुदयास्तपूर्वं स्वरमयं=स्वराणामेवान्तःशक्त्यात्मनाऽवस्थानम्। अकारादय एते स्वरा व्यञ्जनानां व्यञ्जकत्वात् स्वतन्त्रत्वाच्च स्वरनाम्ना, कादयश्च अकारादिस्वरे व्यङ्ग्यत्वात् व्यज्यन्त इति व्यञ्जननाम्ना प्रोच्यन्ते। अभिव्यक्तेः पूर्वं स्वाभिव्यक्तिजनकस्थानैः सह जिह्वाया मूलादिभागानां तत्तत्स्थानैः सह स्पर्शात् कादिमान्ता ध्वनयः स्पर्शसंज्ञया व्यपदिश्यन्ते। इच्छाद्यन्तर्गतत्वेन यादिवान्तं (य, र, ल, व) चतुष्कमन्तःस्थसंज्ञं प्रसिद्धम्। शादिहान्तवर्णचतुष्कञ्च ऊष्मवायुमाध्यमेनोच्चारणात् स्वोष्मसंज्ञया व्यवह्रियते।

मानवीयशरीरान्तःप्रदेशात् कथमकारादिध्वनेरभिव्यक्तिः ?— इत्येतत् सर्वम् आधुनिकध्वनिग्राहकयन्त्राद्युदाहरणमुखेन प्रतिपादितम्। पशुपक्ष्यादिजीवानामपि विवक्षायां शरीरान्तःप्रदेशे मनुष्यवदेव सर्वाश्चेष्टा जायन्ते, किन्तु मूलाधारादिस्थानस्य स्वरूपं मानवीयमूलाधारादिभ्यो भिन्नम्। तद्यथा त्रिशिखब्राह्मणोपनिषदि मन्त्रभागे—

देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम्।
त्रिकोणं द्विपदामन्यच्चतुरस्रं चतुष्पदाम्॥ ५६॥
वृत्तं विहङ्गमानां तु षडस्रं सर्पजन्मनाम्।
अष्टास्रं स्वेदजानां तु तस्मिन् दीपवदुज्ज्वलम्॥ ५७॥ इति।

अत्र मनुष्यादीनां यद् अग्निमण्डलस्वरूपं निरूपितम्, तत्र भेदो दृश्यते। एवमेव नाभिस्थानस्यापि मनुष्यपशुपक्ष्यादिजीवानां देहे भेदो विद्यते। तत्स्वरूपमुक्तं तत्रैव ग्रन्थे—

कन्दस्थानं मनुष्याणां देहमध्यं नवाङ्गुलम्।
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम्॥ ५८॥
अण्डाकृति तिरश्चां च द्विजानाञ्च चतुष्पदाम्।
तुन्दमध्यं यदिष्टं वै तन्मध्यं नाभिरिष्यते॥ ५९॥ इति।

किञ्च, पशुसरीसृपमण्डूकादिजीवानां मध्ये सजातीयानां एकसदृश एव ध्वनिः, यथा एकस्याः गोः ध्वनिस्तथा अन्यस्या अपि। किन्तु मनुष्येष्वेवं न दृश्यते। दृश्यते च देवदत्ताद् यज्ञदत्तस्य भिन्नो ध्वनिः। न केवलं मनुष्यपशुपक्ष्यादय एव स्वान्तर्भावनामभिव्यञ्जयितुं शब्दे प्रयुञ्जते, अपि तु स्थावराः चेतनावन्तश्च मूका वृक्षादयोऽपि परस्परं सुखदुःखादिकं वाचा निवेदयन्ति। उक्तञ्च स्वच्छन्दतन्त्रस्य चतुर्थे पटले—

वर्णाः शब्दात्मकाः सर्वे जगत्यस्मिंश्चराचरे॥ २४०॥

इत्युक्तम्। अचरपदेन वृक्षादिस्थावराणां ग्रहणम्। वस्तुतस्तु सर्वशक्तिमयी चिन्मयी प्रत्याहृतसमग्रवाच्यवाचकात्मिका पूर्णाहन्ता सर्वत्र व्याप्ता। तस्या यावानंशो मूलाधारत्वावच्छिन्नः तावानंशो परावागाख्यया, यावाँश्चांशो मणिपूरत्वावच्छिन्नस्तावानंशः पश्यन्त्यात्मना, यावाँश्चांशो हृद्देशावच्छिन्नस्तावानंशोऽनाहताख्या, विवक्षायाञ्च सत्यां कण्ठताल्वाद्यवच्छिन्नांशो वैखर्यात्मना प्रसिद्धः। पूर्णाहन्तास्वरूपस्य ध्वनेः सर्वत्र व्यापकत्वादेव ध्वन्यभिलेखनयन्त्रेष्वपि अभिव्यक्तिसाधने सति कण्ठताल्वादच्भावेऽपि वर्णा अभिव्यज्यन्ते। नटराजशिवस्य ढक्कानादात् चतुर्दशपाणिनीयसूत्राणां प्रादुर्भाव एतद् मदुक्तं तथ्यं पोषयति। किन्तु ध्वनेर्वास्तविकस्वरूपस्य साक्षात्कारो मूलाधारे अथ च शिरःप्रदेशसहस्रदलकमले एव सम्भवः।

अभिव्यक्ता अकारादिध्वनयः स्थानात् स्थानान्तरं गच्छन्ति, कर्णविवरमाध्यमेन च अन्तःप्रविश्य उच्चारयितुः मनःस्थितां भावनामावेदयन्ति। अतः स्थानात् स्थानान्तरं तस्य सञ्चरणरीतिप्रतिपादनमावश्यकं प्रतिभाति।

॥ इति शम्॥

# ध्वनिसञ्चारविधिः

## ( चतुर्थः परिच्छेदः )

हंसोपादानभूताः अस्माकं मुखात् प्रोच्चरिता यद्वा यत्र कुत्रापि समभिव्यक्ताः प्राण्यन्तःस्थितभावार्थसम्पृक्ता अकाराद्यात्मका यद्वा अनर्थका ध्वनयो देशाद्देशान्तरं केन विधिना प्रसरन्तीत्येव 'ध्वनिसञ्चारविधिः' इत्यस्य व्याख्याने तात्पर्यं सन्निहितम् । अस्माकं शरीरान्तःप्रदेशे मूलाधारस्थकुण्डलीतः आस्यपर्यन्तं घटपटादिशब्दाः कथं सञ्चरन्तीत्ययं विषयो बहिर्देशे ध्वनिसञ्चारः कथं भवतीतीमं विषयं समाधातुं समर्थः । शरीरान्तःप्रदेशे ध्वनिः केनचिन्माध्यमेनैव मूलाधाराद् आस्यं समागच्छति, तानि माध्यमानि यथा—अग्नीषोमौ, प्राणवायुः, सुषुम्ना, आकाशम् इति । एवं बहिर्देशेऽपि पृथ्वीजलतेजोवाय्वादिमाध्यमेन ध्वनिः प्रसरति । 'ध्वनिर्देशाद्देशान्तरं गन्तुं माध्यमम् अपेक्षते' इति भौतिक-वैज्ञानिका आमनन्ति । अमुमेव विषयमवलम्ब्य पातञ्जलयोगदर्शनादिदृशा स्वमतं विदुषां पुरःसरसि समुपस्थापयामि । अत्र प्रथमं नूतनविदुषां मतं प्रस्तौमि ।

भौतिकशास्त्रनिपुणा विद्वद्वरिष्ठा आधुनिका वैज्ञानिकाः 'अकारादिध्वनयो देशान्तरं गन्तुं माध्यमम् अपेक्षन्ते'— इत्येवं मन्यन्ते । अत्रैव च तेषां सुदृढो विश्वासो विद्यते । इमं सिद्धान्तं दृढ़ीकर्तुं निम्नोक्तं प्रमाणं प्रस्तूयते ।

**ध्वनिसञ्चारमाध्यमविचारः**

विद्युद्घटिकां यद्वा समयसूचिकां घटिकां काचनिर्मितपात्रे सन्निवेश्य तत्पात्रं निर्वातकर्तृयन्त्रोपरि च संस्थाप्य काचपात्रावच्छिन्नं वायुं तेन यन्त्रेण शनैः शनैः निःसारयेत् । काचपात्रान्तर्गतस्य वायोः क्रमशः शनैः शनैर्बहिर्निःसरणानुसारेण ध्वनिरपि क्रमशो मन्दं मन्दं श्रूयते । यदि तत्पात्रावच्छिन्नं वायुं निःशेषतया कोऽपि बहिष्कर्तुं प्रभवेत्, तर्हि ध्वनेः श्रवणमणुमात्रमपि न स्यात् । परन्त्विमामवस्थां निष्पादयितुमशक्यम्; यतो हि काचपात्रान्तर्गतं वायुं निःशेषतया निःसारयितुं कृतेऽपि प्रयत्ने तस्य कोऽप्यंशोऽवशिष्यत एव । यदि काचपात्रे शनैः शनैः वाष्पं प्रवेशयेत्, तर्हि ध्वनिरपि क्रमशः उच्चैः श्रूयते । एतावताऽवगम्यते यद् ध्वनिर्देशान्तरं सञ्चरितुं माध्यममपेक्षते । अयं विषयो माध्यमिक-भौतिकविज्ञानविषयेषु बहुशः प्रतिपादितो दृष्टिपथं समायाति । यथा तन्माध्यमस्य चैकं विवरणमत्र प्रस्तूयते ।

## विभिन्नमाध्यशेषु ध्वनेर्वेगः[1]

Velocity of sound in different Media.

| | | | | |
|---|---|---|---|---|
| वायौ | ३३२ | क्रोशार्द्धं[2] | प्रतिविपलं[3] | पर्यटति । |
| उदजने[4] | १२७० | " | " | " |
| ओषजने[5] | ३१६ | " | " | " |
| जले | १४३५ | " | " | " |
| ताम्रे | ३६०० | " | " | " |
| लोहधातौ | ५०० | " | " | " |
| स्फटीमये[6] | ५१०० | " | " | " |
| सिन्दूरवृक्षकाष्ठे[7] | ४०० | " | " | " |
| दारुगन्धायाम्[8] | ३३०० | " | " | " |
| सिक्थके[9] | ५५०० | " | " | " |
| भारतीयतरलद्रव्ये[10] | ४३ | " | " | " |

## विद्युत्

भौतिकैरपरमपि विद्युत्तात्त्वं ध्वनिसञ्चारस्य माध्यममनुसन्धीयति स्म। इदञ्च माध्यमम् इतिवृत्तप्रेषककेन्द्रस्थानेषु विशेषरूपेण प्रयुज्यते।[11] भौतिकविदुषामिदमनुसन्धानं न किमपि नवीनं तथ्यम्; अग्नीषोमात्मकमिदं जगत्, "सूर्य आत्मा जगतस्तस्थुषश्च", "सूर्येण प्रसूता जनाः" इत्यादिवाक्यप्रामाण्येन अस्यानुसन्धानस्य प्राचीनत्वात्।

आधुनिकमतानुसारेण जगति समेषां पदार्थानां सृष्टिर्निर्माणं वा त्रिभिः तत्त्वैः स्वीक्रियते। अयं विषयः प्रथमपरिच्छेदे पराया वाचः सर्वव्यापकत्वनिरूपणावसरे प्रतिपादितः। समेषां पदार्थानां परमाणोरन्तःप्रदेशे धनविद्युद्, ऋणविद्युच्चेति तत्त्वद्वयम्। ऋणविद्युतः परमाणोर्बहिःप्रदेशं सततं परिक्रामन्ति। यद्यपि ऋणविद्युत्-

---

१. विभिन्नमाध्यमेष्वयं ध्वनेर्वेगः कुमार एवं भार्गव इति विद्वद्द्वयकृतं 'सरलभौतिकी' नामकं ग्रन्थमाश्रित्य प्रतिपादितः। तत्र ४८५तमे पृष्ठे एतदीयोंऽशो द्रष्टव्यः।

२. मील। ३. सेकेण्ड। ४. हाइड्रोजन। ५. आक्सीजन।

६. आलमोनियम। ७. ओक। ८. चीड़। ९. कांच। १०. रबर।

११. रमेशचन्द्रविजयकृत 'रेडियो सर्विसिंग' (पृ० ४) इत्यस्मिन् ग्रन्थे एतदीयोंऽशो द्रष्टव्यः।

कणाः, सततं स्वकेन्द्रमभितो गतिमन्तस्तथापि सामान्यावस्थायां तेषु कोऽपि वैद्युतः प्रभावो न स्फुटति। रासायनिकक्रियया यदा ऋणविद्युता कणेषु विशेषावस्था ( कम्पनघर्षणादिकम् ) क्रियते, तदा विद्युद्धारा सर्वतो दिक्षु प्रवहति। यथा पाषाणद्वयस्य परस्परं सङ्घर्षणेन ततो विद्युन्निःसरति। ध्वनिप्रेषककेन्द्रस्थानेषु रासायनिकक्रियया समुत्पन्ना विद्युत् सर्वतो दिक्षु प्रवहति। न च विद्युति प्रवहमाणायां रात्रौ सर्वतः प्रकाशः स्यादिति वाच्यम्; विद्युद्दूर्जसः प्रकाशरूपेण परिवर्तनाभावात्। दर्पणनिर्मितकुतुपान्तरालस्थ[1] सूक्ष्मतन्तुना[2] सह विद्युतः संयोगे सत्येव तस्याः प्रकाशरूपेण परिवर्तनात्।

यद्यपि सर्वेषां पदार्थानां परमाणवो बहिर्भागत ऋणविद्युताऽऽविष्टाः, किन्तु परिचालकपदार्थस्य एव विद्युद्धारा समुत्पादयितुं शक्यते, नान्येभ्यः। कस्यचिदपि परिचालकशक्तियुतस्य पदार्थस्य शिरोभागे विद्युद्ग्राहकबलस्य[3] प्रयोगेण तस्माद् विद्युद्धारायाः परिवहनं प्रारभ्यते। परिचालकपदार्थो यथा—रजतधातुः, ताम्रकमित्यादि।

ताम्रकाख्यो धातुस्तु सम्यक् प्रकारेण विद्युत्कणान् निर्मोक्तुमर्हः। अतएव तान्त्रिके प्रयोगे मारणमोहनादिशक्तियुतं हनुमदादियन्त्रं ताम्रफलके निर्माय तत् पूज्यते। यथाविधि यथाकामञ्च यन्त्रे पूजिते सति सर्वम् ईप्सितं पूर्णतां भजति। किञ्च, भूर्जादिपत्रे कामप्रपूरकान् मन्त्रान् समुल्लिख्य ताम्रनिर्मितयन्त्रे ( पुटके ) सम्पुटीकृत्य कण्ठाद्यंगेषु धार्यते। अत्र को हेतुः ? अस्येदमेव कारणं यद् यथामन्त्रं संशोधितं ताम्रफलकं विद्युद्धारां प्रमुञ्चति। तन्माध्यमेन च मन्त्रघटका ध्वनय ईप्सितवस्तुदेशं प्राप्य मनोऽभिलषितसानीय कामं पूरयन्ति। अतस्ताम्रधातुर्विद्युद्धारां निर्मोक्तुमर्हतीत्यस्य गवेषणा आधुनिकविज्ञानस्य प्रारम्भाद् अतीव पूर्वं भारतीयैर्महर्षिभिः कृता। भारतीयानां कृते नेदं किमप्यभूतपूर्वमनुसन्धानम्। येभ्यो धातुभ्यो विद्युत् प्रमुच्यते, यद्वा विद्युतः सञ्चारस्ते धातवः परिचालकनाम्ना अभिधीयन्ते। अपरिचालको धातुर्यथा—अभ्रकमित्यादि। परन्तु विद्युद्धारायाः प्रसारणे द्वावपि पदार्थौ प्रयुज्येते। द्वयोर्मध्ये परिचालकपदार्थेभ्यो विद्युद्धारा उत्पाद्यते। अपरिचालकपदार्थैश्च तस्या नियन्त्रणं क्रियते। केचित्तु पदार्था उभयात्मकाः, तैश्च परिवर्तनकर्तृयन्त्राणि निर्मीयन्ते। अद्यतने युगे ध्वनिप्रेषककेन्द्रस्थानेषु येभ्यः परिचालकपदार्थेभ्यो विद्युद्धारा समुत्पद्यते, त एव ताम्ररजतादिपरिचालकपदार्था निगमागमादिषु मारण-सम्मोहन-वशीकरणादियन्त्रनिर्माणार्थं प्रयुक्ताः। प्राचीननवीनोभयमतयोः समीक्षयेदमेव समायाति यत् तान्त्रिकविधिना ताम्रादिफलकेषु उट्टङ्किता यन्त्रस्था रेखयाऽङ्किता ध्वनयः

---

१. बल्व। २. फिलामेन्ट। ३. एलेक्ट्रामोटिव फोर्स।

ताम्रादिफलकनिष्ठविद्युन्माध्यमेन परितः सञ्चरन्ति। परिचालकपदार्थेषु शालग्रामशिलाया अपि परिगणना कर्तव्या। नूतनवैज्ञानिकैस्तु अज्ञानात् न कृता। तस्यां शिलायां महती विद्युच्छक्तिर्विद्यते। शालग्रामशिलासु विशुद्धं सुवर्णं प्रच्छन्नरूपेण अन्तर्निहितं भवति। सुवर्णविद्युदुत्पादनेऽतीव क्षममिति नूतनविज्ञानविदुषां न तिरोहितम्। तस्यां महत्या विद्युच्छक्तेः सत्त्वादेव सा शिला भगवद्विग्रहस्वरूपा मन्यते भारतीयैर्महर्षिभिः। अकालमृत्युहर्तृत्वं सर्वव्याधेरपनोदनत्वञ्चेत्यादि सर्वाः याः क्रियाः शालग्रामशिलाभिः सम्पाद्यते सा स्वनिष्ठविदद्युच्छक्तिमहिम्नैव। उक्तञ्च—

अकालमृत्युहरणं सर्वव्याधिविनाशनम्।
शालग्रामशिलापेयं पुनर्जन्मविनाशनम्॥ इति।

इयं शालग्रामशिला गण्डकीत्याख्ययां नद्यां बहुशः समुपलभ्यते। यथा नूतनवैज्ञानिकैः परिचालकपदार्थेभ्यो रासायनिकक्रियया विद्युत् समुत्पाद्यते, तथैव आर्या यथाविधिसमर्चनादिना शालग्रामशिलाभ्यः स्वकामनामाप्नुवन्ति। सा च शिला अभीष्टवस्तुप्रापणरूपक्रियां विदद्युच्छक्त्यैव सम्पादयति। ऋग्वेदे अग्निद्वारा अतीव गोप्यस्यापि धनस्य प्रापणत्वं प्रोक्तमित्यग्रेऽत्रैव प्रतिपादयिष्यते। शालग्रामशिला कृष्णवर्णा अग्नेः सप्तजिह्वासु मध्ये एका काली जिह्वा। उक्तञ्च ऋग्वेदस्य दशमे मण्डले--

'सप्तस्वस्तृररुषीर्वावशानौ'। इति।

सप्तस्वस्तृरित्यस्य स्वयं सारिणी गमनशीलेत्यर्थः। उभयोरेकरूपत्वाच्च शालग्रामशिला अग्नेः कालीत्याख्यजिह्वास्वरूपा बोद्धव्या। एवं नर्मदानद्यां समुपलभ्यमानानि यानि ज्योतिर्लिङ्गानि, तास्वपि महान् विदद्युद्राशिः सन्निहितः। अत एव तत् पाषाणं ज्योतिर्लिङ्गमिति प्रोच्यते। इयमपि शिला परिचालकपदार्थान्तर्गतभूता, अपि च सर्वकामप्रदा।

एवं ध्वनिसञ्चारमाध्यमभूतेषु विदद्युतः तन्मोचकपदार्थानाञ्च महत्त्वमुपयोगित्वञ्च प्राच्यपाश्चात्त्योभयविदुषां मते सर्वातिशायि। एलाइड एडिशनाख्यो वैज्ञानिको निखिले विश्वे विद्युतः सर्वश्रेष्ठ आविष्कारकोऽभूत्। एतेन महोदयेन विदद्युतः सहस्रैकभेदा गवेषिताः।

भारतवर्षीयैरपि महर्षिभिः विद्युतो बहवो भेदा अन्वेषिताः। 'अग्निरेव विद्युद्रूपेण जनिं लभते। इत्यस्माकम् ऋगादिवेदानां सिद्धान्तः अस्याग्नेस्त्रीणि जन्मस्थानानि, तद्यथा—समुद्रे वडवानलरूपेणेत्येकं जन्म, द्युलोके आदित्यात्मना द्वितीयम्, अन्तरिक्षे वैद्युताग्निरूपेण तृतीयम्। एवमग्निस्त्रेधात्मानं विभज्य त्रिषु स्थानेषु वर्तते। उक्तञ्च ऋग्वेदस्य प्रथममण्डले—

त्रीणि जाना परिभूषन्त्यस्य समुद्रमेकं दिव्येकमप्सु ।
पूर्वमनुप्रदेशं पार्थिवानामृतून प्रशासद्वि दधावनुष्टुप् ॥
( ऋ०वे०, म० १, सू०९४, म० ३ )

यद्यप्यग्निः स्वरूपेणैक एव, तथापि प्रयोगभेदाद् उपाधिभेदाच्च पावकादि-विशेषणभेदाद्वा तस्य बहुविधत्वं बोद्धयम् । ऋग्वेदस्य प्रथममण्डले अग्नेर्बहवो भेदाः प्रोक्ताः । तद्यथा—

देवदूतः[1], हव्यवाट्[2], सुसमिद्धः[3], तनूनपात्[4], नराशंसः[5], ईलितः[6], र्वाहः[7], नक्तः[8], ऊष्मा[9], इला[10], सरस्वती[11], त्वष्टा[12], वनस्पतिः[13], स्वाहा[14], सप्तस्वसा[15], मही[16] इति ।

१. "अग्निदूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम्"—( ऋ० वे०, म० १, सू० १२ )

२. "अग्निमग्निं हवीभिः सदा हवन्तं विश्वपतिम् ।
हव्यवाहं पुरुप्रियम् ।"—ऋ० वे०, म० १, सू० १२, म० २ )

३. "सुसमिद्धो न आवह देवां अग्ने हविष्यते ।
होतः पाक यक्षि च"—( ऋ० वे०, म० १, सू० १३, म० १ )

४. "मधुमन्तं तनूनपाद् यज्ञं देवेषु नः कवे ।
अद्या कृणुहि वीतये"—( ऋ० वे०, म० १, सू० १३, म० २ )

५. "नराशंसमिह प्रियमस्मि यज्ञ उपहूये मधुजिह्वं हविष्कृतम् ।"
( ऋ० वे०, म० १, सू० १३, म० ३ )

६. "अग्ने सुखतमे रथे देवा ईलित आवह । असि होता मनुर्हितः ।"
( ऋ० वे०, म० १, सू० १३, म० ४ )

७. "स्तृणीत र्बाहि रनुष घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम्" ।
( ऋ० वे०, म० १, सू० १३, म० ४ )

८, ९. "नक्तोषसा सुपेशसास्मिन् यज्ञहूये । इदं नो र्वाहिरासदे ।"
( ऋ० वे०, म० १, सू० १३, म० ७ )

१०, ११, १६. "इला सरस्वती मही तिस्रो देवीर्मयो भुवः । र्बाह सीदन्त्वस्रिधः" ।
( ऋ० वे०, म० १, सू० १३, म० ९ )

१२. "इह त्वष्टारमग्नियम्"—( ऋ० वे०, म० १, सू० १३, म० १० )
१३. "अवसृजा वनस्पते"—( ऋ० वे०, म० १, सू० १३, म० ११ )
१४. "स्वाहा यज्ञं कृणोत नेन्द्राय"—( ऋ० वे०, म० १, सू० १३, म० १२ )
१५. "सप्तस्वसृ ररुषीः"—( ऋ० वे०, म० १०, सू० ५, म० ५ )

एतेषामग्नीनां कार्याण्यपि परस्परं भिन्नानि। विस्तरभयाद्, अप्रासङ्गिकत्वाच्च अत्र न विचार्यते। किञ्च, विद्युद्द्वारा सन्देशवाहकानां वर्णपदवाक्यात्मनां मनोरञ्जनसमर्थानां सङ्गीतवाद्यादिध्वनीनाञ्च देशाद् देशान्तरं प्रेषणस्य रीतिर्व्यवहारो वा पुरातनः। इदं तथ्यम् ऋग्वेदस्य बह्व्यः ऋचः प्रतिपादयन्ति। अयं विषयोऽग्रे "प्राचीनकालिकध्वनिग्राहकयन्त्रादिविचारः" इत्यस्मिन् परिच्छेदे प्रतिपादयिष्यते॥

अन्तरिक्षे स्थितो यो वैद्युताग्निः, तस्मिन् ध्वनिप्रेषणादिकार्यं कर्तुं महती शक्तिर्विद्यते। उक्तञ्च ऋग्वेदस्य प्रथममण्डले—

सप्त स्वसृररुषीर्वावशानो विद्वान् मध्व उज्जभारकम्।
अन्तर्येमे अन्तरिक्षे पुराजा इच्छन् वव्रिम विदत्[1] पूषणस्य॥ इति।
( ऋ० वे०, म० १०, सू० ५, म० ५ )

पुराजाः पुराजातः पुराजाः सोऽग्निर्द्यावापृथ्व्योरन्तर्मध्येऽन्तरिक्षे स्थितास्ता जिह्वा येमे=नियमितवान्। अत्र 'इच्छन्' 'वव्रिम', 'पूषणस्य', 'उज्जभारकम्' इत्यादिवाक्यैरन्तरिक्षस्थाया विद्युतः सामर्थ्यं वर्णितम्। अयमेव वैद्युताग्निः ध्वनितरङ्गानपि वोढुं क्षमः। अन्तरिक्षे वैद्युतरूपेण वर्तमानमिममग्निं मेघेष्ववस्थिता आपः माध्यमिका वाक् च मित्रं सखिभूतं कुर्वन्ति। अर्थात् अन्तरिक्षस्थो वैद्युताग्निः मेघेष्ववस्थितानाम् अपां माध्यमिकाया वाचश्च सखा। उक्तञ्च ऋग्वेदस्य प्रथममण्डले—

स प्रत्नथा सहसा जायमानः सद्यः काव्यानिवलधत्त विश्वा।
आपश्च मित्रश्च घिषणा च साधन देवा अग्निं धारय॥ इति।
( ऋ० वे०, मं० १, सू० ९६, म० १ )

अत्र घिषणापदं लुप्तषष्ठीकं माध्यमिकाया वाचश्चार्थे गृह्यते। वैद्युताग्निना सह वाचः सखित्वेन 'अन्तरिक्षे वाक् संश्लिष्टा विद्युत् विद्यते' इति प्रमाणीभवति।

---

१. अत्र सायणाचार्यः—वावशानः कामयमानो वाश्यमानः स्तोतृभिः स्तूयमानो वा विद्वान् वा सर्वं जानानः सोऽग्नि ररुषीरारोचमानः सप्तसंख्याकाः स्वसृः स्वयं सारिणिः काली, कराली चेत्यादिकाः सप्तजिह्वा मध्वो मदूकराद् उज्जभार। उज्जहार=ऊर्ध्वं हृतवान्। यज्ञे स्वतेजसा प्रादुर्भूत इत्यर्थः। किमर्थम् ? कम्, सुखेन दृशे सर्वेषामेव पदार्थानां दर्शनार्थम्। किञ्च, पुराजा=पुराजातः सोऽग्निर्द्यावापृथ्व्योरन्तर्मध्येऽन्तरिक्षे स्थितस्ता जिह्वा येमे=नियमितवान्। सर्वत्र तेजोयुक्तो वर्तते इत्यर्थः। अपि चेच्छेव यजमानान् कामयमानोऽग्निः पूषणस्य। पूषेति पृथ्वीनाम। पार्थिवस्य लोकस्य वव्रिरूपं पृश्निवर्णमविदत=प्रायच्छत।

प्राचीनकाले ऋगादिवेदेषु ध्वनिसञ्चारविषये 'विद्युत् वाचः सखिभूता यद्वा मित्रम्' इत्येवं व्यवहारः। सम्प्रति तु भौतिकवैज्ञानिकैः 'विद्युद् ध्वनिसञ्चारस्य माध्यमीभूता' इत्येवं व्यवहारः क्रियते। इमौ व्यवहारौ सम्प्रदायभेदाद् बोद्धव्यौ। उभयोः व्यवहारयोरेकमेव स्वारस्यं विद्यते। ऋग्वेदे प्रतिपादिता एते एव वाचः सखिभूता आन्तरिक्षा विद्युत्तरङ्गा आधुनिकै आन्तरिक्षरेडियोतरङ्गनाम्नाऽभिधीयन्ते। ऋग्वेदस्य प्रथममण्डले षण्णवतितमे सूक्ते प्रथममन्त्रे प्रतिपादिता विद्युदेव नूतनविज्ञानसम्प्रदाये रेडियो-तरङ्गनाम्ना प्रसिद्धिमागता। इयञ्च आन्तरिक्षा विदद्युद् देवानां वाचं भूलोकादिकं वहतीत्यपि विदांकुर्वन्तु नूतना विद्वांसः। अतएव उपर्युद्धृतायाम् ऋचि 'देवा अग्निं मित्रं धारयन्' इत्युक्तम्।

माध्यमिकवाचा संश्लिष्टवैद्युताग्नितरङ्गविषये रेडियोतरङ्गनामकानि बहूनि गवेषणानि कृतानि नूतनैः विद्वद्भिः। आकाशीयपिण्डेभ्यः बाह्यादन्तरिक्षाच्च एते तरङ्गा उत्सृज्यन्ते। एतेषां माध्यमिकध्वनितरङ्गाणां[1] प्रकाशतरङ्गैः सह (विद्युत्तरङ्गैः सह) अभेदसम्बन्धो विद्यते। उभावपि तरङ्गौ विद्युच्चुम्बकीयविकिरणस्वरूपाः ये प्रतिविपलं १८६ यद्वा २०० क्रोशार्धं पर्यटन्ति, भाषणसंगीतादीनि ध्वनिप्रेषकयन्त्रद्वारा एभिर्विद्युत्तरङ्गैः प्रेष्यन्ते। अयमेव एतेषां विद्युत्तरङ्गाणां व्यावहारिके जगति सदुपयोगः। १९३०तमखीष्टाब्दपर्यन्तं ध्वनिप्रेषकयन्त्रद्वारा संगीतादिप्रसारणक्रियायाः प्रगतिर्बभूव। परन्तु बाह्यादन्तरिक्षात् समागच्छतो रेडियो-तरङ्गस्य विषये न किमपि ज्ञानमासीत्। ऋग्वेदयुगे अन्वेषितानाम् एतेषाम् अन्तरिक्षविद्युत्तरङ्गाणां ज्ञानं भूलोके चिरकालाद् विलुप्तम्। ऋग्वेदप्रतिपादितमिमं माध्यमिकवाक्-संश्लिष्टं विद्युत्तरङ्गं नूतना वैज्ञानिका न जानन्ति स्म। १९३१तमईशाब्दे जैस्कीत्याख्यो वैज्ञानिकः 'वियद्गङ्गातः केचिद् रेडियोतरङ्गाः भूलोकं समागच्छन्ति' इति जनान् विज्ञापयामास। किन्तु वैज्ञानिका एनद् विज्ञापनं हास्यास्पदं मत्वा न सत्यतया जगृहुः। द्वितीयमहायुद्धे अस्यानुसन्धानं बहवो वैज्ञानिकाः कृतवन्तः। तदा जैस्कीवैज्ञानिककृतानुसन्धानं सत्यमिति स्वीकृतम्। एते माध्यमिकवाक्संश्लिष्टा विद्युत्तरङ्गाः स्वशक्त्या भूलोकीयध्वनिग्राहकयन्त्रतरङ्गान् प्रतिघ्नन्तीत्यस्याप्यनुसन्धानं केनचिद् यन्त्रेण वैज्ञानिकैः कृतम्।

अन्तरिक्षस्य कस्माद् देशाद् इमे तरङ्गाः समायान्तीति ज्ञानार्थं रेडियोदूरवीक्षणयन्त्रमपि अनुसन्दधति स्म। १९४४तम ईशाब्दे अमेरिकादेशवास्तव्यो ग्रोटरेवर्डः, अथ च १९४६तम ई० ब्रिटेनदेशीयाः जे० एस० ही०. जे० डब्लू० फिलिप्सः, एस० जे० पार्सनश्च—एते सर्वे वैज्ञानिकाः—"आकाशगङ्गा रेडियोध्वनि-

---

१. रेडियो तरङ्ग।

तरङ्गाणामुत्सर्जनस्य महत्त्वपूर्णं स्रोतोऽस्ति। ध्रुवराशिस्थनक्षत्राणि अत्र विषयेऽतीवोपयुक्तानि। अन्तरिक्षे शतद्वयं रेडियोनक्षत्राणि सन्ति"—इत्येवमप्यन्वेषयामासुः। आधुनिकवैज्ञानिकसम्प्रदाये रेडियोतरङ्गनाम्ना प्रसिद्धं यत् तत्त्वं तदेव ऋग्वेदे माध्यमिकवाक्संश्लिष्टविद्युत्तरङ्गनाम्ना प्रसिद्धम्। इत्थमन्तरिक्षोद्भूता विद्युदपि ध्वनिसञ्चारस्य माध्यमीभूता।

**ईथरतत्त्वम्**

भौतिकैरपरमपि ईथरनामकं तत्त्वं ध्वनिसञ्चारस्य माध्यमं स्वीक्रियते[१]। विद्युद्-ईथरतत्त्वेति माध्यमद्वयस्य प्रयोगः आकाशवाणीकेन्द्रेषु देशाद् देशान्तरं ध्वनिं प्रापयितुं क्रियते। विद्युद्-ईथरतत्त्वे सर्वतो दिक्षु तरङ्गं कम्पनं वा समुत्पादयितुं प्रभवतीति जर्मनदेशवास्तव्यो हर्टजाभिधोऽन्वेषणं कृतवान्। विद्युद्द्वारा ईथरतत्त्वे तरङ्गोत्पादानस्यानेन वैज्ञानिकेनान्वेषणाद् एते तरङ्गा हर्टजनाम्ना प्रसिद्धिमागताः। इमे तरङ्गा निखिलभूमण्डलं निमेषपरिमिते काले अष्टवारं परिक्रमितुं प्रभवः। अतो ध्वनिरपि हर्टजतरङ्गमधिरुह्य भूमेः परितोऽष्टवारं सञ्चरितुं प्रभुः। प्रकाशमयाः शुक्लवर्णाः सूक्ष्मा ईथरतत्त्वकणाः सर्वत्र प्रवेष्टुं क्षमाः। "प्रकाशः सूर्यरश्मयो वा केनचित् माध्यमेनैव भूमण्डलमवतरितुं क्षमाः" इति मनसि निधाय हाइजीन्साख्यो वैज्ञानिको यन्माध्यमं गवेषयामास तद् ईथरनाम्ना प्रोच्यते[२]। इदञ्च ईथरतत्त्वमनन्तब्रह्माण्डं प्रत्येकं पदार्थस्य परमाणुषु व्याप्तम्। विद्युच्च ईथरतत्त्वे तरङ्गमुत्पादयितुं क्षमा–इत्यस्याप्यन्वेषणं कृतं वैज्ञानिकैः। विद्युता संक्षुब्धाद् ईथरतत्त्वाद् नीलपीतादिवर्णयुताः प्रकाशाः समुत्पद्यन्ते।

---

1. "At the time when marconi was a school boy, the important discovery was made that the space in universe is filledwith a light substance called ether, This is made up particles sotiny that it can make its way through all matter liquid, solid or gas."

—Pages of prose for High School classes P. 2, by Dustoor Marconi and wireless telegraphy.

२. "प्रकाश के वेग को समझाने के लिये हाइजीन्स ने तरङ्गसिद्धान्त का प्रतिपादन किया। इस कठिनाई को दूर करने के लिये हाइजीन्स ने एक ऐसे माध्यम की कल्पना की जो अनन्त ब्रह्माण्ड में फैला है। इस माध्यम को उन्होंने ईथर कहा।" –ले० धन्वन्तरिकिशोरगुप्त, डा० पेरोमेड हैम्बर्ग एवं जयनारायण एम० एस-सी० प्रकाश की पृ० ११७ "हाइजीन्स का तरङ्ग सिद्धान्त" ( हाइजेन्स वेव थ्योरी )।

मन्ये तावत्, सोमतत्त्वमेव ईथरतत्त्वेत्यपरनाम्ना नूतनविज्ञानसम्प्रदाये प्रसिद्धिमागतम्; उभयोर्लक्षणैक्यात् । अग्नीषोमात्मकमिदं जगदित्युक्त्या सोमतत्त्वस्यापि निखिलब्रह्माण्डव्यापकत्वमवगम्यते । शरीरान्तःप्रदेशे मूलाधारस्थोऽग्निरेव ब्रह्माण्डे ( शिरोमण्डले ) सहस्रदलकमले स्थितं श्वेतं सोमतत्त्वं द्रवीभूतं करोति । द्रवीभूतं सोमतत्त्वञ्च नीलपीतादिबिन्दून् स्पन्दति । शरीराद् बहिःप्रदेशेऽपि सूर्यरश्मयश्चन्द्रमण्डलं विग्लापयन्ति । विग्लापितञ्च सोमतत्त्वं सूर्यमण्डलं पतति । तेन रविरश्मयो घृतं प्राप्य प्रदीप इव प्रज्वलन्ति । निखिलपदार्थानां परमाणुषु सन्निहितं यदग्नितत्त्वं तत् सोमतत्त्वेनैव समिन्धते । अभिषवणपाषाणेन संपिष्यमाणं सोमतत्त्वं यदा ब्रह्माण्डं सञ्चरति, तदा ध्वनिं कुर्वन्नेव परिसरतीति ऋग्वेदे बहुशः प्रतिपादितम् ।

इत्थं सोमतत्त्वस्य ईथरतत्त्वस्य च लक्षणैक्यात् अवगम्यते यत्सोमतत्त्वमेव ईथरतत्त्वनाम्ना प्रसिद्धिमागतम् । इदञ्च सोमतत्त्वं पुरा पाश्चात्त्या न विदुः । हर्टजाख्यो वैज्ञानिको यदाऽन्वेषणं कृतवान्, तदा ते पाश्चात्त्या विदुः, परन्तु हर्टजवैज्ञानिकाद् अपरिमितकालात् पूर्वम् ऋग्वेदीया ऋषय इदं तत्त्वं विदुः । ईथरेत्यपरनामकं सोमतत्त्वं ध्वनिं देशाद् देशान्तरं प्रापयितुं क्षममितीदमपि तथ्यम् ऋग्वेदः अन्यानि च शास्त्राणि पोषयन्ति, समेषां पदार्थानामग्नीषोममयत्वात्, सोमस्य च सर्वत्र व्याप्तत्वात् ।

**सूर्यरश्मयः**

सूर्यरश्मयोऽपि ध्वनिसञ्चारस्य माध्यमीभूताः । सूर्यरश्मिमाध्यमेनाऽपि अकारादिध्वनयः सर्वत्र प्रसर्तुं क्षमाः । श्रीनिरङ्कारसिंहाख्यो भारतभूवास्तव्यः कश्चिद् वैज्ञानिकः 'सूर्यरश्मिभी रात्रावपि कार्यं कर्तुं शक्यते'—इत्येवमनुसन्दधाति स्म । अयं वैज्ञानिकप्रवरः सूर्यरश्मिसञ्चयनक्षमं किमपि यन्त्रं निर्मितवान् । सूर्यस्योदयाद् अनन्तरम् अस्ताच्च प्राक्काले अर्थाद् अह्न्येव अनेन यन्त्रेण सूर्यरश्मीन् एकत्रीकृत्य रात्रावपि तेन कार्यं वोढुं शक्यते । किञ्च, महर्षिभरद्वाजकृतयन्त्रार्णवे वैमानिकप्रकरणे बह्वीनां विद्यानाम् अथ च दर्पणानां समुल्लेखो विद्यते । तत्र ज्योतिर्भावरहस्यविद्यायाः, अथ च तमश्शक्त्याकर्षणदर्पणादीनाञ्च चर्चा कृता । तद्यथा—'वैमानिकप्रकरणे प्रथमाध्याये रहस्यज्ञोऽधिकारी' इति द्वितीयसूत्रे बोधानन्दवृत्तौ विमानसम्बन्धिरहस्यविद्यानां व्याख्यानावसरे प्रोक्तम्—

"ज्योतिर्भावरहस्यो नाम—

अंशुबोधिन्यामुक्तप्रकारेण संज्ञानादिषोडशसूर्यकलासु द्वादशाद्याषोडशान्तकलाप्रभाकर्षणं कृत्वा आकाशचतुर्थपथस्थ मयूरकक्ष्यस्थितवायुमण्डले नियोजयेत्, तथैव खतरङ्गशक्तिप्रभामाहृत्य वातमण्डलसप्तमावरणस्य प्रकाशशक्त्या सम्मेलयेत्,

पश्चाद् एतच्छक्तिद्वयं विमानस्थनालपञ्चकद्वारा विमानगुहागर्भदर्पणयन्त्रतृतीयकोशे सन्धार्य तद्द्वारा विमानद्रष्टॄणां वालातपवत् प्रकाशप्रदर्शनरहस्यम् ।

अनेनान्वेषणेनायं सङ्केतः समुपलभ्यते यत् सूर्यरश्मीन् सञ्चयीकृत्य तन्माध्यमेन इतिवृत्तयः प्रेषयितुं शक्यन्ते । अथ च सूर्यरश्मयोऽपि ध्वनिसञ्चारस्य माध्यमीभूताः; यतो हि महर्षियाज्ञवल्क्यः सूर्यदेव शुक्लयजुर्वेदं समुपलब्धवान् ।

उक्तञ्च श्रीमद्भागवतस्य द्वादशस्कन्धे षष्ठेऽध्याये—

याज्ञवल्क्यस्ततो ब्रह्मन् छन्दाँस्यधिगवेषयन् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ६६ ॥ इति ।

कपोतः सूर्यरश्मिसाहाय्येन विप्रकृष्टदेशस्थितं स्वनिविडं द्रष्टुं क्षमः । किञ्च 'सूर्यसंयमाद् भुवनज्ञानम्' इति पातञ्जलयोगदर्शनोक्तरीत्या विप्रकृष्टस्थानान्यपि सूर्यद्वारा ज्ञातुं शक्यन्ते चेत्तर्हि सूर्यरश्मिभिर्ध्वनयोऽपि श्रोतुं शक्यन्ते । यतश्च चलचित्रादिषु यद्विद्युन्माध्यमेन चित्रप्रतिविम्बानि चित्रपटे प्रेष्यन्ते, तद्विद्युन्माध्यमेनैव ध्वनयोऽपि प्रेष्यन्ते । इत्थं यदि सूर्यरश्मयो रूपप्रदर्शने क्षमास्तर्हि ध्वनिसञ्चारस्यापि माध्यमं भवितुं शक्नुवन्ति । चलचित्रादिषु एकेनैव माध्यमेन ध्वनिचित्रयोरुभयोः सञ्चारस्य सत्त्वात् । किञ्च—रूसदेशे लूनाखोदनामकं यानं सूर्यरश्मिभिरेव सञ्चाल्यते । आकाशे उड्डीयानस्यास्य यानस्य नियन्त्रणं सञ्चालनञ्चेत्युभयमपि कार्यं सूर्यरश्मिभिरेव सम्पाद्यते । किञ्च, स्फटिकयन्त्रेण सूर्यरश्मीन् संहृत्य कमपि पदार्थंरूपान्तरं कर्तुं शक्यते तर्हि ध्वनिसञ्चारविषये का वार्ता ! समेषां पदार्थानां बीजं सूर्यरश्मीनां परस्परं संयोगेनैव समुत्पाद्यते । सूर्यरश्मीनां सम्यक्तया ज्ञानम्, अथ च तेषां परस्परं संयोजनमेव सूर्यविज्ञानस्य प्रतिपाद्यो मुख्यो विषयः । सुखदुःखपापपुण्यक्रोधलोभप्रीतिभक्त्यादयः सर्वाश्चित्तोद्भवाः वृत्तयः संस्काराश्च सूर्यरश्मीनां संयोगेनैव जायन्ते । उक्तञ्च मैत्रीयोपनिषदि—

सविता सर्वभावानां सर्वभावाँश्च सूयते ।
सवनात् प्रेरणाच्चैव सविता तेन चोच्यते ॥ ९।५५॥
सूर्याद् भवन्ति भूतानि सूर्येण पालितानि तु ।
सूर्ये लयं प्राप्नुवन्ति यः सूर्यः सोऽहमेव च ॥ इति ।

किञ्च, सूर्ये सर्वे देवाः अथ च ऋग्यजुःसामाथर्ववेदा अपि सूर्यरश्मीन् अभिनिविष्टाः ।

उक्तञ्च—

असतश्च सतश्चैव योनिरेषा प्रजापतिः ।
तदक्षरं चाव्ययञ्च यच्चैतद् ब्रह्म शाश्वतम् ॥

कृत्वैव तु त्रिधात्मानमेषु लोकेषु तिष्ठति ।
देवान् यथायथं सर्वान् निवेश्य स्वेषु रश्मिषु ॥ इति ।

( सूर्योपनिषद् )

नत्वा सूर्यं परं धाम ऋग्यजुःसामरूपिणम् ॥ इति ।

( सूर्यपुराणम् )

किञ्च, पूर्वं प्रतिपादितौ ध्वनिसञ्चारस्य माध्यमीभूतौ अग्नीषोमावपि सूर्याद् अभिन्नौ । एतच्च प्रतिपादयति श्रुतिः—

'उद्यन्तं वादित्यमग्निरनुयमारोहति सुषुम्नः सूर्यरश्मिः चन्द्रमा गन्धर्वः ।' इति ।

पूर्वाह्णे ऋग्द्वारा, मध्याह्ने यजुर्वेदेन, सायञ्च सामवेदेन सूर्यः संयुज्यते । उक्तञ्च—

ऋग्भिः पूर्वाह्णे दिविदेव ईयते, यजुर्वेदे तिष्ठति मध्य अह्नः ।
सामवेदेन अस्तमये महीयते, वेदैरशून्यस्त्रिभिरेति सूर्यः ॥ इति ।

सूर्यसिद्धान्तकृन्मते तु ऋग्वेदः सूर्यस्य मण्डलम्, यजुःसामवेदौ च मूर्तिरिति सिद्धान्तः । तद् यथा—

ऋचोऽस्य मण्डलं सामान्यस्य मूर्तिर्यजूंषि च ।
त्रयीमयोऽयं भगवान् कालात्मा कालकृद् विभुः ॥ इति ।

वस्तुतस्तु—प्रणव ॐकारो यद्वा उद्गीथ एव खे सूर्यात्मना भासते । एष भगवान् सविता नादब्रह्मस्वरूपः । अस्य रश्मयश्च अकारादिध्वनिरूपाः । एष ह भगवान् सविता अजस्रं खमण्डले रौति । अतोऽयं रवतीति रविनाम्ना प्रोच्यते । यदि सूर्यो नादब्रह्मस्वरूपः, अस्य रश्मयश्च अकाराद्यक्षररूपाः, अग्नीषोमात्मकस्य जगतः सर्वे भावा. सूर्यरश्मिषु सन्निविष्टाः, तर्हि अस्य रश्मयोऽपि ध्वनिसञ्चारस्य माध्यमीभूता इति सुतरां निश्चितं जातम् । सूर्यरश्मिमाध्यमेन अजस्रं ध्वनयो निखिलब्रह्माण्डम् अभिसरन्ति । किञ्च, नूतनध्वनिवैज्ञानिका अपि सूर्यरश्मीन् ध्वनिसञ्चारस्य माध्यमं स्वीकुर्वन्ति । सर एडवर्ड वेष्टुनः, जे० एस० टी०—इत्याख्यौ द्वौ आंग्लदेशवास्तव्यौ वैज्ञानिकौ सूर्यद्वारा रेडियोध्वनितरङ्गोत्सर्जनस्यानुसन्धानं कृतवन्तौ । सूर्यः सततं शक्तिमतो रेडियोतरङ्गान् उत्सृजति । सूर्यमण्डले यानि मालिन्यानि दृश्यन्ते, तानि ध्वनितरङ्गाणां स्रोतांसि । यदा सूर्याद् मालिन्यरश्मिभिः सह पूर्णरूपेण नीलवर्णा रश्मयः प्रकाशो वा उत्सृज्यन्ते, तदा रेडियोतरङ्गा अतीव शक्तिमन्तो जायन्ते ।

इदमुपर्युक्तं तथ्यं पाश्चात्त्या १९४६तम ईस्वीयादनन्तरं ज्ञातवन्तः । इतः पूर्वं

तु अस्माद् विषयाद् अनभिज्ञा एवासन्। पूर्वं प्राचीनैर्भारतीयमहर्षिभिर्गवेषितं मध्ये कालेन च प्रणष्टं प्रच्छन्नं वा तथ्यम् एते वैज्ञानिका पुनर्निरावरणं कृतवन्तः। इत्थं 'पौरस्त्यपाश्चात्त्योभयमतानुसारेण सूर्यरश्मयोऽपि ध्वनिसञ्चारस्य माध्यमीभूताः' इति सिद्धान्तो वादिप्रतिवादिभ्यां निर्णीतो जातः।

**सुषुम्ना**

अस्माकं शरीरे मूलाधाराद् आरभ्य ब्रह्मरन्ध्रपर्यन्तं मेरुदण्डमाश्रित्य सुषुम्ना नाडी व्याप्तेति 'अकारादिध्वनेरभिव्यक्तिप्रक्रिया' इत्यत्र प्रतिपादितम्। सुषुम्ना केवलमस्माकं शरीर एव न व्याप्ता, अपि तु अस्माकं शरीराद् बाह्यदेशेऽपि निखिलब्रह्माण्डमधिकृत्य व्याप्ता। अर्थाद् एषा सुषुम्ना विश्वव्यापिनी। अधस्तात् शेषपर्यन्तम्, ऊर्ध्वं शिवतत्त्वान्तञ्च शारीरं बाह्यं सर्वमध्वानं व्याप्य तिष्ठति। अतो विश्वव्यापकसुषुम्नाभित्तिमाश्रित्य ध्वनिस्तदधः प्रसरणमार्गेण अधस्तनं सर्वमध्वानमधिष्ठितः, ऊर्ध्वप्रसरणमार्गेण च शिवतत्त्वान्तं प्रसर्तुं समर्थः। उक्तञ्च स्वच्छन्दतन्त्रस्य दशमपटले —

> ग्रथितस्तु तया सर्वस्त्वध्वाऽयमथ ऊर्ध्वगः।
> नाड्याधारस्तु नादो वै भित्त्वा सर्वमिदं जगत्॥ १२३४॥
> अधः शक्त्या विनिर्गत्य यावद् ब्रह्माणमूर्ध्वतः॥ इति।

इत्थं सुषुम्नायाः सर्वत्र व्यापकत्वात् तन्माध्यमेन ध्वनिः सर्वत्र प्रसर्तुं प्रभुः।

**मनोवहा नाडी**

मनो यां नाडीमाश्रित्य सञ्चरति, सा 'मनोवहा नाडी' उच्यते। इयञ्च मनोवहा नाडी सुषुम्नावत् सर्वत्र व्याप्ता। सुषुम्नायां मनसि प्रविष्टे सति चिच्छक्तिः सम्वर्द्धते, मोक्षस्य च प्राप्तिर्भवति। मनोवहायां नाड्यां प्रवेशे सति तु केवलं लौकिकपदार्थानामेव ज्ञानं जायते। जगति सर्वे पदार्था मनोवहाख्य-नाड्या सम्बद्धाः। अनयाऽपि नाड्या यत्रकुत्रापि समुद्भूतो ध्वनिः श्रोतुं शक्यते।

इत्थं पृथ्वीजलतेजोवायवः, अग्नीषोमौ, सूर्यः, सुषुम्ना, मनोवहा नाडी चेतीमानि सर्वाणि ध्वनेः प्रसरणपन्थानः। तथा च ध्वनिः केनचिन् माध्यमेनैव सञ्चरति। माध्यमं विना प्रसर्तुमप्रभुः—इत्येवात्र पर्यन्तं निष्पादितम्।

**पातञ्जलयोगदर्शनदशाऽत्र विषये सांख्यमतसमन्वितो विचारः**

भौतिकादिशास्त्रमतानुसारेण पूर्वमत्र पर्यालोचितं 'केनचिन् माध्यमेनैव ध्वनिसञ्चारः' इतीदमाविष्कृतं तथ्यमतीव रमणीयम्। परन्तु ध्वनिराकाश-गुणतया, यद्वा आकाशदेशाश्रयत्वात् पृथ्वी जलविद्युदादिमाध्यमं विनाऽपि

केवलमाकाशमाध्यमेनैव देशाद् देशान्तरं गन्तुं प्रभवति। पूर्वोक्तो वैज्ञानिकप्रयोगः सम्यक्तया निरीक्षणीयः। काचपात्रान्तर्गतो वायुर्यदा निर्वातकर्तृयन्त्रेण निःसार्यते, तदा काचपात्रं तेन यन्त्रेणाऽतिशयेन संश्लिष्यते। तेन काचपात्रावच्छिन्नस्याकाशस्य बाह्याकाशेन सह कोऽपि सम्बन्धो नाऽवशिष्यते। अस्यामवस्थायां काचपात्रान्तर्गतमाकाशम् अतिशयेन परितोऽवरुद्धं सञ्जायते। आकाशस्यावरोधाद् बहिर्निःसरितुमसम्भवाद् ध्वनिर्न श्रूयते। अत्र निर्वातमात्रं न कारणं विद्यते। यदा पात्रे वाष्पं पूर्यते तदा तस्य पात्रस्य निर्वातकर्तृयन्त्रेण सहातिशयसंश्लेषस्याभावः सञ्जायते। तेन तत्पात्रान्तर्गतस्याकाशस्य बाह्याकाशेन सहैक्यं निष्पद्यते, ध्वनिश्च श्रूयते।

अत्रेममेव विषयं बुद्ध्याऽवधारयितुं द्वितीयं प्रमाणं समुपस्थापयामि। कपाटं गवाक्षञ्चेत्युभयमपि पिधाय यदा स्वप्रकोष्ठे तिष्ठामः, तदा प्रकोष्ठाद् बहिर्देशे केनचिद् यदि ध्वनिः क्रियते तर्हि न श्रूयते। यद्वा, मन्दं मन्दमेवानुश्रूयते। अत्र विचार्यताम्—को हेतुः? पिहितप्रकोठे वायुरपि विद्यते? अत्र विचार्यमाणे सति मदुक्तवचनस्यैव पुष्टिर्जायते। कपाटो गवाक्षश्चेत्युभयपिधानात् कोष्ठान्तर्गताकाशस्य बहिराकाशेन सह विभागः, अतिशयेन च परितोऽवरोधः सञ्जायते। अत एव बहिर्देशे ध्वनिर्न श्रूयते। यदा गवाक्षः कपाटश्चेत्युभयमप्युद्घाटयते, तदा कोष्ठान्तर्गताकाशस्य बहिराकाशेन सहैक्यं सम्पद्यते। ततो बहिर्देशावच्छिन्नवायोरपि कोष्ठान्तर्देशावच्छिन्नवायुना सहैक्यं सम्पद्यते, ध्वनिश्च स्पष्टतया श्रूयते। अतो वाय्वादिमाध्यमं विनाऽपि ध्वनिः स्थानान्तरं गन्तुं प्रभवतीत्येव सिद्धान्तः स्वीकर्तव्यः।

ध्वनेराकाशमाध्यमेनापि श्रवणादेव भगवता पतञ्जलिना योगदर्शनस्य विभूतिपादे 'श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम्'—इत्युक्तम्, न तु 'श्रोत्रवाय्वादिसंयमाद्' इति। अत्र धारणाध्यानसमाधीत्येतत्त्रयस्य ध्येये वस्तुनि समुपस्थितिः संयमः, आकाशदेशे चित्तस्य बन्धनम्, यद्वा चित्तेन श्रोत्राकाशयोः सम्बन्धस्य चिन्तनमत्र धारणा[1], आकाशे तैलधारावद् अव्यवच्छिन्नरूपेण चित्तस्य प्रत्येकतानता ध्यानम्[2]। एवं सततं ध्यानद्वारा यदा केवलमाकाशमात्रस्याभासो

१. 'देशबन्धश्चित्तस्य धारणा'—पा० यो० द०, अ०३, सू०१ )
२. 'तत्र प्रत्ययैकतानता ध्यानम्''—पा० यो० द०, अ०३, सू० २।

जायते, नान्यस्य, तदा आकाशविषयकः समाधिः[१] । श्रोत्राकाशयोः सम्बन्धस्य च साक्षात्कारो जायते । ततो निरवच्छिन्ने यदा कुत्रचिद् अवरुद्धे आकाशे यत्र कुत्रापि शब्दोऽभिव्यज्येत, तत्सर्वं दिव्यश्रोत्रद्वारा शृणोति । अयं समाधिः निर्बीज-निरोधसमाधिभ्यां भिन्नः, सम्प्रज्ञातनाम्ना, यद्वा निर्बीजनाम्ना प्रोच्यते । सबीजे समाधौ तु इन्द्रियद्वारैव ज्ञानं जायते । अतएव 'श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम्' इति पातञ्जलयोगदर्शनसूत्रे 'दिव्यं श्रोत्रम्' इत्युक्तम् ।

सबीजसमाधेर्लक्षणं भगवता पतञ्जलिना योगसूत्रस्य समाधिनामके प्रथमे पादे प्रोक्तम् । तद् यथा—

"ता एव सबीजः समाधिः" । ( १।४६ )

शब्दार्थज्ञानविकल्पसहिता समापत्तिः (=समाधिः) चित्ते केवलं ध्येयमात्रस्य ध्यानञ्चेत्येतत्सर्वं सम्भूय सबीजसमाधिनाम्ना व्यपदिश्यते । यदाऽऽकाशविषयकः समाधिर्जायते, तदा श्रोत्राकाशयोः सम्बन्धस्य साक्षात्कारः, ततो दिव्यश्रोत्रस्य समुपलब्धिः, दिव्यश्रोत्रे समुपलब्धे च तन्माध्यमेन च सार्वत्रिकः शब्दः श्रूयते ।

किञ्च, 'यद् यद् उत्पत्तिमद्, विक्रियमाणं वा तत्सर्वं सावयवम्, घटादिवद्' इत्यनुमाने तामसाद् अहङ्काराद् आकाशस्योत्पत्तेः सत्त्वात् तदपि सावयवम् । 'यत् सावयवम्, तत् परमाणुमत्, यथा पृथ्वी' इति युक्त्या आकाशस्य सावयवत्वात् तत् परमाणुमद् विद्यते । आकाशस्योत्पत्तिमत्त्वं श्रीमद्भागवतस्य द्वितीयस्कन्धे पञ्चमाध्याये प्रोक्तम् । तद् यथा—

तामसादपि भूतादेर्विकुर्वाणाद् अभून्नभः ।
तस्य मात्रा गुणः शब्दो लिङ्गं यद् द्रष्टृदृश्ययोः ॥ २५ ॥ इति ।

क्वचित् शब्दतन्मात्रात उत्पत्तिरुक्ता । तद् यथा श्रीश्वरकृष्णेन सांख्य-कारिकायाम् ।

तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ॥ २२ ॥ इति ।

---

१. "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः"—पा० यो० द०, अ०३, सू०३ ।
"वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः'—पा० यो० द०, अ०१, सू०१७ ।
"चित्तस्यालम्बने स्थूल आभोगः, सूक्ष्मो विचारः, आनन्द आह्लादः, एकात्मिका संविद्, अस्मिता । तत्र प्रथमश्चतुष्टयानुगतसमाधिः सवितर्कः, द्वितीयो वितर्कविकलः विचारः, तृतीयो विचारविकलः सानन्दः, चतुर्थस्तदविकलोऽस्मितामात्र इति । एते सर्वे सालम्बनाः समाधयः" । ( व्यासभाष्यम्—पा० यो० द०, अ० १, सू० १७ )

अत्र शब्दतन्मात्रातः आकाशस्योत्पत्तिरुक्ता। एतत्सर्वं भूताकाशविषये, न तु चिदाकाशविषये इत्यवधेयम्; चिदाकाशस्यानादिनिधनत्वात्।

भवतु नाम पक्षद्वयेऽपि भूताकाशस्योत्पत्तिमत्त्वम्, उत्पत्तिमत्त्वाच्च परमाणुमत्त्वम् विक्रियमाणत्वञ्चेमानि सर्वाणि कार्याणि तस्मिन् सिद्ध्यन्ति। नभसि विक्रियमाणत्वक्रियायाः सत्त्वादेव तस्माद् वायोरुत्पत्तिरुक्ता। तथा चोक्तं श्रीमद्भागवतस्य द्वितीयस्कन्धे पञ्चमाध्याये—

नभसोऽथ विकुर्वाणाद् अभूत् स्पर्शगुणोऽनिलः ।। इति।

एवं विकुर्वदप्याकाशतत्त्वम् अपरमुरुबलान्वितं वायुतत्त्वं विकरोति। अतएव वायो रूपतन्मात्रस्य तेजसः सृष्टिः। तथा चोक्तं श्रीमद्भागवतस्य तृतीयस्कन्धे पञ्चमाध्याये—

अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः।
ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् ।। ३३ ।। इति।

अनेन श्लोकेन आकाशे क्रियाशक्तिरस्तीति विश्वसनीयं जायते। भौतिकैरपि आकाशस्य प्रसारणाकुञ्चने स्वीक्रियेते। प्रसारणाकुञ्चनयोः सत्त्वाच्चैतेषामपि मते तस्य सावयवत्वं परमाणुमत्त्वञ्च सिद्ध्येते। यथा पृथ्व्याः परमाणवः पार्थिवाः, जलस्य जलमयाः, तेजसस्तैजसाः, वायोश्च वायुमयाः परमाणवो विद्यन्ते, तथैव आकाशस्य आकाशमयाः परमाणवः। ते च आकाशमयाः परमाणवः पृथ्व्यादिकठिनपदार्थेषु जलादिद्रव्यात्मकेषु वस्तुषु च प्रवेष्टुमर्हत्त्वात् सर्वत्र व्याप्ताः। यथा ध्वनिः पृथ्व्यादेः प्रत्येकं कणं परिकम्पयँस्तन्माध्यमेन निर्वातं चन्द्रादिलोकं व्याप्नोति, तथाऽऽकाशमाध्यमेनापि। परन्त्वाकाशमाध्यमेन दूरात्समागतस्य ध्वनेः श्रुतौ धारणाध्यानसमाधिरूपसंयमद्वारा श्रोत्राकाशयोः सम्बन्धस्य साक्षात्कारः परमावश्यकः।

अत्रेदं बोद्धव्यम्—शब्दस्याकाशदेशाश्रयत्वात् कर्णशष्कुल्यवच्छिन्नाकाशरूपश्रोत्रेन्द्रियेण च गृह्यमाणत्वात् देशान्तरसञ्चरणे आकाशं तस्य सर्वोत्तमं माध्यमं विद्यते। तन्माध्यमेन सूक्ष्मातिसूक्ष्मं शब्दं श्रोतुं शक्यते। अतएव श्रीमद्भागवतस्य दशमस्कन्धे प्रथमाध्याये—

गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह।
गां पौरुषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव मा चिरम् ।। २१।

अत्र 'गगने समीरिताम्' इत्युक्तम्। यत्र कोऽपि गन्तुं न समर्थः, स्वयं ब्रह्मापि स्वोत्पत्तिमूलभूतकञ्जस्य मूलमन्वेष्टुं तन्नालं गृहीत्वा जलमध्ये बहुकालं

विचचार, किन्तु मनसेप्तिमनवाप्य ततो निवृत्तः। एतावति गम्भीरे जले सहस्रशीर्षभोगपर्यङ्के स्थितेन भगवता समीरितां 'पुरैव पुंसावधृतो धरा ज्वरः' इत्यादिगिरमाकाशमाध्यमेन क्षीरपयोनिधेस्तीरे देवैः सह स्थितौ ब्रह्मा श्रुतवान्, अन्ये च देवाः समाहितचित्तत्वाभावान्न श्रुतवन्तः। 'गिरं समाधौ गगने' इत्यत्र समाधिपदेन सबीजस्यैव समाधेर्ग्रहणम्, न तु निरोध[1]निर्वीजयोः[2]; तथा सति पुरुषसूक्तेन पुरुषस्योपस्थापनासम्भवात्।

तदित्थमत्र सर्वत्र गगनगिरः समुल्लेखस्योपलब्धेः सत्त्वात् सूक्ष्मातिसूक्ष्मं शब्दं श्रोतुमाकाशं तस्य परमोत्कृष्टं माध्यममिति ज्ञायते।

किञ्च, वायुमण्डलादूर्ध्वं शब्दतन्मात्रमण्डलस्य परिस्थितिः प्रोक्ता। उक्तञ्च स्वच्छन्दतन्त्रस्य दशमपटले—

तस्मात्तु मण्डलादूर्ध्वं शब्दतन्मात्रमण्डलम् ॥ ९०९ ॥ इति।

तस्मादित्यस्य वायुमण्डलादूर्ध्वमित्यर्थः। किञ्च, शब्दो यद्वा ध्वनिः आकाशस्य मात्रा गुणश्च स्वीक्रियते सर्वैः। एतच्च प्रतिपादितं श्रीमद्भागवतस्य दशमस्कन्धे पञ्चमाध्याये—

तामसादपि भूतादेर्विकुर्वाणाद् अभून्नभः।
तस्य मात्रागुणः शब्दो लिङ्गं यद् द्रष्टृदृश्ययोः ॥ २५ ॥ इति।

'मात्रा' इत्यस्य सूक्ष्मं स्वरूपमित्यर्थः। शब्द आकाशस्य मात्रा सूक्ष्मं स्वरूपं सत् तस्य गुणोऽपि स्वीक्रियते। अतः शब्द आकाशदेशस्थः। यथा वा स्पर्शो वायोः सूक्ष्मं स्वरूपं (मात्रा) गुणश्च। वायुमाध्यमेन देशान्तरस्य शीतोष्णादेस्त्वगिन्द्रियेण च ग्रहणं क्रियते। एवं ध्वनिरपि आकाशस्य सूक्ष्मं स्वरूपं तन्माध्यमेन स ग्रहीतुं शक्यते। यथा सूर्यपृथ्व्योर्मध्ये व्यवधानाभावाद् भूलोकस्थः सूर्यं चक्षुषा निर्बाधं पश्यति; एवं श्रोत्राकाशयोः सम्बन्धस्य साक्षात्कारे सति विप्रकृष्टदेशाभिव्यक्तः शब्दश्श्रोत्रयोर्मध्ये व्यवधानाभावाद् आकाशमाध्यमेन ध्वनिः प्रत्यक्षीक्रियते। किञ्च आकाशमाध्यमेन वायुविद्युदाद्यन्यमाध्यमापेक्षया शब्दश्रुतौ लाघवम्।

---

१. "निरोधसमाधेर्लक्षणम्–"विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः'।
—पा० यो० द० १।१८

२. "निर्वीजसमाधेर्लक्षणम्—'तस्यापि निरोधे सर्वनिरोधान्निर्वीजः समाधिः" —पा० यो० द० १।५१)। चित्तेऽनेकजन्मसंस्काराणां निरोधे सति बाह्याभ्यन्तरसर्वविषयाणां निरोधान्निर्वीजनामकः कैवल्यनामकः समाधिर्लभ्यते।

तदित्थम् आकाशं ध्वनिसञ्चारस्य परमोत्कृष्टं माध्यमम्, पृथ्व्यादिकं तु गौणं माध्यमम् इति ज्ञायते। आकाशवायुतेजोजलपृथ्वीति पञ्चानां मध्ये क्रमशः पूर्वस्माद् उत्तरोत्तरस्य जायमानत्वात् तेषां शब्दस्पर्शरूपरसगन्धेति पञ्चानां मध्ये शब्दस्य स्पर्शगुणवति वायौ, शब्दस्पर्शयोश्च रूपवति तेजसि, शब्दस्पर्शरूपाणां रसगुणवति जले, शब्दादिचतुर्गुणानाञ्च गन्धवत्यां पृथ्व्यां सङ्क्रमो विद्यते। तथा चोक्तं श्रीमद्भागवते तृतीयस्कन्धे पञ्चमेऽध्याये—

भूतानां नभआदीनां यद् यद् भव्यावरावरम्।
तेषां परानुसंसर्गाद् यथासंख्यं गुणान् विदुः ॥ ६ ॥ इति।

अत्र आकाशाद् व्यतिरिक्तं वाय्वादिकं ध्वनिसञ्चारस्य गौणं माध्यमं स्वीक्रियते। वाय्वादीनां गौणमाध्यमत्वस्वीकारे हेतुश्च 'शब्दो वाय्वादीनां गौणः, आकाशस्य च प्रधानो गुणः' इति वेदितव्यः। वाय्वादीनां शब्दसञ्चारस्य गौणमाध्यमत्वाच्च तेषामभावेऽपि ध्वनिसञ्चारः सुकरः; श्रोत्राकाशयोः सम्बन्धस्य साक्षात्कृद्भिः तथादर्शनात्।

न च आकाशे सर्वत्र व्याप्ते सति सर्वतोऽवरुद्धे स्थाने समुद्भूतो ध्वनिराकाश-माध्यमेन कथं न श्रूयते? इति वाच्यम्; श्रोत्राकाशयोः सम्बन्धस्य साक्षात्कारा-भावात्। किञ्च, विद्युता प्रसारितस्यापि ध्वनेः प्रत्यक्षं श्रोत्रेण नानुभूयते। ध्वनि-प्रेषककेन्द्रस्थानात् सर्वतो दिक्षु विद्युन्माध्यमेन प्रसारिता ध्वनयोऽस्माकं श्रोत्रं प्रसरन्ति, परन्तु न श्रूयन्ते। तत्रैव विद्यमानेन ध्वनिग्राहकयन्त्रेण च अभिव्यज्यन्ते। अत्र को हेतुः? सूक्ष्मातिसूक्ष्मं शब्दं श्रोतुमस्माकं श्रोत्रमसमर्थम्; अदिव्यत्वात्। किन्तु संयमद्वारा श्रोत्राकाशयोः सम्बन्धं प्रत्यक्षीकृत्य यो दिव्यं श्रोत्रं लब्धवान्, स सूक्ष्मातिसूक्ष्मं ध्वनिं ग्रहीतुं समर्थः। स सर्वतोऽवरुद्धे, यद्वा यत्र कुत्रापि समुद्भूतं ध्वनिं शृणोति। किञ्च, विद्युन्माध्यमेन सार्वत्रिको ध्वनिः श्रवणगोचरानर्हः; विद्युतः सर्वत्र सञ्चरणाऽनर्हत्वात्। अस्माकं महर्षिभिः, केचिदेवं लोका गवेषिताः, यत्र सूर्यप्रकाशोऽपि प्रवेष्टुमप्रभुः। रासायनिकक्रियया समुत्पन्नाया विद्युतश्च कुतः सामर्थ्यम्! ते च लोका वाल्मीकीयरामायणस्य किष्किन्धाकाण्डे प्रोक्ताः। तद् यथा—

तत्र सोमगिरिर्नाम मध्ये हेममयो महान्।
इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ॥ ५६ ॥
देवास्तं समवेक्षन्ते गिरिराजं दिवं गताः।
स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते ॥ ५७ ॥ इति।

अत्र त्र्यधिकचत्वारिंशत्सर्गे सूर्यप्रकाशानधिगतस्य लोकस्य निर्देशो

विद्यते। तत्र कृत्रिमाया विद्युतः प्रवेशो दुष्करः। अतस्तन्माध्यमेनास्माल्लोकात् तत्र देशे, यद्वा तस्माद्देशादत्र लोके ध्वनिसञ्चारोऽसम्भवः; किन्तु आकाशस्य सर्वव्यापकत्वात् तन्माध्यमेन सार्वत्रिकः शब्दः श्रवणार्हः— इति पातञ्जलयोगदर्शनाज् ज्ञायते। यः श्रोत्राकाशयोः सम्बन्धं संयमद्वारा साक्षात् कृतवान्, स सकलभुवनजन्यं शब्दं श्रोतुं क्षमः।

**ध्वनिसञ्चारविधिः**

'ध्वनिः वाय्वादिमाध्यमेन देशाद् देशान्तरं सञ्चरितुं समयमपेक्षते' इति नूतना ध्वनिविद्वांसो मन्यन्ते। अयं विषयः पूर्वं विभिन्नमाध्यमेषु ध्वनेर्वेगः प्रतिपादितः, तेनाऽपि प्रमाणीभवति। को ध्वनिः कियत्कालं तिष्ठति ? ध्वनेश्च सञ्चरणकालः कियान् ?—इत्येतज्ज्ञानार्थं प्राचीनकाले कश्चिद् उपायः आसीत्। एतद्विषयक एको विधिः पतञ्जलिकृते महाभाष्ये प्रोक्तः। तद्यथा 'तपरस्तत्कालस्य (१।१।७०) इति पाणिनीयसूत्रे—

"भेर्याघातो भेरीमाहत्य कश्चित् त्रिंशत्पदानि गच्छति, कश्चिच्चत्वारिंशत्, स्फोटस्तावानेव भवति, ध्वनिकृता वृद्धिः।' इत्युक्तम्।

"भेरीमाहन्तीति भेर्याघातः, उपलब्धिसामान्ये दृष्टान्तः। यथा प्रयत्नवशाद् उत्पन्नो भेरीशब्दः कश्चिद् अल्पकालमुपलभ्यते, कश्चिच्चिरम्, कश्चिच्चिरतरम्। सर्वेषां ध्वनीनाम् उपलब्धिकालः समानो न दृश्यते, दृश्यते च उपलब्धिकालस्य वैषम्यम्"। इत्येवं कैयटनागेशौ उपर्युद्धृतस्य पातञ्जलमहाभाष्यस्य टीकां कृतवन्तौ।

अत्र ध्वनेः श्रुतिकालः पदैः परिमाणीकृतः। ध्वनिसञ्चरणक्षणे माध्यमकणाः ( माध्यमपरमाणवः ) स्वस्थाने एव कम्पिता भवन्ति। माध्यमपरमाणूनां स्थानान्तरणाभावः, क्वचिच्च माध्यमस्य स्थानान्तरणं जायते। तद् यथा— ध्वनिप्रेषककेन्द्रस्थानाद्[1] वक्राकृतिकाः[2] अथ च ऋजुरूपा[3] विद्युद्धारा ध्वनिमादाय चतसृषु दिक्षु प्रसरन्ति। अयं विषयः 'शब्दतत्वं ( तत्सम्बन्धि ) आधुनिकविज्ञानञ्च' इत्याख्ये मत्कृते शोधग्रन्थे प्रतिपादितः। तत्र एतदीयोंऽशो द्रष्टव्यः। नास्ति पिष्टपेषणस्यावश्यकता।

किञ्च, माध्यमगत्यनुसारेण ध्वनिरपि तदाश्रितः सन् सञ्चरति। ध्वनि-

---

१. फ्राम द रेडियो स्टेशन। ( From the radio station. )
२. आल्टरनेटिंग करेन्ट। ( Alternating current. )
३. डाइरेक्ट करेन्ट। ( Direrct current. )

गतयो माध्यमगुणदोषैः प्रभाविताश्च जायन्ते। यदि वायुः सर्वत्र समानरूपेण स्यात् तर्हि ध्वनिसञ्चरणे न कोऽपि अवरोधः। वायुमण्डलस्य वैषम्ये सति तु गत्यवरोधाद् ध्वनिवेगोऽपि वैषम्यं भजति। किञ्च, ध्वनिवेगः शीतोष्णादिभिरपि प्रभावितः सञ्जायते। यथाऽस्माकं देशाद् देशान्तरगमनं द्रुतयानद्वारा अल्पकालेनैव जायते। द्रुतयानद्वारा अस्माकञ्च गतिः सम्बर्धिता सञ्जायते। तथैव ध्वनिसञ्चरणविषयेऽपि बोद्धव्यम्।

ध्वनिसञ्चारमाध्यमेषु बहवो ध्वनयः सन्ति, ये कदाचिद् अन्योन्यस्योर्ध्वम्, कदाचिच्च परस्परं छिन्दन्तः सञ्चरन्ति। क्वचिच्च प्रत्यवरोधेन सह प्रतिहत्य निवर्तन्ते। ध्वनिसञ्चारस्येदं बैषम्यम् अध्येतुं हाइगेनाख्यो वैज्ञानिकः—'अध्यारोपणनियमः, द्वितीयकतरङ्गनियमः' इति नियमद्वयं कृतवान्[1]।

### १. ध्वनिसञ्चारस्याध्यारोपणनियमः

स्वच्छन्दरूपेण ध्वनिसञ्चार एव अध्यारोपणनियमास्याधारः। वाय्वादिषु मध्ये कस्मिश्चिदपि माध्यमे अनेके ध्वनयः परस्परमप्रतिहताः स्वतन्त्ररूपेण सञ्चरन्ति। अर्थात् एकस्मिन् माध्यमे एकस्य ध्वनेर्वेगो विपरीतदिशातः समागच्छतो ध्वनेर्बेगेन परस्परं न प्रतिहन्यते। अत एव एकेनैव माध्यमेन समागच्छन्तो ध्वनयः सुस्पष्टरूपेण श्रूयन्ते। अयमेव ध्वनिसञ्चारस्याध्यारोपणनियमः।

अध्यारोहन्तो ये ध्वनिवेगा एकस्मिन्नेव माध्यमे विभिन्नदिशातः परस्परमप्रतिहताः सञ्चरन्ति, त एतन्नियमान्तर्गताः। ध्वनिवेगस्येममध्यारोपणनियमं भगवान् भाष्यकारः पतञ्जलिरपि प्रतिपादयति स्म। उक्तञ्च 'आख्यातोपयोगे' (१।४।२९) इति पाणिनीयसूत्रे—

'कथमुपाध्यायाद् अधीते इति ? अपक्रामति तस्मात्तदध्ययनम्' इति।

अयं भावः—अधीयमानवाक्यजातमध्ययनमुच्यते। एवञ्च अपक्रमजनितविश्लेषाश्रयत्वाद् उपाध्यायस्य अपादानत्वं सिद्धम्। उपाध्यायाद् अपक्रामन्तं शब्दजातमधीते इत्यर्थः। यदि उपाध्यायाद् अस्माकम् आस्यात् वा शब्दा अपक्रामन्ति, तर्हि अपक्रान्ताः शब्दाः पुनरुपाध्यायमुखे न लभ्येरन्। यथा फलं वृक्षाद् अपक्रान्तं न पुनर्वृक्षे तद् भवति, एवं ध्वनिविषयेऽपि स्यात् इत्यत आह भाष्यकारः पतञ्जलिः "सन्ततत्वात्। अथवा ज्योतिर्वज्ज्ञानानि भवन्ति। आख्यातोपयोगे" ॥ २९ ॥

अकारादिध्वनयः उपाध्यायादपक्रान्ता अपि सादृश्यात्तत्त्वेन अध्यवसीय-

---

१. श्रीललितकिशोरसिंह एम० एस-सी० कृते ध्वनिविज्ञानग्रन्थे एतदीयोंऽशो द्रष्टव्यः।

मानाः श्रोतुः पुनः पुनः श्रोत्रप्रदेशमभिव्याप्य तिष्ठन्ति। यद्वा, यथा ज्वालारूपं ज्योतिः पुनः पुनः विच्छेदेनोत्पाद्यमानं सादृश्यात्तत्त्वेनाध्यवसीयमानं सन्ततम् व्याप्तम्, तच्च ज्वालारूपं ज्योतिः धारावाहिकरूपतया एकमेव प्रतीयते, तथैव उपाध्यायात् सकृद् अपक्रान्ता घटपटादयो ध्वनयः, पुनर्विवक्षायाञ्च पुनस्त एव ध्वनय अपक्रामन्ति। उपाध्यायात् यद्वा वक्तुर्मुखात् सकृद् घटपटादिषु अपक्रान्तेषु तेषां समाप्तिर्जातेति तु न, किन्तु प्रदीपज्योतिर्वद् यद्वा सूर्यज्योतिर्वत् पुनः पुनरुच्चार्यन्ते। 'ज्योतिवज्ज्ञानानि भवन्ति' इति महाभाष्ये ज्ञानशब्देन अकारादिध्वनयो गृह्यन्ते; 'वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते' इति श्रीभर्तृहर्युक्त्या ज्ञानस्य शब्दरूपतापत्तिप्रतिपादनात्।

किञ्च, 'ज्योतिर्वज्ज्ञानानि भवन्ति' इति महाभाष्ये 'ज्योतिर्वद्' इत्यनेन अकारादिध्वनीनां सञ्चारो ज्योतिर्वद् भवतीत्यपि प्रमाणीक्रियते। सूर्यज्योतिर्यद्वा सूर्यरश्मयो यथा तिर्यग्रूपेण सञ्चरन्तः परस्परमन्योन्यम् अधिक्राम्यन्तः सञ्चरन्ति, एवम् एकस्मिन् माध्यमेऽनेकदिग्भ्यः सञ्चरन्तो ध्वनयः परस्परं सङ्गता भवन्ति। सङ्गत्य च वियुज्यन्ते। अयमेव ध्वनिसञ्चारस्याध्यारोपणनियमः।

## २. द्वितीयकतरङ्गः, यद्वा तरङ्गसन्तानः

ध्वनिसञ्चारस्य द्वितीयो नियमो विद्यते द्वितीयकतरङ्ग इति। अस्य नियमस्य च भेदत्रयं विद्यते। तद्यथा—

१. परावर्तनम्, २. अपवर्तनम्, ३. विवर्तनम् चेति।

### १. परावर्तनम्

यदा कश्चिद् ध्वनिः कमपि परावर्तकं देशं प्रतिहन्ति, तदा द्वितीयो ध्वनितरङ्गः समुत्पद्यते। अयं द्वितीयो ध्वनितरङ्गः परावर्तकदेशात् समुत्पद्य स्वाभिव्यक्तिदेशाभिमुखं पुनरागच्छति। परावर्तकं देशं समभिहत्य समुत्पन्नो ध्वनितरङ्गः परावर्तिततरङ्गनाम्नाऽपि प्रोच्यते। इयञ्च प्रक्रिया प्रतिबिम्बनाभिधेयार्हा। प्रतिबिम्बनं प्रतिध्वनिरित्यर्थः[१]।

---

१. "जिस प्रकार प्रकाश तरंगें किसी तल से टकराकर परावर्तित हो जाती हैं, उसी प्रकार ध्वनि-तरंगें भी किसी तल से टकराकर परावर्तित हो जाती हैं। इस परावर्तित ध्वनि को प्रतिध्वनि कहते हैं। यह साधारण अनुभव की बात है कि जब खुले मैदान में या बड़े कमरे, या गहरे कुएँ के मुँह पर यदि कोई ध्वनि की जाती है तो वैसी ही ध्वनि कुछ समय बाद पुनः सुनायी पड़ती है। यह दूसरी ध्वनि 'प्रतिध्वनि'; ही होती है"।

## अपवर्तनम्

परस्परं भिन्नमाध्यमत्रयेण यदा ध्वनिर्निष्क्रामति, तदा ध्वनिसञ्चारदिक् परिवर्तिता जायते। ध्वनिसञ्चारस्येदं दिक्परिवर्तनमेव अपवर्तन[1]नाम्ना प्रोच्यते।

## विवर्तनम्

दिक्षु सञ्चरतां ध्वनीनां मार्गे यदा प्राचीरप्रस्तरादीनां प्रत्यवरोधः सञ्जायते, तदा ध्वनिः प्रत्यवरोधं संहृत्य दक्षिणतो वामतो वा प्रत्यावर्तते। ध्वनेरिदं प्रत्यावर्तनं विवर्तननाम्ना प्रोच्यते। इत्थम् अध्यारोपणस्य, अथ च द्वितीयकतरङ्गस्य ( तरङ्गसन्तानस्य ) विधिना ध्वनिः सञ्चरति।

ध्वनेः सञ्चारः प्रकाशसञ्चारापेक्षया विलक्षणः। प्रकाशः सर्वदा यष्टिवत् ऋजुमार्गेण सञ्चरति, वक्रगत्या कदापि न व्रजति। प्रासादस्य छिद्राद् यद्वा गवाक्षजालरन्ध्रात् प्रकाशो यष्टिवद् ऋजुरेखया प्रकोष्ठान्तःप्रदेशस्यैकेन मार्गेण प्रविशति, न तु प्रकोष्ठस्य सर्वस्मिन् देशे। किन्तु गवाक्षजालरन्ध्रमार्गेण प्रविष्टो ध्वनिः प्रकोष्ठस्य सर्वस्मिन् भागे प्रसरति। जलवद् वायुवच्च ध्वनिः सर्वत्र सञ्चरति। इदमेव विवर्तनम् प्रोच्यते। इत्थं नूतनध्वनिवैज्ञानिकाः स्वीकुर्वन्ति।

वस्तुतस्तु माध्यमेन नियन्त्रिते सति तु ध्वनिः नियतदेशमेव सञ्चरति, नान्यत्र। माध्यमेन नियतदेशं गतः सन् तत्र च अभिव्यक्तौ नियतदेशे यद्वा सर्वत्र च चतसृषु दिक्षु श्रूयते। नियतदेशे यथा—तारमाध्यमेन फोननामके[2] यन्त्रे। सर्वत्र चतसृषु दिक्षु यथा—विद्युन्माध्यमेन दूरध्वनिग्राहकयन्त्रे[3]। जलवद् वायुवच्च ध्वनिः नियन्त्रितानियन्त्रितावस्थाभेदेन एकत्र सर्वत्र च अभिव्यक्तः सन् श्रूयते। यथा कुल्यानियन्त्रितं जलम् इतस्ततो न गच्छति, किन्तु कुल्लीमार्गमेवानुसरति।

---

"यह प्रतिध्वनि छोटे कमरे में नहीं सुनायी पड़ती। इसका कारण यह है कि जब हमारे कान में एक ध्वनि-तरंग पहुँचती है तो उसका प्रभाव कान में १।१० सेकेण्ड तक बना रहता है। इस १।१० सेकेण्ड के बाद दूसरी ध्वनि कान में पहुँचती है तो यह सुनायी नहीं देती और यदि १।१० सेकेण्ड के बाद दूसरी ध्वनि कान में पहुँचती है तो सुनायी पड़ती है। छोटे कमरे में परावर्तित ध्वनि १।१० सेकेण्ड के भीतर ही पहुँच जाती है।

आपतित तथा परावर्तित ध्वनि-तरङ्ग दोनों की चाल समान रहती है, अतः प्रतिध्वनि द्वारा दोनों की चाल सरलता से निकाली जा सकती है।"

—श्रीरामकुमारसिंहस्य 'नूतनभौतिकी' ( पृ० सं० १८२ )

१. रिफ्लेक्शन। २. टेलीफोन। ३. रेडियो।

कुल्लीमार्गेण केदारखण्डं गतञ्च सर्वतः प्रसरति। एवं ध्वनिविषयेऽपि बोद्धव्यम्। ध्वनिप्रेषककेन्द्रस्थानात् प्रेषिता ध्वनयो माध्यमेन नियन्त्रितत्वात् नानभीष्टं देशं प्रसरन्ति। न वा यत्र कुत्रापि माध्यमेषु अभिव्यज्यन्ते। किन्तु ध्वनिग्राहकयन्त्रेषु अथ च नियतदेशेषु अभिव्यज्यन्ते। माध्यमेन नियतदेशं प्राप्ता ध्वनयो यदा अभिव्यज्यन्ते तदा सर्वासु दिक्षु प्रसरन्ति। ध्वनिग्राहकयन्त्रस्य पार्श्वस्थाश्च जनाः शृण्वन्ति। अनियन्त्रिता ध्वनयस्तु वाय्वादिमाध्यमेषु सर्वासु दिक्षु सञ्चरन्ति।

शब्दस्पर्शरूपरसगन्धानां मध्ये प्रत्येकं गुणाः सर्वदेशावच्छेदकतया अभिव्याप्य तिष्ठन्ति, न तु एकदेशावच्छेदेन। प्रकाशं तैजसं चक्षुर्विना च न रूपप्रत्यक्षम्। नीलपीतादिरूपाणि प्रकाशं सर्वावच्छेदेन व्याप्य तिष्ठन्ति। अत एव च अन्धकारे नीलो घटो नैव दृश्यते। प्रदीपप्रकाशमाध्यमेन चतसृषु दिक्षु प्रत्यक्षीक्रियते, न तु एकस्यां दिशि। अत्र नीलघटरूपं प्रदीपार्चिः सर्वावच्छेदेन व्याप्य तिष्ठति। यथा एकदेशस्थितस्यापि नीलघटरूपं तेजः सर्वावयवावच्छेदेन व्याप्य तिष्ठति; एवम् एकदेशावच्छेदेनाभिव्यक्तः शब्द आकाशं सर्वावच्छेदेन व्याप्य तिष्ठति। अतएव श्रोत्राकाशयोः सम्बन्धस्य साक्षात् कर्ता आकाशमाध्यमेन सर्वरुतं शृणोति। यथा एकदेशस्थितमपि रूपं सूर्यरश्मीन् अभिव्याप्य तिष्ठति, न तु एकदेशावच्छेदेन। अतएव पातञ्जलयोगदर्शने सूर्यसंयमाद् भुवनज्ञानस्योक्तिश्चरितार्था। सूर्यरश्मिमाध्यमेन यत्रकुत्रचित् स्थितस्य रूपस्य प्रत्यक्षं जायते। एवम् एकदेशेऽभिव्यक्तस्य शब्दस्यापि आकाशे सर्वावच्छेदेन व्याप्तिर्बोद्धव्या। अभिव्यक्तः सन् ध्वनिः सर्वमाकाशं व्याप्नोति। रूपं प्रकाशात्मनानिर्वृत्तं सदेव तेजो माध्यमेन सर्वत्र प्रसरति। चक्षुरिन्द्रियञ्च गतं सत् प्रकाशात्मना विवृतं तच्च रूपं पुनः स्वस्वरूपं भजति[1], तदा चक्षुषा तस्य प्रत्यक्षं जायते। इति मदीयोऽत्र सिद्धान्तः। एवमभिव्यक्तौ ध्वनिरपि सर्वत्र व्याप्तः। आकाशात्मना विवृत्तश्च स शब्दः पुनः स्वस्वरूपं भजति। श्रोत्रेन्द्रियेण च तस्य प्रत्यक्षं जायते। यथा ध्वनिप्रेषककेन्द्रस्थानाद् ध्वनयो विद्युद्रूपेण विवर्त्य प्रसार्यन्ते। ध्वनिग्राहकयन्त्रे च विद्युद्ध्वनिपृथक्कर्तृयन्त्रेण विद्युत्तरंगेभ्यः थक् क्रियन्ते, तदा ध्वनयोऽभिव्यज्यन्ते। एवमाकाशरूपमाध्यमेऽपि अभिव्यक्तः शब्दः तदात्मना विवर्तते, विवर्त्य च सर्वत्र व्याप्नोतीत्यत्र मदीयं स्वारस्यम्। विषयप्रत्यक्षे प्रतिबिम्बवादस्याप्यत्रैव स्वारस्यं सन्निहितम्।

ये च नूतनभौतिकवैज्ञानिकाः—'रूपप्रत्यक्षे न किमपि वस्तु स्वस्थानं परित्यज्य चक्षुरिन्द्रियं समागच्छति, किन्तु तेजो रूपस्य प्रतिबिम्बमादाय चक्षुरिन्द्रियं

१. अत्र विवादः, केषाञ्चिन्मते चक्षुरिन्द्रियस्यैव विषयदेशे सञ्चारस्वीकारात्।

समर्पयति, तदा रूपप्रत्यक्षम्'— इत्येवं मन्यन्ते, तेषामपि मदुक्तावेव स्वारस्यं सन्निहितम्, 'व्याप्तिसत्त्वात्तु शब्दस्य' इति निरुक्तमपि मदुक्तसारगर्भितम् ।

**काणाद-नैयायिकमतानुसारेण ध्वनिसञ्चारविधिः**

नैयायिका वीचितरङ्गन्यायेन अथ च कदम्बगोलकन्यायेन श्रोतॄणां श्रोत्रदेश-पर्यन्तं ध्वनिसञ्चारं मन्यन्ते । तदुक्तं श्रीविश्वनाथकृतकारिकावल्याम्—

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ।
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ॥
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ।
वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ॥
कदम्बगोलकन्यायाद् उत्पत्तिः कस्यचिन्मते ॥ इति ।

प्रशान्ते यथा सरोवरजले प्रथमं निमित्तकारणीभूतवायुना, यद्वा प्रस्तर-खण्डस्य पातेन एका वीचिरुत्पद्यते, सा एव वीचिस्तरङ्गान्तरं समुत्पाद्य नश्यति । प्रथमवीचिजन्यतरङ्गाश्च पुनस्तरङ्गान्तरं समुत्पाद्य नश्यन्ति । एवं पूर्वपूर्व-तरङ्गेभ्य उत्तरोत्तरतरङ्गानां समुत्पत्तिर्जायते । तथैव कण्ठताल्वादिभिः निमित्त-भूतस्य वायोः संयोगविभागाभ्याम् आस्यान्तर्भूते तत्तद्देशावच्छिन्ने नभसि यः प्रथमः शब्दः समुत्पन्नः स एव कण्ठताल्वादिभिन्नदेशावच्छेदेन सर्वदिगवच्छेदेन च एकः शब्दः स्वसजातीयान् दश शब्दान् जनयति । ते च शब्दाः पुनः, स्वसजा-तीयान् शब्दान् समुत्पाद्य विनश्यन्तीति सजातीयशब्दारम्भपरम्परया श्रोतुः कर्णदेशावच्छिन्ने नभसि समुत्पन्नः सजातीयः शब्दो गृह्यते, आकाशे समवायेन समुत्पन्नस्य शब्दस्य धारावाहिकोत्पत्त्या कर्णात्मकाकाशे समुत्पन्नस्य प्रत्यक्षं भवति । प्रथमः समुत्पन्नः शब्दो न गृह्यत इत्यर्थः ।

वीचिर्यथा सर्वदिगवच्छेदेन नैकदा तरङ्गान् जनयति, परन्तु यद्देश-दिगभिमुखो वायुस्तद्देशदिगवच्छेदेन अधिकान् तरङ्गान् जनयति । तथैव भेरी-मृदङ्गाद्यवच्छेदेन जायमानः शब्दो भेर्यादिभिन्नसर्वदेशावच्छेदेन सर्वदिगवच्छेदेन च एकदैव शब्दान् जनयति । परन्तु यद्देशदिगभिमुखो वायुस्तद्देशदिगवच्छेदेना-धिकशब्दान् जनयति । ध्वनिसञ्चारस्य यद्वा सजातीयशब्दोत्पत्तेर्द्वितीयप्रकारमाह—

'कदम्बगोलकन्यायाद् उत्पत्तिः कस्यचिन्मते' । इति ।

यथा कदम्बपुष्पम् एकनालाधिकरणविशेषे स्वसमीपदेशेषु सर्वासु दिक्षु स्वसजातीयपुष्पाणि जनयति । तादृशपुष्पाणि तस्मिन्नेवाधिकरणे तत्समीपदेशेषु सर्वासु दिक्षु चान्यानि सजातीयपुष्पाणि जनयन्ति । एवं कण्ठताल्वादिदेशाव-

च्छेदेन समुत्पन्नः शब्दः स्वोत्पत्तिमूलदेशसमीपदेशावच्छेदेन दशसु दिक्षु स्वसदृशान् शब्दान् आरभते। ते च स्वसमीपदेशावच्छेदेन सर्वदिगवच्छेदेन च बहून् शब्दान् जनयन्ति। अत्र पक्षे बहूनां शब्दानां असमवायिकारणत्वकल्पनेन द्वितीयक्षण-भिन्नक्षणानां निमित्तकारणकत्वकल्पनेन गौरवात् 'कस्यचिन्मते' इत्युक्तम्। पक्षद्वयेऽपि आद्यशब्दोऽतीन्द्रियः। पूर्वपूर्वशब्देभ्य उत्तरोत्तरं जायमानाः शब्दज-शब्दनाम्नाऽभिधीयन्ते।

शब्दजशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम्। पवनादिकं तु निमित्तम्। एवमाकाशे समवायेन समुत्पन्नस्य शब्दस्य धारावाहिकोत्पत्त्या श्रोत्रदेशावच्छिन्ने आकाशे समुत्पन्नस्य ध्वनेः प्रत्यक्षं भवति। अनेन ग्रन्थप्रबन्धेन 'पूर्वपूर्वध्वनय एव उत्तरोत्तरध्वनिसञ्चारस्य माध्यमीभूताः' इत्यपि नैयायिकानां मते ध्वन्यते।

नव्यवैयाकरणमूर्द्धन्यो नागेशभट्टोऽपि नैयायिकाभिमतमेव ध्वनिसञ्चार-विषये सहमतः प्रतिभाति; ध्वनेः क्षणिकत्वस्वीकारात्। आभ्यन्तरस्यैव नित्यस्य स्फोटाख्यशब्दस्य च वाचकत्वाङ्गीकारात्।

## नव्यवैयाकरणमतमनुसृत्यात्र विवेचनम्

ध्वनिसञ्चारविषये नैयायिकैः सह सहमतोऽपि नागेशो भिन्नमेव विधिमङ्गी-करोतीति प्रतिभाति। नव्यवैयाकरणशिरोमणेः नागेशस्य मतानुसारेण अभिव्यक्तो ध्वनिर्न केवलमुत्तरोत्तरं ध्वनिं समुत्पादयति, पूर्वपूर्वध्वनयश्च उत्तरोत्तरं ध्वनिं समुत्पाद्य विनश्यन्ति। अपि तु यथासमुत्पन्नो ध्वनिः श्रोत्रविवरमार्गेण हृद्देशावच्छिन्नमाकाशं गतः सन् आभ्यन्तरं स्फोटं स्वानुरूपमुपरज्य नश्यति। एतेषां मते प्राकृतवैकृतभेदेन ध्वनेर्द्वैविध्यम्। ह्रस्वदीर्घप्लुतस्वराः, अर्द्धमात्रिकानि व्यञ्जनानि च प्राकृताख्या ध्वनयः, तेषां द्रुतमध्यमविलम्बितवृत्त्योच्चारणं मृदङ्गादिजन्याश्च ध्वनयो वैकृताख्याः स्वीक्रियन्ते। प्रणवाख्योऽनाहतध्वनिस्वरूपः आभ्यन्तरः स्फोटश्च न केवलं हृद्देशावच्छिन्नाकाशे एव तिष्ठति, अपि तु हृदन्त-राकाश इव बाह्याकाशमपि व्याप्य तिष्ठति। अयञ्च प्रणवरूपः स्फोटः सर्वव्यापको नित्यश्च। उक्तञ्च—

नाड्याधारस्तु नादो वै भित्त्वा सर्वमिदं जगत्'॥ इति।

( स्व० तं०, प० १०, श्लो० १२३४ )

भित्त्वेत्यस्य व्याप्येत्यर्थः। वैयाकरणलघुसिद्धान्तमञ्जूषायामपि शक्त्या-श्रयनिरूपणे—

'अयञ्च शब्दस्तत्तत्प्राणिहृदयदेशावच्छिन्नाकाशदेशस्थः सर्वसमष्टेर्विराजो

हृदयरूपवाह्याकाशदेशस्थः। स च लाघवाद् एक एव विभुः। यथैकत्र श्वेतद्रव्ये रूपं व्यापकम्, तथाऽस्याप्याकाशदेशस्थं तथात्वमुचितम्। एक इन्द्र शब्दः क्रतुशते प्रादुर्भूतः सर्वयागेष्वङ्गं भवति' इति 'सरूपाणामेकशेष एकविभक्तौ' ( पा० सू० १।२।६४ ) सूत्रभाष्यात्। इति।

आस्यान्तर्गतकण्ठताल्वादिषु स्पृष्टादिप्रयत्नैः समुत्पन्नाः अकारादिध्वनयो बाह्याकाशस्थं सर्वप्राणिषु व्याप्तं शब्दं स्वस्वरूपं कृत्वा स्वसजातीयाँश्च स्वाव्यवहितोत्तरान् ध्वनीन् समुत्पाद्य नश्यन्ति। पूर्वध्वनिभिः समुत्पादिताश्च ध्वनयः बाह्याकाशदेशस्थं स्फोटाख्यं शब्दं स्वस्वरूपरूषितं कृत्वा पुनः स्वोत्तरांशशब्दान् समुत्पाद्य नश्यन्ति। एवं क्रमेण स्फोटाभिव्यञ्जकपूर्वपूर्वध्वनिभिः समुत्पन्नाः उत्तरोत्तरध्वनयः स्फोटाख्यं शब्दब्रह्म स्वस्वरूपेण अभिव्यञ्जयन्तः, श्रोतृ-श्रोत्रदेशं गच्छन्तश्चतसृषु दिक्षु प्रसरन्ति। एवमुक्तरीत्या आकाशवृत्तिरेकः स्फोट एव आरोपित-कत्वादिरूपेण स्व-पर-श्रोत्रग्राह्यः। कत्वादिध्वनयश्च स्फोटाख्यं नित्यं शब्दं स्वरूपरूषितं कुर्वन्तो वीचितरङ्गन्यायेन स्वसजातीयान् ध्वनीन् आरभमाणाः सञ्चरन्ति।

नव्यवैयाकरणमते ईदृशध्वनिसञ्चारस्वीकारे प्रमाणं वैयाकरणलघुसिद्धान्तमञ्जूषायां शक्त्याश्रयनिरूपणप्रकरणमेव। अस्मिन् प्रकरणे वैखर्या वाचः क्षणिकत्वम् उत्पन्नविनाशित्वञ्च स्वीकृते। अविद्यमानस्य शब्दस्य शक्त्याश्रयत्वस्वीकारे 'नष्टो घटो जलवान्' इत्याद्यापत्तिमाशङ्क्य वैखर्या वाचः शक्त्यनाश्रयत्वमङ्गीकृतवान्। कर्णविवरमार्गेणान्तःप्रविष्टैः क्षणावस्थायिध्वनिभिः जपाकुसुमादिभिः स्फटिक इव तत्तद्ध्वन्यात्मनोपरञ्जितः स्फोट एव अर्थावबोधकः इति स्वीकृतवान्।

किञ्च श्रोतृपर्यन्तं ध्वनिसञ्चरणविषये इदं मदुक्तं तथ्यं निम्नोक्तं निरुक्तभाष्यमपि पोषयति। तद्यथा वैयाकरणलघुसिद्धान्तमञ्जूषायां स्फोटनिरूपणावसरे—निरुक्तभाष्येऽपि—उक्तरीत्या पदसत्ताभावशङ्कोत्तरभूतम् 'व्याप्तिमत्त्वात्तु शब्दस्य' ( निरु० नै० १।१।२ ) इति प्रतीकमुपादायोक्तम्—'अभिधानाभिधेयरूपा बुद्धिर्हृदयाकाशप्रतिष्ठिता परबोधनेच्छया पुरुषेणोदीर्य कण्ठादिषु वर्णभावमापद्य ( माना ) बाह्याकाशस्थं शब्दं स्वस्वरूपं कृत्वा श्रोत्रद्वारे तत्र स्थितां श्रोतुर्बुद्धिमनुप्रविश्य सर्वार्थसर्वाभिधानरूपां तद्बुद्धिं व्याप्नोति। पुरुषप्रयत्नजा वक्त्रोद्धाताः परं नश्यन्ति, न शब्दः।'

'वक्त्रोद्धाताः' इत्यस्य वर्णरूपा ध्वनय इत्यर्थः। अत्रोपर्युद्धृते 'बाह्यकाशस्थं शब्दं स्वरूपरूपं कृत्वा' इत्युक्तिर्मदुक्तावेव तात्पर्यमादधाति।

**सांख्यमते** तु पृथ्व्यादिविकाराणां दूरदेशगमनासम्भवः। इन्द्रियाणि च भौतिकानि, जडत्वाद् विषयदेशं गन्तुमसमर्थानि। अतः अहङ्कार एव तत्तद्-इन्द्रियप्रणाल्या निर्गत्य विषयदेशं गच्छति। श्रोत्रादीन्द्रियाणि आकाशवायुतेजो-जलपृथ्व्यधिष्ठानकानि आहङ्कारिकाणीति स्वीकर्तव्यम्। अहङ्कारोऽन्तःकरणस्य परिणामभूतः। अन्तःकरणस्य बहुदूरदेशगमनानुभवाद् दूरदेशस्थस्य विषयस्य प्रत्यक्षं सुकरम्। अतएव योगीन्द्रियाणामत्यन्तदूरदेशस्थविषयोपलब्धिजनकत्वम्। अस्मिन् मते तु ध्वनिर्न सञ्चरति, अपि तु आकाशस्थो यस्मिन् देशेऽभिव्यक्तः, तथैव तिष्ठति, नभोऽधिष्ठानकधर्मविशेषम् आहङ्कारिकं श्रोत्रमेव ध्वनिदेशं प्रसरति।

**प्रतिबिम्बवादः**

अत्र पक्षेऽभिव्यक्तो ध्वनिः स्वयमेव श्रोतृप्रदेशं न गच्छति, अपि तु तस्य प्रतिबिम्बं विद्युदादिमाध्यमेन प्रसरति। उक्तञ्च श्रीतन्त्रालोकस्य तृतीये आह्निके—

इत्थं प्रदर्शितेऽमुत्र प्रतिबिम्नबवर्त्मनि।
शब्दस्य प्रतिबिम्बं यत् प्रतिश्रुत्केति भयते॥ २४॥

न चासौ शब्दजः शब्द आगच्छत्वेन संश्रवात्।
तेनैव वक्त्रा दूरस्थैः शब्दस्याश्रवणादपि॥ २५॥

पिठरादिविधानांश विशिष्टच्छिद्रसङ्गतौ।
चित्रत्वाच्चास्य शब्दस्य प्रतिबिम्बं मुखादिवत्॥ २६॥ इति।

ध्वनिप्रतिबिम्बमेव श्रोत्रदेशावच्छिन्नाकाशे प्रतिफलति। 'श्रोत्रेन्द्रियेण गृह्यमाणः शब्दो न शब्दजन्यशब्दजः' इति मतं प्रतिबिम्बमस्तित्वोपपाद-नाय। तन्मतमाशङ्क्य दूषयति—'न चासौ शब्दजः शब्द' इत्यादि। असाविति प्रतिश्रुत्का। शब्दज इति न पुनः संयोगजो विभागजो वा। स्वत एव स्वहेतुसमु-त्थत्वादयं मुख्यः शब्द इति भावः। स च वक्त्रदेशाद् गच्छन्निव प्रतीयते। अत एव तत्सविधवर्तिभिः प्रमातृभिराद्य एव शब्दस्तीव्रतमप्रायः श्रूयते, न पुनरन्त्यो मन्दतमप्रायः, दूरदेशवर्तिभिः पुनरन्त्य एव न त्वाद्य इति। प्रतिश्रुत्का पुनस्तेनैव वक्त्रा तत्समीपस्थैर्वा प्रमातृभिरागच्छत्वेन स्वसंमुखं प्रवर्तमानत्वेन संश्रूयते। अत एव च दूरस्थैः गह्वरगुहाप्रायदेशस्थैः प्रमातृभिर्न श्रूयते; तदाभि-मुख्येन तस्याः प्रवर्तमानत्वाभावात्। मुख्यः शब्दश्च बहूनां श्रोतॄणां श्रोत्राकाश-देशमधिशयानो न भिन्नभिन्नस्वरूपतामभ्येति। तथात्वे हि सर्वेषामेव श्रोतॄणा-मेकविषयत्वेन प्रवृत्तिर्न स्यात्। प्रतिश्रुत्का पुनरधःस्थितक्वथितसशब्दपानीय-भाण्डाच्छादनरूपाः पिठरादयो ये उपादानविशेषास्तेषां यानि विशिष्टानि

स्थूलसूक्ष्मादिरूपाणि --सुषिरा भागास्तत्र संगतौ तदाकाशमेलनेन एकशब्दात्म-वैचित्र्यं यायाद् इति। वस्तुभूतशब्दजशब्दजातीयत्वानुपलब्ध्या नासौ शब्दजः शब्दः। तस्माद् यथामुख्यस्य दर्पणादौ प्रतिबिम्बमस्ति, तथा मुख्यस्य शब्दस्यापि नभसीत्याह श्रीतन्त्रालोके तृतीयाह्निके—

अस्य शब्दस्य प्रतिबिम्बं मुखादिवद् ॥ २४-२५ ॥ इति।

यथा एकस्यैव बिम्बस्य रूपबिम्बस्य बहूनि प्रतिबिम्बानि दृश्यन्ते, तथैव सकृदुच्चरितस्य एकस्यैव शब्दस्य चतसृषु दिक्षु बहूनि प्रतिबिम्बानि।

अत्रेयं शङ्का जागर्ति—यदि सकृद् उच्चरितः शब्द एव सर्वत्राकाशे प्रतिबिम्बतामेति, तर्हि दूरदेशस्थितैरथ च गिरिगह्वरगुहादेशस्थैरपि शब्दः श्रूयेत, किन्तु न श्रूयते इति चेन्न; तदाभिमुख्येन तस्य प्रवर्तनाभावात्। दर्पणादौ बिम्बसाम्मुख्ये सत्येव प्रतिबिम्बं गृह्यते। तस्मात्तयोः बिम्बप्रतिबिम्बयोरन्तर्वर्तिन एव प्रमातारस्तं बिम्बसामुख्येन प्रतिबिम्बम् प्रतिशब्दं शृण्वन्ति।

उक्तञ्च श्रीतन्त्रालोकस्य तृतीयाह्निके—

नियमाद् बिम्बसाम्मुख्यं प्रतिबिम्बस्य यत्ततः।
तन्मध्यगाः प्रमातारः शृण्वन्ति प्रतिशब्दकम् ॥ २८ ॥ इति।

'प्रतिशब्दकम्' इत्यस्य प्रतिबिम्बमित्यर्थः। बिम्बप्रतिबिम्बयोर्मध्यदेश एव प्रमाता तद्गृह्णाति, नान्यः; यतो हि आदर्शपाश्चात्यभागस्थो मुखं न वेत्ति। तथैव पश्चात्स्थो गह्वरगुहाप्रायदेशस्थो प्रतिश्रुत्कालक्षणं ध्वनिं न वेत्ति। अभिव्यक्तः शब्द एव प्रतिबिम्बति, न तु अनभिव्यक्तः।

अत्रैयं शङ्का जागर्ति—प्रथमक्षणे स्थानकरणाभिघातादभिव्यक्तः सन् श्रोत्रेन्द्रियग्राह्यतामवगाहते। द्वितीयक्षणे पुनः प्रतिबिम्बतामश्नुवानः श्रूयते। एवम् उच्चरितप्रध्वंसिनः शब्दस्य प्रतिबिम्बतावसरे प्रतीतिः। अतश्च नात्र रूपप्रतिबिम्बजातीयत्वम्, तत्र प्रतिबिम्बकालेऽपि बिम्बस्य प्रतीतेः? इति चेद-त्रोच्यते—

हस्तबिम्बस्य छायारूपनिश्चयावसरे हस्तबिम्बस्य न प्रतीतिः। नहि प्रतिबिम्बप्रतीतौ बिम्बस्यापि हस्तादेः प्रतीतिर्युक्ता; युगपत्प्रतीतिद्वयविरो-धात्। यद्यपि हस्तादेः प्रतिभासाभावेऽपि वस्तुनोऽवस्थानमस्ति, तथापि आभास एव हि सर्ववस्तुव्यवस्थापकः—इति सिद्धान्ताद् आभासमन्तरा अर्थानां सत्वासत्त्व-निश्चयायोगः। किञ्च शब्दस्य द्वितीयक्षणेऽपि नश्यदवस्थस्य वस्तुतः सद्भावोऽ-स्ति। किन्तु प्रतिबिम्बतावसरे तस्य प्रतीतिरेव न भवेदिति। एवमत्रापि न बिम्बप्रतिबिम्बयोर्युगपत् प्रतीतिः। वस्तुतस्तु अभिव्यक्त्यव्यवहितोत्तरकालमेव प्रतिबिम्बता, श्रुतिश्च एककालावच्छेदेन भवतः; दर्पणे बिम्बाभिमुखाव्यवहितो-

त्तरकालमेव प्रतिबिम्बफलनात्। किञ्च, अन्तरिक्षे क्षणमात्रमपि विद्योतिता विद्युच्चक्षुःसंयोगे सति न दृश्यते इति न, किन्तु दृश्यत एव। एवं श्रोत्रेन्द्रियेण ध्वनिप्रत्यक्षविषयेऽपि बोद्धव्यम्। शब्दो विद्युत्कालपरिमितमात्रास्थितिकाल एव अम्बरे प्रतिबिम्बतामेति। किञ्च, ह्रस्वदीर्घप्लुतस्वराणाम् उत्तरोत्तर-स्थितिकालोऽधिकः। ह्रस्वस्य अकारस्य यावान् स्थितिकालः, न तावान् दीर्घा-कारस्य। एवं यावत्कालो दीर्घः न तावत्कालः प्लुतः, किन्तु ततोऽधिकः। किञ्च-स्वराः वक्तुरुच्चारणशक्त्यनुसारेण स्थितिकालाः। स्वराणां स्थितिकालस्य परिमाणो न विद्यते। अतः प्रतिबिम्बकालेऽपि बिम्बस्यात्र समुपलब्धिसम्भवः। अर्द्धमात्रिकव्यञ्जनानां तु स्थितिकालस्य परिमितत्वात् घटादिशब्देषु घकारा-दिवर्णानां व्यवहितत्वनिवारणाय च स्वराणां कालो नियतः कृतः। घटपटादि-घटकाकारादिस्वराणां चिरकालमुच्चारणे कृते सति वर्णानां पदानाञ्च परस्परं निराकांक्षत्वापत्तेः, पदवाक्यार्थबोधश्च दुर्घटः। अतो लोकव्यवहारार्थम् असीमित-काला अपि स्वराः परिमितकालनियताः कृताः।

### महाभाष्यकृत्पतञ्जलिमते ध्वनिसञ्चारः

महाभाष्यकारो भगवान् पतञ्जलिः शब्दस्य नित्यानित्योभयोः पक्षयो-र्व्याकरणशास्त्रस्य प्रवर्तनमङ्गीकृतवान्। उक्तञ्च महाभाष्यस्य पस्पशाह्निके—

'किं पुनर्नित्यः शब्दः? आहोस्वित् कार्यम्? सङ्ग्रह एतत् प्राधान्येन परीक्षितम्—नित्यो वा, सत्कार्यो वेति। तत्रोक्ता दोषाः। प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः–यद्येवं नित्यः, अथापि कार्यः, उभयथाऽपि लक्षणं प्रवर्त्यम् इति।

एवं व्याकरणशास्त्रस्योभयथा प्रयोजनं प्रदर्श्य पाणिनीयं व्याकरणं तु शब्दं नित्यं मत्वा प्रवृत्तमिति स्वीकृतम्। महाभाष्यस्य पस्पशाह्निके 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र नित्यानित्योभयमप्यर्थं प्रतिपाद्य 'अत्र किमर्थकस्य सिद्ध-शब्दस्य ग्रहणम्'? इत्याशङ्क्य 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्' इति नित्यपर्यायवाचिनो ग्रहणम्, इत्यादियुक्तिवचनैः अनित्यार्थकस्य सिद्धशब्दस्य ग्रहणं निराकृतम्। 'सिद्धे शब्दार्थसम्बन्धे' इत्यस्य 'सिद्धे शब्दे अर्थे सम्बन्धे च' इति व्याख्यानम्। अर्थात् नित्ये शब्दे अर्थे तयोः सम्बन्धे च पाणिनीयं शास्त्रं प्रवृत्तम्। शब्दानाम् तद्वाच्यार्थानाम्, शब्दार्थयोः सम्बन्धाश्च नित्याः। किञ्च, अर्थापेक्षया शब्दस्य सुतरां नित्यत्वं साधितम्। यतो हि ये अनित्याभावास्तेषां निर्माणे यत्नः क्रियते, तद् यथा घटार्थी कुम्भकारकुलं गत्वा आह – 'कुरु घटम्, कार्यमनेन करिष्यामि' इति। न तद्वच्छब्दान् प्रयुयुक्षुर्जनो वैयाकरणकुलं गत्वा वदति—'कुरु शब्दान्, प्रयोक्ष्ये' इति। विवक्षायामभीष्टार्थवाचकं शब्दं प्रयुङ्क्ते। तस्मान्नित्याः शब्दाः।

शब्दनित्यत्वपक्षे भाष्यकृन्मतानुसारेण मुखोच्चरित एव शब्दः शकुनिवत् सर्वत्र सञ्चरतीति 'अ इ उ ण्' इति पाणिनीयसूत्रभाष्ये 'शकुनिवत् स्युः' इति वार्त्तिकाद् ध्वन्यते। 'दण्ड+अग्रम्=दण्डाग्रम्' इत्यादिशब्देषु बहूनामकाराणां दर्शनात्, कालव्यवायाद्, शब्दव्यवायाच्च, युगपद्देशपृथक्त्वदर्शनाच्च अकारस्य आन्यभाव्यमाशङ्कितवान्। य एकः स युगपद् पृथग्देशेषु नोपलब्धुं शक्येत। नह्येको देवदत्तो युगपत्स्रुघ्ने भवति, मथुरायाञ्च; यदि पुनरिमे वर्णा युगपद् देशपृथक्त्वेषूपलभ्यन्ते, तर्हि तेषामान्यभाव्यं स्वीकार्यम्? इत्येवमाशङ्क्य शकुनिवत् समाधानं कृत्वा 'एकस्यैव अकारादिवर्णस्य घटः, पटः—इत्यादिशब्देषु समुपलब्धिर्जायते' इति निर्णीतम्। तद्यथा शकुनयः आशुगामित्वात् पुरस्ताद् उत्पतिताः पश्चाद् दृश्यन्ते, एवमकारः 'द' इत्यत्र दृष्टो 'ण्ड' इत्यत्र दृश्यते। यथा एक एव अकारः शकुनिवद् आशुगामित्वाद् दण्डादिशब्दघटकेषु दकारादिदेशेषूपलभ्यते।

शकुनिवद् ध्वनिसञ्चारस्वीकारपक्षे शब्दानामनित्यत्वापत्तिः स्याद्। अत आदित्यवद् वर्णानां युगपद् देशपृथक्त्वेषूपलब्धिर्बोद्धव्या। उक्तञ्च महाभाष्ये—

'यदि पुनरिमे वर्णाः आदित्यवत् स्युः। तद् यथा एक आदित्योऽनेकाधिकरणस्थो युगपद् देशपृथक्त्वेषूपलभ्यते'। इति।

तद्यथा एक आदित्यः अनेकाधिकरणस्थः सन् युगपद् विभिन्नदेशेषूपलभ्यते, एवम् एक एव अनेकमुखेभ्यः प्रोच्चरितोऽकारादिवर्णो युगपद्देशपृथक्त्वेषु श्रोत्रेन्द्रियेण गृह्यते इति "आदित्यवत् स्युः" इति वार्त्तिकाद् एतद्भाष्याच्च ध्वन्यते। किञ्च एकदेशस्थेऽपि आदित्यो युगपद् देशपृथक्त्वेषूपलभ्यते दर्शिभिः, एवमकारादिध्वनिविषयेऽपि समूहनीयम्। यद्यपि नैको द्रष्टा आदित्यं युगपद् देशपृथक्त्वेषूपलभते, तथाऽपि बहवो द्रष्टार एकम् आदित्यम् एकाधिकरणस्थम्, यद्वा अनेकाधिकरणस्थं देशपृथक्त्वेषूपलभन्त एव। यद्यपि 'आदित्यवत् स्युः' इति वार्त्तिकं तद्भाष्यञ्च शब्दप्रयोगकर्तृपक्षे समाधानपरं नास्ति।

उक्तञ्च यथाधस्तात्—

'विषम उपन्यासः, नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपद्देशपृथक्त्वेषूपलभते। अकारं पुनरुपलभते।'

इत्युपर्युद्धृतवचनैरादित्यवत् समाधानमसन्तोषावहं स्वीकृतम्। ततश्चान्यत् समाधानं कृतम्—

'अकारमपि नोपलभते। किं कारणम्? श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः। एकञ्च पुनराकाशम्' इति।

नानात्ववादी च पुनः शङ्कां कृतवान्—आकाशदेशा अपि बहवः। यावता बहवस्तस्माद् आन्यभाव्यमकारस्य, घटत्वाद्यवच्छेदेन आकाशभेदाद्? इति।

ततश्चैकत्ववादिना समाधानं कृतम्—'आकृतिग्रहणात् सिद्धम्। अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति, तथेवर्णाकृतिः, तथोवर्णाकृतिः।' इति।

एवमुपर्युद्धृतवचनैः शब्दप्रयोगकर्तृभिः 'घटपटादिशब्दघटकघकारादिषु एक एव अकारः प्रयुज्यते; सर्वेषामकाराणाम् आकृतेरैक्यात्। इत्येवं समाधानं कृतम्। तथाऽपि शब्दश्रोतृपक्षे तु 'आदित्यवत् स्युः' इति वार्त्तिकम् 'एक एव शब्दः सर्वत्र अनेकैः श्रोतृभिः श्रोत्रेन्द्रियेण गृह्यते' इति सिद्धान्तं पोषयत्येव। 'आदित्यवत् स्युः' इति वार्त्तिकस्य 'यथाऽऽदित्योऽनेकत्र घटादिस्थजलेषु युगपत् प्रतिबिम्बते, तेषाम् आदित्यप्रतिबिम्बानाञ्च आकृत्या ऐक्यम्। एवमकारादिध्वनिरप्येकदेशस्थः सन् सर्वत्र प्रतिबिम्बतामायाति, तेषां प्रतिबिम्बानाञ्च आकृत्यैक्यम्' इति तात्पर्यं प्रतिबिम्बवादमतानुसारेणावसीयते।

यद्वा 'सरूपाणामेकशेष एकविभक्तौ' (१।२।६४) इति पाणिनीयसूत्रस्थभाष्ये 'इतीन्द्रवद् विषयः' इति वार्त्तिकोक्तभाष्यरीत्या ध्वनिसञ्चारविधिः स्वीकार्यः। यथा एक इन्द्रोऽनेकस्मिन् क्रतुशते आहूतो युगपत् सर्वत्र भवति, एवम् एक एव अकारादिशब्दः अभिव्यक्तः सन् श्रोत्रशतेन गृह्यते। यथा एक एव इन्द्रः स्वरूपेणाप्रच्युतः सन् क्रतुशतेषु युगपद् आविर्भवतीति एवं ध्वनिप्रेषककेन्द्रस्थानात् प्रेषित एक एव शब्दः समानान्तरदेशस्थितेषु ध्वनिग्राहकयन्त्रशतेषु युगपद् आविर्भवति। एवमभिव्यक्तः सन् एक एव वर्णः क्रतुशतेषु इन्द्रवद् अनेकाधिकरणस्थः सन् श्रूयते।

तदित्थं महाभाष्ये शकुनिवद्, आदित्यवद्, इन्द्रवच्चेति एकस्यैव शब्दस्य देशपृथक्त्वेषु त्रिविधो ध्वनिसञ्चारो ध्वनितः॥

ध्वनिसञ्चारस्य चतुर्थो विधिः 'तपरस्तत्कालस्य' ( १।१।७० ) इति पाणिनीयसूत्रे 'भेर्याघातवद्' इति वार्त्तिकभाष्ये उपलभ्यते। तथा हि—

"एवं तर्हि स्फोटो ध्वनिः शब्दगुणः" कथम्? भेर्याघातवत्। तद् यथा भेर्याघातो भेरीमाहत्य कश्चिद् विंशति पदानि गच्छति, कश्चित् त्रिंशत्, कश्चिच्चत्वारिंशत्, स्फोटस्तावानेव भवति। ध्वनिकृता वृद्धिः।

'ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महाँश्च केषाञ्चिद् उभयं तत्स्वभावतः'॥ इति।

अत्र महाभाष्ये ह्रस्वदीर्घप्लुतस्वराः, अर्द्धमात्रिकानि व्यञ्जनानि च स्फोटाख्यां लभन्ते। द्रुतमध्यमविलम्बितवृत्त्योच्चारणञ्च ध्वनिपदेन व्यपदिश्यते। कश्चिद् ह्रस्वमकारमुच्चैः, कश्चिन्नीचैरुच्चारयति। कश्चिद् वक्ता ह्रस्वाकारा-

ह्युच्चारणे अल्पमेव ध्वनिम्, कश्चिच्च ततोऽधिकं ध्वनिं करोति, परन्तु सर्वासु वृत्तिषु ह्रस्वाद्यकारा एव उपलभ्यन्ते। एवं ध्वनयो विभिद्यन्ते, किन्तु ह्रस्वाकारादिरूपस्फोटस्तु न। अत्र उच्चैस्त्वं नीचैस्त्वञ्च एतदुभयं ध्वनिकृतमेव।

अनेनोपर्युक्तमहाभाष्येण 'अभिव्यक्तः शब्दः स्वाभिव्यक्तिजनकस्थानेष्वेव तिष्ठति। तस्य ध्वनिरेव सर्वत्र सञ्चरति'—इति ध्वन्यते। यथा एकदेशस्थः प्रदीपः स्वार्चिषा सर्वं वेश्माभिज्वालयति, एवम् उच्चारयितृमुखेऽभिव्यक्तः शब्दः तत्रस्थश्च स्वध्वनिभिः सर्वासु दिक्षु सर्वेषां श्रोत्रेन्द्रियज्ञानतन्तून् चेष्टते। अर्थात् उच्चारयितृमुखेऽभिव्यक्तस्य शब्दस्य ध्वनिरेव सर्वत्र सञ्चरति, स्फोटात्मकः शब्दस्तु स्वदेशस्थ एव भवति। यथा एकदेशस्थस्य प्रदीपस्य ज्योतिः धारावाहिकरूपेण सर्वत्र प्रसरति, एवम् एकदेशस्थस्य शब्दस्यापि ध्वनिः सर्वत्र सञ्चरति।

**अत्र तथ्यातथ्यविचारः**

तदित्थमत्र ध्वनिसञ्चारविषये वीचितरङ्गन्यायः, कदम्बगोलकन्यायः, प्रतिबिम्बवादः, शकुनिवद्, आदित्यवद्, इन्द्रवद्, प्रदीपार्चिवत्—इत्येवं वादाः शास्त्रेषु प्रसिद्धाः। एक एव विषयः तत्त्वदर्शिभिः विद्वद्भिः रुचिवैचित्र्याद् अधिकारिभेदाच्च बहुधा प्रतिपादितः। वस्तुतस्त्वत्र महाभाष्यप्रतिपादितः अथ च श्रीतन्त्रालोकस्य तृतीयाह्निके प्रतिबिम्बवादस्य एव ध्वनिसञ्चारविधिः समीचीनः प्रतिभाति। आहङ्कारिकाणां सांख्यानामपि मतं न समीचीनं प्रतीयते; अनेकश्रोत्रेन्द्रियवृत्तिकल्पनापेक्षया अनन्तपरमाणुकल्पनापेक्षया च एकस्य शब्दस्य, एकस्य आकाशस्य च कल्पने लाघवात्। नैयायिकसरणिमधिकृत्य वर्णानां कण्ठताल्वभिघातजानां जन्यत्वपक्षे शब्दजशब्दन्यायेन वीचितरङ्गवद् श्रोत्रगमनाङ्गीकारे च सर्वजनानुभवसिद्धप्रत्यक्षस्य सुतरामपलापः। तद् यथा श्रुते वर्णे 'देवदत्तोऽस्योच्चारकः, अयमेतदीयो ध्वनिः, अयञ्च शैलूषः कण्ठविवरं सङ्कोच्य व्यक्त्यन्तरं ध्वनिमुत्पादयति'—इति प्रतीतिः सर्वानुभवसिद्धा। जन्यत्वपक्षे, शब्दजे शब्दे च श्रुतस्य तस्य ध्वन्यात्मकस्य ककारादेर्वर्णस्य एतद्व्यक्त्युच्चरितत्वं वक्तुमसुकरम् उच्यते। तस्माज् जन्यत्वपक्ष इव शब्दजशब्दपक्षोऽपि तेषां शशशृङ्गवत् खपुष्पमेव। अभिव्यक्तिवादिनां शाब्दिकानामन्येषां मीमांसकानाञ्च निकाये कण्ठताल्वभिघातजामभिव्यक्तिमेव श्रोतृश्रोत्राणि गृह्णन्ति। अतस्तादृशप्रत्यये बाधाभावः। जन्यत्वपक्षस्तु तत्तदयुक्तिभिराचार्यवचनैश्च पुरा निराकृत एव। इदानीं शब्दजशब्दपक्षोऽपि ध्वस्तप्रायः।

आधुनिकभौतिकविज्ञानसम्प्रदाये 'ध्वनितरङ्गः'—इत्येवं व्यवहारस्तु अन्यतात्पर्यकः। एकस्य ध्वनेर्गतिः ध्वनिवेगः समुच्यते। बहूनाम् अकारादिध्वनीनां वेगसमूहस्तरङ्गनाम्ना व्यपदिश्यते। यथा ध्वनिसञ्चारमाध्यमस्य एकस्मिन्

परमाणौ स्पन्दनक्रियाकम्पनाम्नाऽभिधीयते। बहूनां परमाणूनां कम्पनसमूहश्च तरङ्गनाम्ना व्यपदिश्यते। एवं ध्वनेस्तरङ्गविषयेऽपि वोद्धव्यम्। किञ्च नूतन-ध्वनिवैज्ञानिकानां मतानुसारेण रूपप्रत्यक्षे न किमपि वस्तु स्वस्थानं परित्यज्य स्थानान्तरं सञ्चरति, अपि तु तेजो रूपविशिष्टानां समेषां पदार्थानां प्रतिबिम्बं गृहीत्वा चक्षुःसन्निकर्षं प्रापयति, ततो रूपप्रत्यक्षं जायते। तेजो रूपप्रतिबिम्बं देशाद् देशान्तरं प्रापयतीत्यमुमेव सिद्धान्तमाश्रित्य चलचित्राणि निर्मितानि। एनं सिद्धान्तं ध्वनिसञ्चारविषयेऽपि तैः भौतिकैः स्वीकरणीयम्। रूपप्रत्यक्षे प्रति-बिम्बवादः, ध्वनिपक्षे च तरङ्गवादः—इत्यर्द्धजरतीयमनुचितम्। चतसृषु दिक्षु परिमण्डलाकारेण स्थितेषु बहुषु दर्पणेषु मध्ये स्थितस्य एकस्य बिम्बस्य प्रति-बिम्बानि प्रतिफलन्ति। एवम् अभिव्यक्तस्यैव एकस्य शब्दस्य अम्बरे प्रतिबिम्बानि फलन्ति। ध्वनिग्राहकयन्त्रादिष्वपि विद्युन्माध्यमेन ध्वनिप्रेषककेन्द्रस्थानाद् ध्वनेः प्रतिबिम्बान्यभिव्यज्यन्ते।

यद्वा, यथाऽस्माकं प्रतिबिम्बं तेजोमाध्यमेन देशान्तरं व्रजति, वयमपि च पद्भ्यां यद्वा वायुयानादिमाध्यमेन देशान्तरं व्रजामः, एवं ध्वनिसञ्चारविषयेऽपि उभये क्रिये सम्भवतः।

वस्तुतस्तु अभिव्यक्तः शब्दः कूटस्थः सन् प्रकोष्ठे वस्तूनि प्रदीपार्चिरिव स्वप्रकाशनशक्त्या आकाशदेशस्थं स्फोटाख्यं शब्दं, तद्वाच्यार्थं स्वात्मानञ्च प्रकाशयति॥

॥ इति शम्॥

# प्राचीनकालिकदूरध्वनिग्राहकयन्त्रादिविचारः[1]

## ( पञ्चमः परिच्छेदः )

अद्यतनयुगे सर्वविधकार्यनिर्वाहाय विविधयन्त्राणामन्वेषणं जातमिति सर्वैर्विदितचरम्। अतोऽयं कालः 'यन्त्रयुग' इत्यपरनाम्ना लोके प्रसिद्धिमागतः। अस्मिन् युगे दूरश्रुत्यर्थं बहूनि यन्त्राणि दृष्टिगोचरीभवन्ति। दूरभाषायन्त्रम्[2], दूरध्वनिग्राहकप्रेषकयोः[3] सविद्युद्यन्त्रम्, विद्युद्विहीनञ्च दूरध्वनिग्राहक[4]प्रेषकयन्त्रम्—एभिः यन्त्रैः विद्युच्छक्त्या ध्वनिग्रहणप्रेषणयोः सर्वं कार्यं निरुह्यते।

प्राचीनकालेऽपि वैद्युतावैद्युतेत्युभयविधयन्त्राणां न्यूनता नासीद्—इति सर्वे भारतीयसंस्कृतसाहित्यपारावारीणा मनीषिणो विदन्ति। उक्तञ्च वाल्मीकीयरामायणस्य सुन्दरकाण्डे—

तरस्विनौ धारयता मृगस्य सत्वेन रूपं मनुजेन्द्रपुत्रौ।
नूनं विशस्तौ मम कारणात्तौ सिंहर्षभौ द्वाविव वैद्युतेन॥

( स० ६४, श्लो० २२ )

मृगस्य रूपं धारयता सत्त्वेन वैद्युतेन इव सिंहर्षभौ तौ द्वौ मनुजेन्द्रपुत्रौ मम कारणान्नूनं विशस्तौ—इत्येवं लङ्कायामशोकवाटिकायां जनकात्मजा विलापं कुर्वती शङ्कास्पदं वाक्यं जगाद। यथा वैद्युतं यन्त्रं कमपि प्राणिनं वञ्चयित्वा प्राणैर्वियुक्तं करोति, तथव तेन मृगेण प्रपञ्चितौ हतौ इति तात्पर्यमवगन्तव्यम्। अत्र श्लोके 'वैद्युतेन' इति पदेन प्राचीनकालिकवैद्युतयन्त्रव्यवहारः प्रमाणीभवति। साम्प्रतमिव प्राचीनकालेऽपि उत्क्षेपणादियन्त्राणामस्तित्वमितिहासग्रन्थेषु श्रूयते। तद्यथा प्रमाणशिरोमणीभूतस्य वाल्मीकीयरामायणस्य सुन्दरकाण्डे प्रोक्तम्—

उत्पतन्तमनुत्पेतुः सर्वे ते हरियूथपाः।
कृत्वाकाशं निराकाशं यन्त्रोत्क्षिप्ता इवोपलाः॥ इति।

( स० ६४, श्लो० २३ )

---

१. अत्र शीर्षके आदिपदेन अन्येषाञ्च दूरश्रुत्युपायानामपि ग्रहणं बोद्धव्यम्। अतस्तेषामपि अस्मिन् परिच्छेदे प्रतिपादनं करिष्यते। अत्र ग्राहकपदेन प्रेषणार्थस्यापि संग्रहः; प्रेषणं विना ग्रहणस्यासम्भवात्।

२. टेलीफोन।

३. रेडियो, प्रेषकश्च ( रेडियो-स्टेशन )।

४. वायरलेस टेलीग्राफी।

यथा यन्त्रोत्क्षिप्ता उपला आकाशं निराकाशं कृत्वा परस्परमुत्पतन्त-मनुत्पतन्ति, एवं ते सर्वे हरियूथपा अपीति श्लोकान्वयः। प्राचीनकाले एतादृग् यन्त्रमासीत् येन न केवलं लोष्ठानि यद्वा शर्कराः, अपि तु उपलाः, विशालाः शिला अपि उत्क्षिप्यन्ते स्म। उपलोत्क्षेपकयन्त्रे एतादृशी शक्तिरासीत्।

किञ्च, न केवलं व्यवहारोपयोगिनां विविधयन्त्राणामेवान्वेषणं पूर्वं कृतमासीत्, अपि तु क्षणमात्रेण योजनगामिनां विविधयानानां गवेषणाऽप्यभूत्। भारद्वाजकृते अंशुबोधिनीत्याख्ये ग्रन्थे विविधविद्यानां वर्णनं कृतम्। अस्य ग्रन्थस्य विमानप्रकरणे 'शक्त्युद्गमाद्यष्टौ' इति सूत्रस्य बौधायनो निम्नाङ्कितां व्याख्यां चकार। तद्यथा—

शक्त्युद्गमो भूतवाहो धूमयानशिखोद्गमः।
अंशुवाहस्तारामुखो मणिवाहो मरुत्सखः॥
इत्यष्टकाधिकरणे वर्गाण्युक्तानि शास्त्रतः॥ इति।

१. शक्त्युद्गमः—विद्युच्छक्त्या सञ्चरति।
२. भूतवाहः—वाय्वग्निजलादिभिः प्रचलति।
३. धूमयानम्—वाष्पद्वारा सञ्चलति।
४. शिखोद्गमः—पञ्चशिखिनस्तैलेन सञ्चरति।
५. अंशुवाहः—सूर्यरश्मिद्वारा प्रचलति।
६. तारामुखः—उल्कारसेन ( चुम्बकेन ) परिभ्रमति।
७. मणिवाहः—सूर्यकान्त-चन्द्रकान्तादिमणिभिर्गच्छति।
८. मरुत्सखः—वायुशक्त्या सञ्चरति।

शक्त्युद्गमाख्यविमानप्रामाण्येन प्राचीनकालेऽस्मद्देशे विद्युद्द्वारा यन्त्र-यानादिसञ्चारो विश्वासमारोहति। अप्रासङ्गित्वाद् एषामत्र विशदं व्याख्यान-मक्षमम्।

**यन्त्रलक्षणम्**

जलवायुस्तम्भेन समुत्पन्ना शक्तिः मन्त्राख्याम्, दण्डचक्रदन्तानां सरणि-भ्रामकादीनाञ्च साहाय्येन समुत्पन्ना शक्तिः यन्त्रवाच्यताम्, मनुष्येषु पशुषु च या शक्तिः सा तन्त्राभिधां लभते। उक्तञ्च भरद्वाजकृतयन्त्रार्णवे—

मन्त्रज्ञा ब्राह्मणाः पूर्वं जलवाय्वादिस्तम्भने।
शक्तेरुत्पादनं चक्रुस्तन्मन्त्रमिति गद्यते॥

दण्डैश्चक्रैश्च दन्तैश्च सरणिभ्रामकादिभिः।
शक्तेस्तु वर्द्धकं यत्तच्चालकं यन्त्रमुच्यते ॥
मानवीपाशवीशक्तिकार्यं तन्त्रमिति स्मृतम् ॥ इति।

वस्तुतस्तु येन दैवादिशक्तीनां यमनं क्रियते तद् यन्त्रमुच्यते। इदं लक्षणं तन्त्रशास्त्रग्रन्थेषु यन्त्रस्य यत् स्वरूपं दृश्यते, तत्रापि परिलक्ष्यते। यन्त्रस्य ये भेदा दृष्टिगोचरीभवन्ति, ते भागद्वयेन विभक्तुमर्हाः—१. दण्डचक्रादिनिर्मितम्, २. ताम्रादिफलकेषु रेखया अङ्कितञ्च इति।

पुराकाले अद्यतने च युगे इतिवृत्तप्रेषकादीनि यानि यन्त्राणि दृष्टिगोचरीभवन्ति, तानि सर्वाणि दण्डचक्रादिनिर्मितानि। आगमशास्त्रेषु च यानि दृष्टिपथं समायान्ति, तानि ताम्रादिफलकेषु रेखयाऽङ्कितानि।

## दूरवार्ताग्राहकप्रेषकयन्त्रविचारः

नूतना भौतिकवैज्ञानिकाः, अथ च दार्शनिका वैयाकरणाः श्रोत्रग्राह्यं सर्वमपि शब्दं ध्वनीत्यपरनाम्ना व्यवहरन्तीति विदुषां न तिरोहितम्। ध्वनिविषयं समादाय भौतिकैराश्चर्यमयं निर्माणं व्यधायि। यथा विप्रकृष्टदेशजन्यवार्ताया ग्राहकं प्रेषकञ्च यन्त्रम्। प्राचीनकालेऽपि जनभावनावहंप्रतीतिपदार्थकं ध्वनिं विप्रकृष्टदेशे प्रेषयितुं तादृशी व्यवस्था आसीत्। अस्मिन् विषये किमपि प्रमाणमधस्तात् समुपस्थाप्यते। उक्तञ्च शुक्रनीतौ—

अयुतं क्रोशजां वार्तां हरेदेकदिने नवे ॥ इति।
(अ० १, श्लो० ७)

राजा एकदिनेन अयुतं क्रोशजाम् = दशसहस्रक्रोशाद् दूरेभूतां वार्ताम् = इतिवृत्तिं हरेत् = जानीयाद् इति उपर्युद्धृतस्य श्लोकस्य तात्पर्यम्। अनेन प्रमाणेन प्राचीनकालेऽपि वार्तावाहकयन्त्राणामन्वेषणं बभूवेति वचनं विश्वासमारोहति।

आधुनिकयुगे [१]ध्वनिग्राहक-प्रेषकयन्त्रयोः[२], सर्वं कार्यं विद्युद्द्वारा प्रचलति। विद्युद् अग्नेरेव भेद इति सर्वं विदितचरम्[३]। भारताख्येऽस्मिन् देशेऽपि पुराकाले अग्निद्वारा वार्ताप्रेषणस्य चर्चा ऋगादिवेदेषु बहुशः श्रूयते, परन्तु पुरातनयुगेषु (वैदिकयुगे) विद्युदुत्पादनस्य तद्द्वाराध्वनिप्रेषण-ग्रहणयोः विधिश्च अद्यतन-

१. रेडियो।
२. रेडियो-स्टेशन।
३. अस्माकं भारतीयानां मते।

युगापेक्षया भिन्नो विद्यते। अद्यतने युगे यन्त्रद्वारा विद्युत्साहाय्येन कथं ध्वनिः चतसृषु दिक्षु प्रसार्यते ?—इति पूर्वं पर्यालोच्य अत्र विषये पुरातनीं व्यवस्थाञ्च प्रतिपाद्य तुलनात्मिकां गवेषणां समुपस्थाप्य विचारः करिष्यते।

ध्वनिप्रेषककेन्द्रस्थानाद् ( फ्राम द रेडियो स्टेशन ) विद्युद्धारामाध्यमेन एव ध्वनयः सर्वासु दिक्षु प्रसार्यन्ते[1]। रासायनिकक्रियया यद्वा विद्युच्चुम्बकीयोपपादनक्रियया समुत्पन्नेन विद्युद्वावाहक[2]बलेन विद्युद्धारा सर्वतः प्रसरति। न च विद्युति प्रवहमाणायां रात्रौ सर्वतः प्रकाशः स्यादिति वाच्यम्, विद्युदूर्जायाः ( विद्युदूर्जसः ) प्रकाशरूपेण परिवर्तनाऽभावात्। यदा काचनिर्मितकुतुपे[3] धातुनिर्मितसूक्ष्मतन्तुना[4] सह विद्युतः सम्पर्कः; तदनन्तरमेव तस्याः प्रकाशरूपेण परिवर्तनात्।

यद्यपि सर्वेषां पदार्थानां परमाणवो बहिर्भागत ऋणविद्युता आविष्टाः, किन्तु परिचालकपदार्थेभ्य एव विद्युद्द्वारा निःसृत्य सर्वतः प्रसर्तुमर्हाः। कस्यचिदपि परिचालकशक्तियुतस्य पदार्थस्य शिरोभागे विद्युद्वाहकबलस्य प्रयोगेण विद्युद्धारायाः परिवहनं प्रारभ्यते। परिचालकपदार्थो यथा—रजतधातुः[5], ताम्रकम् इत्यादि। येभ्यो धातुभ्यो विद्युत् प्रमुच्यते, यद्वा विद्युतः सञ्चारस्ते धातवः परिचालकनाम्ना, एतद्गुणविपरीताश्च अपरिचालकनाम्नाऽभिधीयन्ते। अपरिचालको धातुर्यथा—अभ्रकमित्यादि। परन्तु विद्युद्धारायाः प्रसारणे द्वावपि पदार्थौ प्रयुज्येते। परिचालकपदार्थेभ्यो विद्युद्धारा प्रमुच्यते, अपरिचालकेन च तस्या नियन्त्रणं क्रियते। केचित्तु पदार्था उभयात्मकाः। ( परिचालकापरिचालकोभयात्मकाः )। तैश्च परिवर्तनकर्तृयन्त्राणि[6] निर्मीयन्ते। परिचालकपदार्थेभ्यो

---

१. "प्रेषितृ ( ट्रांसमीटर ) का कार्य रे० फ्रीक्वेंसी लहरें उत्पन्न करना व इन्हें कार्यक्रम के अनुरूप समन्वित करके पर्याप्त शक्ति पर प्रसारित करना है। प्रेषितृ का कार्य इस तथ्य पर आधारित है कि रेड़ियो फ्रीक्वेंसी लहरें आकाश में विद्युच्चुम्बकीय एलोक्ट्रो मैगनेटिक लहरों के रूप में अत्यन्त तीव्रगति ( १८६००० मील ) प्रति सेकेण्ड से चारों ओर फैलती है।" ( रमेशचन्द्रविजय—रेडियो सर्विसिंग )

एतैर्वाक्यैर्मदुक्तस्यैव पुष्टिर्जायते।

२. आफ द इलैक्ट्रोमोटिव फोर्स।

३. इन टू द बल्व।

४. विथ द फेलामेन्ट।

५. आलमोनियम।

६. ट्रांजिस्टर।

विद्युद्धारां समुत्पादयितुं बहवो विधयो विद्यन्ते। तेषां मध्ये कश्चिद् एक उपायोऽधस्तात् प्रस्तूयते। विद्युद्धारा द्विविधा—१. 'ऋजुः'[१], २. वक्राकृतिका[२]। यद्वा प्रत्यावर्तितरूपा। अत्र उभयोरपि विद्युद्धारयोः समुत्पादनविधिर्यथाधीतं प्रदर्श्यते—

ध्वनिप्रेषितृयन्त्रेषु विद्युत्तरङ्गान् समुत्पादयितुं काचनिर्मितं कुतुप[३] निःशेषतया निर्वातं कृत्वा विद्युन्मोचको धातुनिर्मिततन्तुः तत्र निधीयते। दार्पणकुतुपे च फलकं संयुज्यते[४]। अस्यामवस्थायां यदा ऋजुधारया[५] काचकुतुपस्थः सूक्ष्मतन्तुः सन्ताप्यते तदा तस्मात्तन्तोः विद्युत्कणाः प्रमुच्यमाना दृश्यन्ते। विद्युद्धारा च काचकुतुपान्तःप्रदेशेऽभ्रवत् प्रवहति। यदा सूक्ष्मतन्तुनिर्मुक्तैः विद्युत्कणैः काचकुप्पिकासंश्लिष्टफलकं सन्ताप्यते, तदा तस्मादपि ऋणविद्युत्कणाः प्रमुच्यन्ते। विदद्युद्धारा च सर्वतः प्रवहति।

दार्पणकुतुपान्तराले ये विद्युत्-स्फुलिङ्गाः प्रवहन्ति तेषां बहिर्निःसारणाभावात् तेभ्यो विद्युद्धाराः सर्वतो दिक्षु न प्रवहन्ति; किन्तु धातुनिर्मितात् सूक्ष्मतन्तुप्रमुक्तविद्युत्कणसन्तप्ताद् दार्पणकुप्पिकासंसक्तफलकात्[६] निःसृता ऋणविद्युत्कणा एव ऋजुधारया सर्वतः प्रवहन्ति। सूक्ष्मतन्तुः[७] आवर्तिधाराविशिष्टविद्युता सन्ताप्यते। अतस्तस्माद् ऋणविद्युत्कणा अपि ऋजुधारया एकस्यामेव दिशि प्रवहन्ति। यदि सूक्ष्मतन्तुः प्रत्यावर्तिधारया[८] सन्ताप्यते, तदा वक्रमार्गेण यद्वा प्रत्यावर्तिधारया सर्वतो दिक्षु विद्युत्तरङ्गाः प्रवहन्ति। यादृश्य विद्युता सूक्ष्मतन्तुः सन्ताप्यते, तादृश्येव विद्युद्धारा तस्मान्निः सरतीति संक्षेपतः समवगन्तव्यम्। किन्तु प्रत्यावर्तिधारां समुत्पादयितुं सूक्ष्मतन्तुमभितः निर्द्वारः[९] संश्लिष्यते, यो बहुभिर्ऋणविद्युत्कणप्रमोचकधातुभिः संयुक्तो भवति। एनं विना प्रत्यावर्तिधारा समुत्पादयितुमशक्या। इमे च तरङ्गा विद्युच्चुम्बकीयतरङ्गनाम्नाऽभिधीयन्ते। वे च प्रतिविपलं १८६००० क्रोशार्द्धं सर्वतः प्रसरन्ति।

[१०]विद्युच्चुम्बकीयतरङ्गोत्पादनं वायवीयद्वारा[११] अपि सम्पाद्यते। इमान्

---

१. डाइरेक्ट करेन्ट। २. आल्टरनैटिंग करेन्ट। ३. इन टू द ट्रांजिस्टर वल्व।
४. प्लेट। ५. बाई द डाईरेक्ट करेन्ट। ६. फ्राम द प्लेट।
७. फेलामेन्ट। ८. बाई द अल्टरनेटिंग करेन्ट। ९. कैथाम।

१०. इलेक्ट्रो मेगनेटिक।
"नोट—कैथोड सीधे गरम किये जाने वाले कैथोड, फिलामेण्ट कहलाते हैं। इनमें से अधिक वोल्टाओं पर कार्य करने वाले वाल्वों में जिनका उपयोग प्रेषित्रों (प्रेषकों, ट्रान्समीटरों) में किया जाता है। फिलामेण्ट शुद्ध टंगस्टन अथवा थोरियम मिले हुए टंगस्टन के बनाये जाते हैं।"—रमेशचन्द्र विजय (रेडियो सर्विसिंग, पृ० २१-२२)।

११. बाइ द ऐरियल।

तरङ्गान् समुत्पादयितुं वायवीयम् अत्युच्चैः संस्थाप्यते। वायवीयस्य विद्युन्मोचकम् एकं फलकं[१] बहिःप्रदेशे अत्यूर्ध्वम्, अपरञ्च फलकं पृथ्व्यां सन्निधीयते। उभयोः फलकयोः सम्पर्कः संस्वरेण चौम्बिकक्षेत्रे परिभ्रामिकुण्डलेन[२] क्रियते। तस्यैको भागोऽत्युत्थितं फलकम्, अपरश्च भागो भूमौ सन्निहितं फलकं स्पृशति। यदा वायवीयस्योभयोः फलकयोः परिभ्रामिकुण्डलेन सम्पर्कः क्रियते, तदा वायवीयपृथ्व्योर्मध्ये परिकम्पनं[३] समुत्पद्यते। तेन विद्युद्धारायाः समुत्पत्तिर्जायते। इमाश्च विद्युद्धारास्तरङ्गरूपेण सर्वतः प्रसरन्ति। विद्युद्धारां समुत्पादयितुमन्येऽपि बहव उपाया विद्यन्ते। अप्रसङ्गात् सर्वेषामुल्लेखोऽसम्भाव्यः। यावता प्रयोजनम्, तावत् प्रतिपादितम् ॥

प्रत्येकं ध्वनिप्रेषककेन्द्राद् विभिन्ना विद्युत्तरङ्गाः प्रसार्यन्ते। अतएव प्रत्येकं सम्बाद-विसम्बादप्रेषककेन्द्रस्य वार्ताः सुस्पष्टतया श्रूयन्ते। अन्यथा समेभ्यः केन्द्रेभ्यः प्रेषितानां विद्युत्तरङ्गाणामपृथक्त्वे प्रेषिताः सङ्गीतादयो ध्वनिग्राहकयन्त्रेण सुस्पष्टतया श्रोतुमशक्याः, परस्परं कलहायमानानां शिशूनामिव शब्दाश्च श्रोष्यन्ते।

प्रसारयिष्यमाणाः सम्बादविसम्बादाः सूक्ष्मध्वनिग्राहकयन्त्रस्य[४] पुरः सरसि उच्चार्यन्ते। अस्मिन् यन्त्रे ध्वनिगतिर्विद्युद्गतिरूपेण परिवर्तनं लभते। ध्वन्यूर्जोमिश्रितो[५] विद्युत्तरङ्गो ध्वनिवर्द्धकयन्त्रेण सम्बर्द्धितः सन् ध्वनिग्राहकयन्त्रस्य[६] तरङ्गेण समन्वितो भूत्वा वायवीयं[७] प्रविशति। स च विद्युच्चुम्बकीयतरङ्गरूपेण सम्मिश्रय सर्वतः प्रसारयति। ध्वन्यूर्जोमिश्रिता इमे विद्युच्चुम्बकीयतरङ्गा[८] ध्वनिग्राहकयन्त्रेण प्रगृह्य ध्वनिरूपेण परिवर्त्यन्ते।

ध्वनिग्राहकयन्त्रस्य चत्वार्यरङ्गानि विद्यन्ते—

१. वाञ्छितकेन्द्रस्य चायकः,[९]। २. केन्द्रस्य शक्तिवर्द्धकः।
३. विद्युद्ध्वनितरङ्गयोः पृथक्कर्ता[१०]। ४. ध्वनिवर्द्धकः[११]।

---

१. प्लेट। २. बाइ द ट्यूनिंग क्वायल।
३. ओसिलेशन। ४. बिफोर द माइक्रोफोन।
५. ६. विथ द रेडियो फ्रिक्वेन्सी।
७. इलेक्ट्रोमैगनेटिक। ८. एरियल।
९. सेलेक्टर। १०. डिडक्टर।
११. लाउडस्पीकर।

विभिन्नकेन्द्रस्थानात् प्रेषिता विद्युच्चुम्बकीयतरङ्गा ध्वनिग्राहकयन्त्रमेककालावच्छेदेनाभिपतन्ति। 'यस्मात् केन्द्रात् प्रेषिता वार्ता श्रोतुमिष्यते, तस्मात् केन्द्रादेव प्रसारिता ध्वनिमिश्रिता विद्युच्चुम्बकीयतरङ्गा ध्वनिग्राहकयन्त्रं प्रविशन्तु, नान्ये'—इतीदं कार्यं केन्द्रसञ्चायकेन क्रियते। तस्य शक्तिवर्द्धनं विद्युतरङ्गेभ्यो ध्वनेः पृथक्करणम्। यथा तितउना तुषाद्यपनीयते, तथैव विदयुत्तरङ्गेभ्यः पार्थक्यं पृथक्कर्तृयन्त्रेण क्रियते। यथा सर्वतो दिक्षु कश्चिद् धावन् जनो बहुषु दर्पणेषु क्रमशोऽभिव्यज्यन्ते, तथैव विदयुच्चुम्बकीयमाध्यमेन परिधावन्तो ध्वनयो ध्वनिग्राहकयन्त्रेष्वभिव्यज्यन्ते, श्रोतृभिश्च श्रूयन्ते। न च सर्वव्यापकस्य शब्दस्य चलनादिक्रिया न युज्यते, तस्य सर्वव्यापकत्वात् तच्छून्यस्थानस्याभावाद् यद्वा नित्यत्वादिति वाच्यम्; कूटस्थस्य ब्रह्मणोऽपि तथा दर्शनात्। यथा सर्वत्र व्याप्तं कूटस्थं ब्रह्म क्वचिद् मनुष्यादिरूपेणाभिव्यक्तम्, क्वचिच्च अनभिव्यक्तं दृश्यते, तथैव कादिवर्णानामपि विषये बोद्धयम्।

अत्रेदमवधेयम्—ध्वनिर्विद्युदूर्जोरूपेण कदापि न परिवर्तते इति। यथा दुग्धजलयोर्मिश्रणे सति तादात्म्याज् जलमपि दुग्धरूपेण परिणतमिव दृश्यते, परन्तु दुग्धेन मिश्रितमपि जलं दुग्धं न भवति। उभयोर्मिश्रितावस्थायामपि सत्ता स्थीयते। अतएव पृथक्कर्तृयन्त्रेण विद्युतो ध्वनिः पृथक् क्रियते। किञ्च चुम्बके आकर्षणग्रहणशक्तिद्वयं विद्यते। वायवीये ( एरियल ) विद्युच्चुम्बकीयतरङ्गाः स्वचुम्बकशक्त्या ध्वनिमाकृष्य गृहीत्वा च सर्वतो दिक्षु प्रसारयन्ति। अद्यतने युगे विद्युच्चुम्बकीयतरङ्गाख्योऽग्निः रासायनिकक्रिययाऽभिव्यक्तः सन् ध्वनिप्रेषककेन्द्रस्थानाद् वार्तां प्रसारयति। एते विद्युच्चुम्बकीयतरङ्गा अग्नेरेव भेदाः। अतो विदयुच्चुम्बकीयतरङ्गाख्योऽग्निरित्युक्तम्।

पुरातनकालेऽपि अद्यतनमिव अग्निर्विप्रकृष्टदेशेषु वार्तां ( इतिवृत्तम् ) प्रवहति स्म इति विदांकुर्वन्तु सज्जनाः। इयं रीतिः कालेन मध्ये विलुप्ता। तस्यैव अद्यतने युगे पुनरन्वेषणं धीराः कृतवन्तः। परन्तु वार्तावाहकाग्नेरुत्पादनम् तत्प्रेषणञ्चेत्युभयमपि कार्यं प्राचीनवद् अद्यतनेऽपि युगे बलेनैव[1] क्रियते। बलेन जायमानत्वादेव अग्निः बलपुत्रेति नाम्नाऽभिधीयते। उक्तञ्च ऋग्वेदस्य प्रथममण्डले—

'अग्निं होतारं मन्ये दास्वन्तं वसुम् सहसो जातवेदसं विप्रम्'। इति।

( सू० १२७, मन्त्र १ )

अतिशयेन दानवन्तम् वसुं सर्वेसां जिवासहेतुं सहसो सुनुं = वलस्य पुत्रम्, अग्निमन्थनकाले बलेन मथ्यमान उत्पद्यते इति पुत्रत्वमुपचर्यते।

---

१. बाई द इलेक्ट्रोमोटिव फोर्स।

नूतनयुगे विद्युच्चुम्बकाख्योऽग्निः रासायनिकक्रियया समुत्पन्नः सन् वार्तां प्रवहति। पुरातनयुगे तु अरणिमन्थनक्रियया समुत्पन्नो देवदूताख्यः नराशंसाभिधश्चाग्निः दूरध्वनिप्रेषकग्राहकेत्युभयविधं कार्यं कुरुतः। उक्तञ्च ऋग्वेदस्य प्रथममण्डले—

अग्निदूतं वृणीमहे होतारं विश्ववेदसम्, अस्य यज्ञस्य सुक्रतुम्।
नराशंसमिह प्रियमस्मिन् यज्ञ उपह्वये। मधुजिह्वं हविष्कृतम्॥
( ऋ० वे०, मं० १, सू० १३, म० ३ )

नरान् आशंसति विविधकर्माणि वार्तां वेति विग्रहे 'कर्मण्यण्' इत्यण्प्रत्ययेऽनुबन्धलोपे 'नराशंसः' इति निष्पद्यते। तस्य कर्मत्वविवक्षायां द्वितीयैकवचने नराशंसमिति। अयमग्निर्मनुष्यान् विविधकर्माणि प्रवदति।

अत्र सायणभाष्यम्—"अग्निदूतत्वमेतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते--'अग्निर्देवानां दूत आसीद् उशनाः काव्योऽसुराणाम्' ( तै० सं० २।५।८।५ ) इति। तादृशं देवदूतमग्निमस्मिन् कर्मणि वृणीमहे=समजामः। कीदृशम्? होतारं देवानाम् आह्वातारं विश्ववेदसं सर्वधनोपेतम्, अस्य प्रवर्तमानस्य निष्पादकत्वेन सुक्रतुं शोभनकर्माणं शोभनप्रज्ञं वा'।

अन्या अपि ऋचः सन्ति, यत्र देवदूतास्याग्निना वार्ताप्रेषणं श्रूयते। तद्यथा ऋग्वेदः—

अग्ने देवा इहावह अज्ञानो वृक्त बर्हिषे।
असि होता न ईड्यः॥

होता देवानामाह्वाता—यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति।
तस्य स्म प्राविता भव।
अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः।
इमं स्तोमं जुषस्व नः॥
( ऋ० म० १, सू० १२, मं० १२ )

तृतीयोऽपि वार्तावहः सुसमिद्धाख्योऽग्निः श्रूयते। तद्यथा ऋग्वेदे—
सुमिद्धोन्व आवह देवा अग्ने हविष्मते। होतः पावकयक्षि च॥
( ऋ० म० १, सू० १३, म० १ )।

अत्र सुसमिद्धनामकस्याग्नेः आवाहनकर्म सुस्पष्टतया समुल्लिखितम्। यथा अद्यतने युगे विद्युद्द्वारा भारवाहनादिकार्यं निष्पाद्यते, तथैव पुरातनयुगे

वार्ताप्रेषणाद्यतिरिक्तानि यजमानाय गुप्तधनप्रदानम्, देवेभ्यो हविः प्रदानादि-कर्माणि च अग्निना क्रियन्ते स्म । तद् यथा अग्निना गुप्तधनप्रदानम्—

ई चिकेत गुहाभवन्तमा यः ससाद धारामृतस्य ॥

( ऋ० वे०, मं० १, सू० ६, मं० ७ )

यः पुमान् ईमेनं गुहाभवन्तं गुहायां सन्तमग्निं चिकेत=जानाति, यश्च ऋतस्य सत्यस्य यज्ञस्य वा धारां धारयितारमेनमग्निमाससाद=आसीदति, उपास्त इत्यर्थः । अस्मै वसूनि प्रवाच इत्यग्रेणान्वयः । अस्मै सर्वस्मै श्रोतृजनाय वसूनि धनानि प्रववाच । प्रकथयति ।

अयं भावः—अयमग्निः प्रच्छन्नरूपेण सर्वत्र व्याप्तः उपासनया प्रसन्नः सन् सर्वविधं धनमासादयति ।

## वार्तावाहकाग्निसमुत्पादनविचारः

पुरातनयुगे देवदूताख्यो वार्तावाहकाग्निः अरणिमन्थनक्रियया समुत्पाद्यते स्म । अश्वत्थपलाशादिकाष्ठेभ्यो याज्ञिकमग्निं समुत्पाद्य कार्यं निर्वहन्ति स्म । उत्तरारणिः, अधोरणिः—इति पैप्पलं काष्ठद्वयं गृह्यते । तयोर्मध्ये एकं काष्ठं फलकाकृति, द्वितीयञ्च काष्ठं दण्डवत् किञ्चित् स्थूलञ्च । फलकाकृतिकाष्ठे छिद्रं निर्मीयते । कौषेयादिपवित्रवस्त्रोपरि तत्काष्ठदयं सन्निधाप्य पूज्यते । ततः फलकाकृतिकाष्ठं भूमौ दृढ़तया सन्निधाप्य तस्य छिद्रे दण्डाकृतिकाष्ठं सन्निवेश्यते । उत्तरारणिकाष्ठस्योर्ध्वभागोऽपि काष्ठेन यन्त्रितो भवति । एवञ्च दण्डाकृति काष्ठमुभयभागतो यन्त्रितं भवति । यथा वायवीयस्य ( एरियल ) एकं फलक-मूर्ध्वम्, अपरञ्च भूमौ सन्निधाप्यते; उभयोश्च सम्पर्कः परिभ्रामिकुण्डलेन ( ट्यूनिंग क्वायल ) च क्रियते । एवमत्रापि उत्तरारणिना ऊर्ध्वाधः काष्ठद्वयं सम्बध्यते । ततश्च अभीष्टकार्यसम्पादनशक्तिविशिष्टमन्त्रोच्चारणपूर्वकं रज्ज्वा दण्डाकृति काष्ठं मथ्यते । अतिशयसंघर्षणेन च अग्निः प्रज्वलयति । यथा आधुनिक युगे यादृश्या विद्युता दार्पणकुतुपान्तरालस्य सूक्ष्मतन्तुः सन्ताप्यते, तादृश्येव विद्युद्धारा समुत्पद्यते, तथैव प्राचीनकालेऽपि यादृशकार्यसम्पादनविशिष्टमन्त्रो-च्चारणपूर्वकं अरणिमन्थनम् अथ च हविःप्रक्षेपणं क्रियेते, तादृशशक्तिविशिष्टोऽग्निः प्रज्वलति स्म । 'इन्द्रशत्रुर्वर्द्धस्व' इत्यादयो मन्त्राः, वृत्रासुरवधादीतिहासाश्च अत्र प्रमाणीभूताः ।

वार्ताप्रेषणे तादृशशक्तिविशिष्टमन्त्रोच्चारणपूर्वकमग्निमन्थनं क्रियते स्म । तद्यथा मन्त्रः—

अग्निदूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥

( ऋ० वे०, म० १, सू० १२ )

इत्यादयो मन्त्राः वार्ताप्रेषणशक्तिविशिष्टाग्निप्रज्वलनशीलाः समूहनीयाः। अग्निमन्त्रपूर्वकं मन्थनक्रियया अभिव्यक्त्युत्तरकालमेव वार्ताप्रेषणकार्यं सम्पादयति स्म। उक्तञ्च ऋग्वेदे—

मथीद् यदीं विभृतो मातरिश्वा गृहे गृहे श्वेतो जेन्योऽभूत्।
अर्दी राज्ञे न सहीयसे सचा सन्ना दूत्यं भृगवाणे विवाय ॥ इति।

अत्र ऋचायां प्राणमन्थनेनाऽपि अग्नेरभिव्यक्तिरुक्ता। वार्तावाहकदूताख्याग्नेरुत्पत्तेर्द्वितीयोऽयं विधिरत्र बोद्धव्यः। प्राणिषु प्राणापानादिरूपेण विभज्योपस्थितो वायुस्तस्य पूरककुम्भकरेचकेति तिसृभिरायामव्यायामकृतिभिरुत्पन्नोऽप्यग्निः वार्तां वहति, गृह्णाति च। अस्या उपर्युद्धृताया ऋचः सायणभाष्यमित्थम्-

मन्थनेनोत्पन्नोऽयमग्निः श्वेतः शुभ्रवर्णो भूत्वा गृहे गृहे=सर्वस्मिन् यज्ञगृहे यदा जेन्यः प्रादुर्भूतोऽभूत्। आत् यज्ञगृहे प्रादुर्भावानन्तरमीमेनमग्निं भृगवाणः, भृगुर्ऋषिः स इव आचरन् यजमानो दूत्यं=दूतस्य कर्म विवाय=शास्त्रमर्यादया प्रापयामास। तत्र दृष्टान्तः अन्यो राजा सहीयसेऽभिभवित्रे प्रबलाय राज्ञे यथा राज्ञे स्वपुरुषं दूतकर्म प्रापयति, तद्वत्।

अत्र स्पष्टतया स्वोत्पत्त्यव्यवहितोत्तरकालमेव अग्निर्दूतकर्म सम्पादयति। विप्रकृष्टदेशे वार्ताप्रेषकेण अग्निना सह ध्वनिं श्रुतिद्वारैव मिश्रयन्ति स्म। तद्यथा—

अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः। इमं स्तोमं जुषस्व नः ॥
( ऋ० वे०, मं० १, सू० १२, मं० १२ )

हे अग्ने! शुक्रेण शोचिषा त्वदीयश्वेतवर्णदीप्त्या विश्वाभिर्देवहूतिभिः त्वत्कृतसर्वदेवताह्वानसाधनस्तोत्रैश्च युक्तस्त्वं नोऽस्मदीयमिमं स्तोमं स्तोत्रविशेषं जुषस्व=सेवस्व। मदीयं स्तोत्रम् आत्मसात्कृत्वा देवान् प्रापयेत्यर्थः।

अत्र जुषस्वेति क्रियया नूतना वाचो विद्युद्रूपेण या परिवर्तनप्रथा सा प्राचीनकालेऽप्यासीत्—इति प्रमाणीभवति। अरणिद्वयमन्थनक्रियया समभिव्यक्तः याजकस्य च सन्देशमादाय देवानां सविधे यदा गच्छति तदा न केनाऽपि दृश्यते, न वा केनाऽपि तस्य वेगोत्पन्नो ध्वनिः श्रूयते। उक्तञ्च—

न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन। यदग्ने यासि दूत्यम् ॥
( ऋ० वे०, मं० १, सू० ९३, म० १० )

हे अग्ने ! यद् यदा देवानां दूतत्वं यासि=प्राप्नोषि, कच्चन=कदाचन तदानीं सर्वदाऽपि योः=गच्छतस्तव रथस्य अश्व्यः=अश्वैरुत्पादितः, उपब्दिः= श्रवणार्थः शब्दो न शृण्वे=न श्रूयते। रथस्य शीघ्रगमनेन अस्माभिः शब्दो नोपलभ्यत इत्यर्थः।

सत्यमिदं प्रतिभाति नूत्नाः वैज्ञानिकाः विद्युतो यद्वा प्रकाशस्य सञ्चारो माध्यमं विना नार्हतीत्यस्माद्धेतोः ईथरतत्त्वस्यान्वेषणं चक्रुः। यथा वयमपि शीघ्रतया देशान्तरं द्रुतगतिशीलयानेन गन्तुं प्रभवः, तथैव वार्तावाहकाख्योऽग्निरपि स्वरथेनैव इतो देवलोकं गच्छति। तस्य रथस्य गतिरेतावती द्रुतशीला, येन रथनिर्घोषोऽपि न केनचित् श्रूयते।

अत्र समीक्षणम्—

अत्रेदं विदाङ्कुर्वन्तु सज्जनाः—प्राचीनकाले मनुष्या विशेषरूपेण यज्ञनिष्ठा भवन्ति स्म। अतो देवानां सविधे एव वार्ताप्रेषणं विशेषरूपेण क्रियते स्म। अरणिद्वयमन्थनेन समुत्पन्नेऽग्नौ अथ च मन्त्रेषु शक्तिः प्रबुद्धा आसीत्। अस्मिन् युगे कालेन तपोबलसंक्षयात् मन्त्रशक्तिः अचेतनवत् प्रसुप्ता तिष्ठति। अतस्तत्प्रयोगाभावाद् वार्ताप्रेषणस्य स विधिः विलुप्तः सञ्जातः। यद्यपि वार्त्ता-प्रेषणादिकार्यं पूर्ववदेव अद्यापि यन्त्रद्वारा अग्निभेदभूतया विद्युतैव सम्पाद्यते; परन्तु प्रत्ननूतनयोः प्रेषणविधौ भेदो विद्यते। सम्प्रति ध्वनिप्रेषककेन्द्रस्थाने वायवीयद्वारा यद्वा रासायनिकक्रियया विद्युच्चुम्बकीयतरङ्गाः समुत्पाद्यन्ते। ते विद्युच्चुम्बकीयतरङ्गाश्च स्वचुम्बकशक्त्या ध्वनिं प्रगृह्य, आत्मसात्कृत्य च देशान्तरं प्रापयन्ति। प्रत्नयुगे तु वार्तावाहकाख्यवह्निसमुत्पादनशक्तिविशिष्ट-मन्त्रोच्चारणपूर्वकारणिद्वयमन्थनक्रियया वह्निः समुत्पाद्यते स्म। समुत्पन्नश्च स वह्निः याजकस्य सन्देशं प्रगृह्य देवान् प्रापयति स्म। या क्रिया सम्प्रति विद्युता ध्वनिमिश्रणनाम्ना प्रोच्यते, स एव विधिः प्रत्नयुगे 'वाचः सखा अग्निः', 'इमं स्तोमं जुषस्व नः', 'देवदूतोऽग्निः' इत्यादि नाम्ना प्रोच्यते स्म। विद्युता सह वाचः सखित्वम्, अथ च विद्युता सह ध्वनिमिश्रणम्— इत्युभयोरेकत्रैव स्वारस्यमव-सीयते। नूतनैः प्रतिपादितं विद्युति ध्वनिपरिवर्तनं वैदिकवाङ्मये 'वाचः सखा अग्निः'—इत्येवं रीत्या प्रतिपादितम्। केवलमुभयोर्मध्ये प्रतिपादनशैलीभेदोऽत्र दृष्टिपथं समायाति। यज्ञवेदिषु अग्निमथनार्थं संयन्त्रितम् अरणिद्वयमेव दूरध्वनि-प्रेषकयन्त्रस्थानापन्नमासीदिति निश्चप्रचं जातम्।

## ग्रावनिर्मितयन्त्रद्वारा दूरध्वनिश्रवणम्

प्रत्नयुगे ग्रावनिर्मितयन्त्रद्वाराऽपि दूरध्वनिग्रहणक्रिया सम्पाद्यते स्म। ग्रावा पाषाणपर्यायवाचिशब्दः। गिरति, गृणाति, गरतीति ग्रः। अवतीत्यवा। ग्रश्चा-

सावयति चेति ग्रावा। अयं गृधातुः शब्दकरणार्थकः, अवधातुश्च रक्षणार्थको ग्रहीतव्यः। निरुक्तकारस्तु 'हन्', 'ग्रह', 'गृह्' धातुभ्यो ग्रावाशब्दं व्याख्यापयामास। तद्यथा—

"ग्रावाणो हन्तेर्वा। गृह्णातेर्वा, गृह्णातेर्वा, तेषामेषा भवति।" ( निरुक्तम्-दैवतकाण्डम् )

प्राचीनकाले एतद्देशप्रसूता मनीषिणो विप्रकृष्टदेशस्य वार्तां ज्ञातुं दूरध्वनिग्रहणशक्तिविशिष्टस्य ग्राव्णोऽन्वेषणं चक्रुः। एतद्विषये एका श्रुतिरधस्ताद् उद्ध्रियते, येन मदुक्तं पुष्टं जायते। तद् यथा—

'प्रैते वदन्तु प्रवयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यो यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः।' इति।

अत्र निरुक्तिः—प्रवदन्त्वेते = प्रवदाम वयम्। ग्रावभ्यो वाचं वदत = वदद्भ्यः। यदद्रयः पर्वताः = आदरणीयाः, सह सोममाशवः = क्षिप्रकारिणः। श्लोकः शृणोतेः, घोषो घुष्यतेः। सोमिनो यूयं स्थेति वा। सोमिनो गृहेष्विति वा। अस्याम् ऋचायाम् 'वाचं वदद्भ्यो ग्रावभ्यः' इत्युक्तम्। अत्र 'वाचं वदद्भ्यः' इत्यनेन स्पष्टतया मदुक्तस्य पुष्टिर्जायते। इदं वचनं न लाक्षणिकम्। नाप्यत्र आश्चर्यं कार्यम्; प्रत्नयुगे मन्त्राभिमन्त्रितपाषाणनिर्मितदेवमूर्तीनां हसन-रुदन-नर्तनादिक्रियाणां प्राचीनसाहित्येषु समुपलम्भात्। मिथिलायां भावावेशिता जानकी स्ववरप्राप्त्यर्थं पाषाणनिर्मितगौरीमूर्तिं स्तुतवती, तदा जनकनन्दिन्या विनयेन द्रवीभूता सा मूर्तिः अभीष्टवरप्राप्तेः भविष्यद्वाणीम्, अथ च आशीर्वचनं कृतवती[1]। इत्थं केषुचित् पाषाणेषु दूरध्वनिग्रहणक्षमता आसीत्।

**अत्र पातञ्जलमहाभाष्यदृशा विचारः**

पातञ्जलमहाभाष्येणापि इदं तथ्यं पुष्टं जायते। 'तद्धितार्थोत्तरपदसमाहारे च' ( २।१।५० ) इति पाणिनीयसूत्रस्य व्याख्यावसरे 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति वार्तिकं समुद्धृत्य 'वाग्दृषदप्रियः'—इत्ययं समस्तः शब्दः उदाहरणरूपेण समुपस्थापितः। वाक् च दृषच्च प्रिये अस्य 'वाग्दृषदप्रियः' इति विग्रहः। 'द्वन्द्वाच्चुदषहान्तात् समाहारे' ( पा० सू० ५. ४. १०६ ) इत्यच् प्रत्ययः। एवमेव 'अल्पाच्तरम् ( २।२।३४ ) इति पाणिनीयसूत्रे महाभाष्यकृता 'वाग्दृषदौ' इति समुदाहृतम्। वाक् च दृषच्च 'वाग्दृषदौ'—अत्र द्वन्द्वसमासः कृतः। 'वाग्दृषदप्रियः' इत्यत्र तु द्वन्द्वगर्भितो बहुव्रीहिसमासः कृतः। ऐतिहासिक-

१. श्रीमद्गोस्वामितुलसीदासकृते श्रीरामचरितमानसे बालकाण्डे एतदीयोंऽशो द्रष्टव्यः।

दृष्टयाऽनयोः प्रयोगयोः समीक्षया प्रतिभाति यत् प्राचीनकाले वाक्सम्बन्धिनी काचिद् दृषद् आसीत्। केषाञ्चिद् द्वन्द्वसमासनिष्पन्नशब्दवाच्यार्थानां परस्परं सप्रयोजनः सम्बन्धो दृश्यते। स सम्बन्धो जन्यजनकादिरूपः। तद्यथा—मातापितरौ, पितापुत्रौ, रामलक्ष्मणौ इत्यादि। वाग्दृषदयोरपि कोऽपि सम्बन्धो विद्यते। अनेन महाभाष्यप्रयोगेण प्रतीयते यत् पतञ्जलिसमये पाषाणद्वारा दूरध्वनिश्रवणस्य व्यवस्था आसीत्। वाग्ग्रहणशक्तिविशिष्टदृषद् यस्य पार्श्वे विद्यते स्म स उच्यते स्म 'वाग्दृषदप्रियः' इति।

किञ्च प्रत्नयुगे पाषाणद्वारा दूरध्वनिश्रवणस्य व्यवस्था प्रसिद्धे दैनिकपत्रे 'अमृतबाजारपत्रिका' इत्याख्येऽपि समुल्लिखिता। दक्षिणहैदराबादे पत्थरघाटीति नाम्ना प्रसिद्धे कस्मिंश्चिद् ग्रामे डा० महम्मदकाशिमनामाख्यः कश्चित् पुरुषो निवसति स्म। अस्य गृहे संस्कृतग्रन्थैः समलंकृतः पुस्तकालयोऽप्यासीत्। तस्मिन् ग्रन्थालये विविधविद्याव्याख्यानसमलंकृतः संस्कृतगिरश्च महत्त्वोद्घाटनशीलः कश्चिद् ग्रन्थो विद्यते। अस्मिन् ग्रन्थे विप्रकृष्टदेशेषु समुद्भूतानाम् इतिवृत्तानां ग्राहकयन्त्रमपि सम्यक्तया वर्णितम्। तच्च यन्त्रं पाषाणनिर्मितम्। 'पाषाणद्वयं संयुज्य तन्माध्यमेन विप्रकृष्टदेशात् समागतं ध्वनिं वार्तां वा श्रोतुं शक्यते'— इत्येवं तत्र ग्रन्थे दूरध्वनिग्राहकयन्त्रस्य चर्चा विद्यते[1]। अनेन प्रामाण्येन, अथ च पूर्वमुद्धृतया श्रुत्या[2] च 'वाग्दृषदप्रियः', 'वाग्दृषदौ' इति शब्दद्वयस्य मदुक्तदिशा व्याख्यानं समीचीनम्। किञ्च, एतत्प्रमाणत्रयस्य समन्वयेन 'प्राचीनकाले दूरध्वनिग्राहकं पाषाणनिर्मितं यन्त्रमासीत्' इत्येतज्ज्ञायते।

पाषाणेषु दूरध्वनिग्रहणशक्त्युत्पादनं सोमद्वारा क्रियते स्म। अस्माकं शरीरेऽपि शिरःप्रदेशे सहस्रारे सोमतत्त्वं विद्यते, सोमशक्त्या एव च वयं वदामः।

इत्थं प्रत्नयुगेऽस्मद्देशे पाषाणनिर्मितयन्त्रद्वारा दूरश्रुतेर्व्यवस्था आसीत्। इयञ्च व्यवस्था 'वाग्दृषदप्रियः', 'वाग्दृषदौ' इत्यादिमहाभाष्यप्रयोगेण पतञ्जलिसमयपर्यन्तं सुरक्षिता आसीदिति प्रतीयते। कालेन च दूरश्रुतेरियं रीतिर्विलुप्ता जाता। किञ्च, 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (३.१.७) इति पाणिनीयसूत्रस्य पातञ्जलमहाभाष्ये 'ग्रावा वदति' इत्येवं शब्दप्रयोगः

१. अत्र विषये श्रीरघुनन्दनशर्मकृते 'वैदिकसम्पत्ति' इति ग्रन्थे (पृ० सं० ३१६) एतदीयोंऽशो द्रष्टव्यः।

२. प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः।
( निरुक्तम्–देवतकाण्डे ) अत्र सोमिनः पर्वताः इत्युक्तम्।

समुपलभ्यते । नायं प्रयोगो लाक्षणिकः । पाषाणनिर्मितयन्त्राद् अन्यदपि दूरश्रुत्यर्थं यन्त्रमासीत् । "पुराकालेऽस्मिन् भारते द्वात्रिंशत्प्रकाराणि ध्वनिग्राहकयन्त्राव्यासन्"—इति भारद्वाजकृतयन्त्रसर्वस्वे चर्चितम् । तेषां विस्तरेण प्रतिपादनस्य नात्रावसरः । तथापि स्थालीपुलाकन्यायेन किञ्चिद्वक्ष्यते विस्तरेण त्वन्यस्मिन् 'यन्त्रयान' नामके ग्रन्थे एतदर्थं प्रयासं करिष्ये ।

**परशब्दग्राहकरहस्ययन्त्रम्**

अस्य यन्त्रस्य प्रयोगो विमानसञ्चालकेन क्रियते स्म । प्राचीनकालेऽयमस्माकं देश आर्यावर्तः विमानसञ्चालनरहस्यविद्यायामतीव कुशल आसीत् । महर्षिभरद्वाजप्रणीतयन्त्रसर्वस्वग्रन्थान्तर्गते वैमानिकप्रकरणे यतिबोधानन्दकृतवृत्तिसहिते विमानसञ्चालनचातुरीप्राप्त्यर्थं द्वात्रिंशद्रहस्यानि प्रोक्तानि ।

उक्तञ्च रहस्यलहर्याम् —

मान्त्रिकस्तान्त्रिकस्तद्वत् कृतकश्चान्तरालकः ।
गूढरहस्यमदृश्यश्च परोक्षाश्चापरोक्षकः ॥ १ ॥
सङ्कोचो विस्तृतश्चैव विरूपकरणस्तथा ।
रूपान्तरसुरूपश्च ज्योतिर्भावस्तमोमयः ॥ २ ॥
प्रलयो विमुखस्तारो महाशब्दविमोहनः ।
लङ्घनः सार्पगमनश्चपलस्सर्वतोमुखः ॥ ३ ॥
परशब्दग्राहकश्च रूपाकर्षणस्तथा ।
क्रियारहस्यग्रहणे दिक्प्रदर्शनमेव च ॥ ४ ॥
स्तब्धकः कर्षणश्चेति रहस्यानि यथाक्रमम् ॥ ५ ॥
एतानि द्वात्रिंशद् रहस्यानि गुरोर्मुखात् ।
विज्ञाय विधिवत् सर्वं पश्चात् कार्यं समारभेत् ॥ ६ ॥ इति ।

**श्लोकान्तर्गतरहस्यनामानि**

१. मान्त्रिकरहस्यम्, २. तान्त्रिकरहस्यम्, ३. कृतकरहस्यम्,
४. अन्तरालरहस्यम्, ५. गूढरहस्यम्, ६. दृश्यरहस्यम्,
७. अदृश्यरहस्यम्, ८. परोक्षरहस्यम्, ९. अपरोक्षरहस्यम्,
१०. सङ्कोचनरहस्यम्, ११. विस्तृतरहस्यम्, १२. विरूपकरणरहस्यम्,
१३. रूपान्तररहस्यम्, १४. सुरूपरहस्यम्, १५. ज्योतिर्भावरहस्यम्,
१६. तमोमयरहस्यम्, १७. प्रलयरहस्यम्, १८. विमुखरहस्यम्,
१९.ताररहस्यम्, २०. महाशब्दविमोहनरहस्यम्, २१. लङ्घनरहस्यम्,

२२. सार्पगमनरहस्यम्, २३. चापलरहस्यम्, २४. सर्वतोमुखरहस्यम्,
२५. परशब्दग्राहकरहस्यम्, २६ रूपाकर्षणरहस्यम्, २७. क्रियाग्रहणरहस्यम्,
२८. दिक्प्रदर्शनरहस्यम्, २९. आकाशाकाररहस्यम्, ३०. जगद्रूपरहस्यम्,
३१. स्तब्धकरहस्यम्, ३२. कर्षणरहस्यम्[1] । इति ।

उपर्युक्तानां रहस्यानामुपयोगार्थं तत्तद्रहस्याख्यानि यन्त्राण्यपि विमानस्य कस्मिंश्चिद्देशे निर्मीयन्ते स्म। तद्यथा दिक्प्रदर्शनरहस्यविद्यायाः समुपयोगार्थं दिक्प्रदर्शनयन्त्रमासीत् । दिक्प्रदर्शनरहस्यविद्यानिपुणो विमानसञ्चालक एतदाख्य-यन्त्रेण[2] दिग्ज्ञानं लभते स्म। तदित्थं द्वात्रिंशद्रहस्यविद्याप्रयोगस्य साफल्यार्थं तत्तन्नामकानि यन्त्राण्यासन्। एतेषां यन्त्राणां मध्ये परशब्दग्राहकयन्त्रस्यैवात्र प्रयोजनम्। परशब्दग्राहकरहस्यविद्यानिपुणो वैमानिको विमानस्थशब्दग्राहक-यन्त्रद्वारा सौदीमिनीकलोक्तप्रकारेण व्योमस्य प्रथममण्डलात् प्रारभ्य सप्तपरिधि-मण्डलपर्यन्तं परविमानस्य जनसम्भाषणादिसमस्तशब्दान् आकृष्य शृणोति स्म। सौदामिनीकलाग्रन्थे ( विद्युत्कलाग्रन्थे ) विमानस्थेन शब्दग्राहकयन्त्रद्वारा दूरध्वनिग्रहणस्य चर्चा श्रूयते। विदद्युत्कलेतिग्रन्थनाम्ना ज्ञायते यत् प्राचीन-शब्दग्राहकयन्त्रेण दूरस्थशब्दग्रहणकार्यम् अद्यतनेन दूरध्वनिग्राहकयन्त्रेण इव विद्युच्छक्तिसाहाय्येनैव सम्पाद्यते स्म। किञ्च, अद्यतनदूरवीक्षणयन्त्रवद् ( टेली-विजन ) रूपाकर्षणनामकं यन्त्रमासीत् । विमानस्थरूपाकर्षणयन्त्रद्वारा परविमान-स्थितवस्तुरूपाकर्षणं क्रियते स्म। परन्त्वत्र परशब्दग्राहकयन्त्रस्यैव व्याख्याना-वसरः। प्रसङ्गवशाद् अन्येषां रूपादिग्राहकयन्त्राणां चर्चा कृता।

## प्राचीनकालिकदूरध्वनिग्राहकयन्त्रनिर्माणविधिः

प्राचीनकालिकदूरध्वनिग्राहकयन्त्रं शब्दाकर्षणयन्त्रनाम्ना लोके प्रसिद्ध-मासीत्। दूराद् दूरतमे देशे समुद्भूतं सूक्ष्मातिसूक्ष्मं मानवीयं यद्वा सर्वविधं ध्वनिं ग्रहीतुमिदं यन्त्रं क्षमम् आसीत्। श्रीमहर्षिभारद्वाजकृतयन्त्रसर्वस्वे एतद्यन्त्र-निर्माणविधिः स्पष्टतया व्याख्यातः। यथा हि—

शुद्धवैडाललोहेन वर्तुलात्मकस्य चतुरस्रात्मकस्य वा पीठस्य निर्माणं विधाय तन्मध्ये शङ्कुं स्थापयेत्। शङ्कुपार्श्वयोः मनःसङ्कल्पितमपि ध्वनिम्

---

१. भरद्वाजकृतयन्त्रार्णवस्य विमानप्रकरणे रहस्यज्ञोऽधिकारी अ० १ सू० २ इति सूत्रस्य व्याख्यायां यतिवोधानन्दकृतश्लोकबद्धवृत्तौ एतदीयोंऽशो द्रष्टव्यः।

२. दिक्प्रदर्शनयन्त्रेण।

अथ च वादित्रशब्दं सम्भाषणध्वनिञ्च आकर्षयितुं क्षमं यन्त्रं नियोजयेत्। रोरुवापक्षिणो यद्वा गृञ्जिनीपक्षिणो विशुद्धेन मृदुलेन च चर्मणा सूक्ष्मं लघु दृढञ्च लघुकन्दुकवद् गोलद्वयं निर्मातव्यम्। तयोः कन्दुकयोर्मध्ये च कटनद्रवं सुरघादर्शपात्रे सम्पूर्य संस्थापयेत्[1]।

द्वयोः पिण्डयोः ( गोलकयोः ) मध्ये कटनद्रवकोपरि घण्टारलोहनिर्मितं ध्वनेराकर्षणसमर्थं तन्त्रीगुच्छसमायुक्तञ्च[2] आकर्षितशब्दाभिव्यञ्जनसमर्थं संस्थाप्य क्वणकदर्पणावरणं क्रमशः अंगुष्ठमात्रचक्रस्थग्रन्थित्रयमूले संयोजयेत्। अंगुष्ठमात्र-चक्रस्य ग्रन्थित्रयमारभ्य शलाकापर्यन्तं यथाविधि क्रमशः सूक्ष्ममृदुलाः तन्त्रीः संश्लिष्येत। तास्तन्त्रीश्च समावृण्वद् तदुपरि न्यग्विलं ( अधोविलम् ) क्वणादर्शेन विरचितं सूक्ष्मरन्ध्रकं करण्डं सन्धारयेत्। करण्डस्योपरि च क्वणादर्शेन निर्मितं द्रोणास्यपात्रं ( हण्डिकां ) क्रमशः संन्यसेत्[3]।

---

१. चतुरस्रं वर्तुलं वा शुद्धवेडाललोहतः।
पीठं कृत्वाथ तन्मध्ये शंकुं संस्थाप्य पार्श्वयोः ॥ ११२ ॥

सङ्कल्पस्वरवादित्र शब्दभाषापकर्षकम्।
रोरुवापक्षिणो नो चेद् गृञ्जिनीपक्षिणोऽपि वा ॥ ११३ ॥

शुद्धीकृतेन देहस्थचर्मणा मृदुलेन च।
कृत्वा कन्दुकवद् गोलद्वयं सूक्ष्मं लघु दृढम् ॥ ११४॥

स्थापयेद् विधिवत् पश्चात् तन्मध्ये कटनद्रवम्।
सम्पूर्य सुरघादर्शपात्रे संस्थापयेत् क्रमात् ॥ ११५ ॥ इति।

२. ध्वन्याकर्षणघण्टारलोहनिर्मितमद्भुतम्।
तन्त्रीगुच्छसमायुक्तं शब्दोन्मुखशलाककम् ॥ ११६ ॥ इति।

३. दृढं पिण्डद्वयोर्मध्ये द्रावकोपरि यथाक्रमम्।
प्रतिष्ठाप्याथ क्वणकदर्पणावरणं क्रमात् ॥ ११७ ॥

कृत्वा मूलेंऽगुष्ठमात्रचक्रग्रन्थित्रयं ततः।
सन्धारयेत् तदारभ्य शलाकान्तं यथाविधि ॥ ११८ ॥

अत्यन्तसूक्ष्मा मृदुला तन्त्रीः संयोजयेत् क्रमात्।
एतत्तन्त्रीः समावृत्य न्यग्विलं सूक्ष्मरन्ध्रकम् ॥ ११९ ॥

क्वणादर्शेन रचितं करण्डमुपरि न्यसेत्।
द्रोणास्यपात्रं तेनैव कृतं तस्योपरि क्रमात् ॥ १२० ॥

ततश्च तस्मिन् द्रोणास्यपात्रे पूर्वपश्चिमतः दक्षिणोत्तरतश्च चतुःसंख्याकान् रुदन्ती-रुटिकाख्यान् मणीन् समरेखया योजयेत्। मणीनां मध्ये च दर्पणनिर्मितान् शुद्धान् सूक्ष्मनालान् चतसृषु दिक्षु यथाविधि संयोजयेत्। ततश्च तस्योर्ध्वप्रदेशे शब्दफेनकं स्थापयेत्[1]।

तच्च शब्दफेनकं चक्रं शास्त्रोक्तविधिना आवरणेन आच्छादयेत्। तत्रावरणे संशोधितान् सूक्ष्मशङ्कूंश्च सन्नियोज्य तत्प्रमाणतोऽष्टसूक्ष्मछिद्रसमन्वितं क्वणादर्शकृतावरणं तस्योपरि न्यसेत्। अस्य क्वणादर्शकृतावरणस्य प्रत्येकं छिद्रमार्ग शङ्कुमुखमाध्यमेन सूक्ष्मतन्त्रीः संगमयन् संयुज्यात्। सूक्ष्मतन्त्रीणां मध्ये च निर्मिताङ्गुलपरिमाणच्छिद्रं सिंहास्यदण्डनालं संस्थापयेत्। वातापकर्षकं सुसूक्ष्मं लोहतन्तुसंवेष्टितं षोडशारं चक्रं तस्य सिंहास्यदण्डनालस्य पुरोभागे न्यसेत्। इत्थमष्टदिक्षु वातापकर्षकं चक्रं क्रमशः पूर्वोक्तसिंहास्यमुखे संयोजयेत्। अतः परं प्रदक्षिणमार्गेण आवर्तनशीलान् शुद्धवाजीमुखलोहकृतान् वर्तुलपट्टिकान् कीलचकान् संश्लिषेत्[2]।

---

१.　संस्थापयेत्ततः तस्मिन् पूर्वपश्चिमयोस्तथा।
दक्षिणोत्तरतश्चैव रुदन्तीरूटिकाभिधान् ॥ १२१ ॥
संयोजयेन्मणीन् शुद्धान् चत्वारि समरेखतः।
मणिमन्तरतः कृत्वा सूक्ष्मनालान् यथाविधि ॥ १२२ ॥
दर्पणेन कृतान् शुद्धान् चतुर्दिक्षु दृढं यथा।
संस्थापयेदथ तस्योर्ध्वप्रदेशे शब्दफेनकम् ॥ १२३ ॥
शब्दफेनकम्=शब्दसंस्कारशक्तियुतचक्रम्।
तस्योपरि यथाशास्त्रं कुर्याद् आवरणं ततः।
तस्मिन् सन्धारयेत् सूक्ष्मशङ्कून् संशोधितान् दृढान् ॥
पश्चात् क्वणादर्शकृतावरणं तत्प्रमाणतः ॥ १२४ ॥
तस्योपरि न्यसेद् अष्टसूक्ष्मछिद्रसमन्वितम् ॥ १२५ ॥ इति।

२.　एकैकछिद्रमार्गेणान्तः शंकुमुखान्तरात्।
सूक्ष्मतन्त्रीन् समाहृत्य न्यसेदावरणोपरि ॥ १२६ ॥
तन्मध्येऽङ्गुलमानेन छिद्रं कृत्वा यथाविधि।
सिंहाख्यदण्डनालञ्च मध्ये संस्थापयेत् क्रमात् ॥ १२७ ॥
वातापकर्षकं चक्रं षोडशारं सुसूक्ष्मकम्।
न्यसेत्तस्य पुरोभागे तन्त्रीसंवेष्टितं यथा ॥ १२८ ॥
एवं क्रमेणाष्टदिक्षु सूक्ष्मचक्राणि विन्यसेत्।
पूर्वोक्तसिंहास्यमुखेऽष्टदिक्षु यथाक्रमम् ॥ १२९ ॥ इति।

ततस्तेषां चक्राणां मध्ये शुद्धानि चषकपात्राणि सन्निवेश्य पूर्वोक्तक्वणादर्शनिर्मिताष्टच्छिद्रसंस्थिताः तन्त्रीः चक्रेषु संयोजयेत्। वाताहरणचक्रस्थानात् सरन्ध्राः सूक्ष्मतन्त्रीः समाहृत्य यथाविधि सिंहास्यस्थाष्टचषकपट्टिकामूलसन्धिषु संश्लिषेत्। शब्दफेनस्थशङ्कूनां मूलकेन्द्रतः तन्त्रीः समाहृत्य विधिवद् द्रवपात्रस्थमणिमावृत्य सुदृढं बध्नीयात्[1]। ततश्च वातसंयोजनात् ( वायुसम्पर्कात् ) स्वतः अष्टदिक्षु संस्थितानि चक्राणि भ्राम्यन्ति। ततश्च तत्सम्पृक्तमणयश्च भ्राम्यन्ति। मणिवेगाच्च शब्दफेनकचक्रं भ्राम्यति, शब्दफेनकचक्रभ्रमणेन शंकुमूलचक्राणि क्रमशो भ्राम्यन्ति। शंकुमूलचक्रगतिवशाच्च सिंहास्यनालस्थाष्टचक्राणि विचेष्टन्ते। तेन यस्यां दिशि शब्दः सञ्जायते, तस्यामेव दिशि शब्दोन्मुखशलाकानां स्वतः सञ्चालनं जायते[2]। शलाकाचालनाद् रोरुवा-गृञ्जिनीचर्मकृतगोलद्वयं तत्तत्स्वरैः सह स्वान्तरे संगृह्य पश्चात् सन्नियस्यति। रोरुवागृञ्जिनीचर्ममूले संलग्नकीलचालनाच्च पुनः सिंहास्यमार्गतो द्रोणास्यपात्रे स शब्दः पुनः प्रविशति। ततश्च तत्क्षणादेव परश्रोत्रग्रहणयोग्याः सर्वे शब्दाः क्रमशः सर्वदिङ्मुखतः स्फुटीभवन्ति[3]। भारद्वाजकृतयन्त्रसर्वस्वे भेदतो द्वात्रिंशच्छब्दग्राहकयन्त्राणि प्रोक्तानि। एतत्सर्वं भारद्वाजकृतयन्त्रसर्वस्वे, वैमानिकप्रकरणे यतिबोधानन्दवृत्तिसहिते विस्तरेण व्याख्यातम्।

---

१. प्रदक्षिणावर्तकीलचक्रान् संस्थापयेदथ।
शुद्धवाजीमुखलोहकृतवर्तुलपट्टिकान् ॥ १३० ॥

सुदृढान् चषकाकारान् सरलं संस्थापयेत्ततः।
पूर्वोक्तावरणाष्टछिद्रमुखसंस्थितान् क्रमात् ॥ १३१ ॥

तन्त्रीः संगृह्य विधिवत् तेषु संयोजयेत् क्रमात्।
तथैव वाताहरणचक्रस्थानाद् यथाविधि ॥ १३२ ॥

सरन्ध्रान् अत्यन्तसूक्ष्मतन्त्रीन् आहृत्य शक्तितः।
सिंहास्यस्याष्टचषकामूल सन्धिषु ॥ १३३ ॥

संयोज्य शब्दफेनस्थशङ्कुना मूलकेन्द्रतः।
द्रवपात्रस्थमणिमावृत्य तन्त्रीन् यथाक्रमम् ॥ १३४ ॥

समाहृत्याथ विधिवद् बध्नीयात् सुदृढं यथा।
वातसंयोजनाच्चक्रभ्रमणं भवति स्वतः ॥ १३५ ॥ इति।

२. सम्भ्राम्यते मणिः पश्चात् तेन सव्याऽपसव्यतः।
तद्वेगाद् भ्राम्यते शब्दफेनचक्रमतः परम् ॥ १ ॥ इति।

३. भ्राम्यन्ते शङ्कुमूलचक्राण्यपि यथाक्रमम्।
तस्मात् सिंहास्यनालस्थ चक्राण्यष्ट विशेषतः ॥ २ ॥

किञ्च, परशब्दग्राहकयन्त्रे ध्वनेराकर्षणसमर्थस्य चुम्बकीयलोहस्य प्रयोगः[1] क्रियते स्म। अद्यतने युगे ध्वनिग्राहकयन्त्रे ( रेडियो ) विद्युच्चुम्बकीयतरङ्गस्य उपयोगः क्रियते।

यन्त्रातिरिक्तानि अन्यान्यपि समाधिजरूपाणि दूरश्रुतिसाधनानि आसन्। तद्यथा—समाधिजाः सिद्धयः। दूरश्रुतेः समाधिजा बह्वयः सिद्धयः सन्ति। तद्यथा—

१. श्रोत्राकाशयोः सम्बन्धः संयमः।
२. सुषुम्नाज्ञानम्।
३. प्राणजयविद्या।
४. नादध्यानविद्या।
५. मनोवती सिद्धिरित्यादि।

---

भ्राम्यन्ति तेन ध्वन्याकर्षणघण्टारलोहतः।
कृतशब्दोन्मुखशलाकचालनं भवेत् स्वतः॥ ३॥

रोरुवा गृञ्जिनीचर्मकृत गोलद्वयं ततः।
शलाकचालनात् सर्वशब्दान् तत्तत्स्वरैः सह॥ ४॥

संगृह्य स्वान्तरे पश्चात् सन्नियम्यति नान्यथा।
तन्मूलकीलचालनात् पुनः सिंहास्यमार्गतः॥ ५॥

द्रोणास्यपात्रे वेगेन प्रविश्याथ यथाक्रमम्।
परश्रोत्रग्रहणयोग्यान् सर्वान् शब्दान् स्फुटं यथा॥ ६॥

करोति तत्क्षणादेव सर्वदिङ्मुखतः क्रमात्।
तत्तद्दिश्यागतं शब्दं श्रुत्वायन्ता सुधीः स्वयम्॥ ७॥

शब्दाकर्षणयन्त्रँस्तु द्वात्रिंशद् भेदतः क्रमात्।
सम्यग् यन्त्रशास्त्रविशारदैः॥ १०॥ इति।

१. "कुशल योग्य धनरव में योद्धा के अङ्गों से शल्य का निकलने वाला झञ्झावात शब्द के नाश में योग्य सब घावों को नष्ट करने वाला हो जाता है। पूर्वोक्त अत्यन्त भय देने वाले महाघनरव को ( १६२–१६४ श्लोक )।

क्रम से अतिवेग से सिंहास्यभस्त्रिका से अतिवेग से खींचकर पेटिका के अन्दर नाल में स्थित मणि में युक्त कर दे। काच कुप्पी में अपनी शक्ति से उस शब्द को वेग से खींचकर अपने में लीन करके तुरन्त शब्दरहित कर देता है। अतः सर्वप्रयत्न से शब्दकेन्द्रमुख नामक यन्त्र को विमान में सम्यक् यथाविधि संस्थापित करें"।
( श्लोक १६५-१६८ तक )

१. प्रत्नयुगे समाधिनिष्ठा महर्षयो यत्र यत्र समुपलभ्यन्ते स्म। प्रयागः, वाराणसी, अयोध्या, विन्ध्याचलः, गङ्गादीनां पवित्रनदीनाञ्च तटानि विशेषरूपेण तेषां निवासस्थानान्यासन्। अनेके महर्षयस्तु राजसभामपि अलञ्चक्रुः।

उक्तञ्च श्रीमद्वाल्मीकिरामायणस्य बालकाण्डे प्रथमसर्गे—

'सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः।' इति।

किञ्च, महर्षिर्वसिष्ठो रघुवंशोत्पन्नानां राज्ञां पुरोहितः श्रूयते। तस्मिन् वसिष्ठे न केवलं वर्तमानकालिकं ध्वनिं श्रोतुं क्षमता आसीत्, अपि तु भूत-भविष्यत्-कालिकमपि। यदा दिलीपः स्वसन्तत्यवरोधकारणं पप्रच्छ, तदा समाधिद्वारा भूतकालिकमपि कारणं ज्ञात्वा वसिष्ठस्तं निवेदयामास। प्रतिपादितमेतत् विस्तरेण कालिदासकृते रघुवंशमहाकाव्ये प्रथमसर्गे।

महर्षिषु भूतभविष्यद्वर्तमानकालिकञ्च सर्वमपि ज्ञानम् अस्माकं प्रत्यक्षमिव विद्यते। यथोक्तं श्रीभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥ ३७ ॥

अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावा वचनं तेषां नानुमानेन बाध्यते ॥ ३८ ॥

यो यस्य स्वमिव ज्ञानं दर्शनं नातिशङ्कते।
स्थितं प्रत्यक्षपक्षे तं कथमन्यो निवर्तयेत् ॥३९॥ इति।

एते महर्षयः श्रोत्राकाशसम्बन्धसंयमादिद्वारा दिव्यं श्रोत्रं लब्ध्वा विप्रकृष्ट-देशोद्भूतं ध्वनिं श्रोतुं क्षमाः। दिव्यश्रोत्रोपलब्ध्युपायः श्रोत्राकाशसम्बन्धसंयमः। उक्तञ्च भगवता पतञ्जलिना योगदर्शनस्य विभूतिपादे—

'श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम्' इति।

इदं सूत्रमितः पूर्वं 'ध्वनिसञ्चारमाध्यमः' इत्याख्ये परिच्छेदे समुद्धृत्य बहुशो व्याख्यातम्। किञ्च, पतञ्जलिना न केवलं दूरश्रवणस्यैव, अपितु दूरश्रावण-स्याप्युपायः प्रोक्तः। तद्यथा—

'ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते' (—विभूतिपादः)

'श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम्' इति सूत्रोक्तदिशा श्रोत्रा-काशयोः सम्बन्धस्य संयमे सिद्धे सति केवलं संयमकर्ता एव दूरस्थं शब्दं शृणोति। किन्तु पुरुषस्य साक्षात् कर्ता तु श्रवणं श्रावणञ्चेत्युभे अपि क्रिये कर्तुं क्षमः। सूत्रघटकश्रावणादिपदानि हेतुमण्णिजन्ताद् 'श्रावि' इत्यादिधातुभ्यो निष्पन्नानि।

ल्युट्-प्रत्ययान्तश्रावणादिशब्देभ्यश्च श्रावणस्येदमित्यर्थे 'तस्येदम्' इत्यण् प्रत्ययः। पुरुषसाक्षात्काराद् योगी दूरभूतान् शब्दान् परान् श्रावयति, स्वयं च श्रृणोति। एवं सूत्रान्तर्गतानां वेदनादिपदानामपि व्याख्या बोध्या।

प्रत्नयुगे महाभारतकाले सञ्जयनामा कश्चित् सुधीप्रवरः युद्धक्षेत्राद् दूरे गृहे स्थितः सन्नेव धृतराष्ट्रं युद्धविषयकं सर्वं दृश्यम्, अथ च सम्वादविसम्वादांश्च श्रावयामास। मन्ये तावत् सञ्जयः साधनद्वारा दिव्यं श्रोत्रं चक्षुश्च समुपलब्धवान्। चक्षुषि दिव्यशक्तेः समुपलब्ध्युपायः पातञ्जलयोगदर्शने विभूतिपादे प्रोक्तम्। तद्यथा—

'सूर्यसंयमाद् दिव्यं चक्षुः' इति।

अत्र पातञ्जलयोगदर्शनस्य विभूतिपादे अभीष्टवस्तुप्राप्त्यर्थम् आकाशगमनादिरूपाः बह्वयः सिद्धयः प्रोक्ताः। अप्रासङ्गिकत्वात् सर्वासामत्र चर्चा अनुपयुक्ता। अत्रैव विभूतिपादे पशुपक्षिसर्पादिजीवाः किं वदन्तीति सर्वप्राणिभाषाज्ञानार्थमुपायः प्रोक्तः। तद्यथा—

'शब्दार्थयोरितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्।' इति।

सर्वभूतरुतज्ञानमित्यस्य सर्वप्राणिनां भाषाज्ञानं भवति। प्रत्नयुगे लिखितेषु संस्कृतग्रन्थेषु शुकमृगादीनां तिर्यग्योनिजानामपि परस्परं सम्वादविसम्वादः समुल्लिखितो दृश्यते। तत्र लेखकः कथं तेषां भाषां ज्ञातवान्?—इति उपर्युद्धृतपातञ्जलयोगदर्शनसूत्रात् समाधेयम्। किञ्च, वसिष्ठः सन्तत्यवरोधकारणं नन्दिनीधेनोः शापवचनं दिलीपं ज्ञापयमास, स वसिष्ठस्तस्या धेन्वाः कथं शापवाक्यस्यार्थं ज्ञातवान्?—इति उपर्युद्धृतसूत्रादेव समाधेयम्। प्रत्नयुगेऽस्मद्भारतदेशे न केवलं दूरध्वनिग्रहणस्यैव, अपि तु सर्वप्राणिभाषाया अपि ज्ञानसाधनान्यासन्।

## २. सुषुम्नाज्ञानम्

जगदाधारभूतायां सुषुम्नायां मनःप्रवेशद्वाराऽपि दूरश्रुतिर्जायते। उक्तञ्च स्वच्छन्दतन्त्रस्य सप्तमे पटले—

भूतं भव्यं भविष्यच्च सर्वं जानाति मध्यतः॥ २१४॥ इति।

मध्यतः' इत्यस्य सुषुम्नाख्या या मध्यमा नाडी तत्र मनसः प्राणस्य वा प्रवेशाद् योगी सर्वं जानाति। इडा पिङ्गला सुषुम्नेति तिस्रो नाड्यः प्रधानाः। इडापिङ्गलयोर्मध्ये भवत्वात् सुषुम्ना मध्यमा नाडी प्रोच्यते। सर्वस्मिन् ब्रह्माण्डे अस्या नाड्या व्यापकत्वं पूर्वं ध्वनिसञ्चारमाध्यमविचारावसरे प्रतिपादितम्। उक्तञ्च योगशिखोपनिषदि प्रथमाध्याये—

सुषुम्नायां स्थिताः सर्वे, सूत्रे मणिगणा इव ।
मोक्षमार्गे प्रतिष्ठाना, सुषुम्ना विश्वरूपिणी ॥११९॥

## ३. हंसविद्या यद्वा प्राणजयविद्या

प्रत्नयुगेऽस्मद्देशे हंसविद्यायाः प्राणजयेत्यपराभिधेयाया अन्वेषणं जातम् । अनया विद्ययाऽपि दूरध्वनिग्रहणं क्रियते स्म । अस्या विद्यायाः तन्त्रग्रन्थेषु बहुशः समुल्लेखो दृश्यते । तद्यथा स्वच्छन्दतन्त्रस्य सप्तमे पटले—

प्राणमेव जयेत् पूर्वं, जिते प्राणे जितं मनः ।
जिते मनसि शान्तस्य परं तत्त्वं प्रकाशते ॥ ३१५ ॥

तालात् प्रभृति तन्ध्यायेद् यावत् पञ्चशतं गतम् ।
जितोऽनिलो भवत्येव संक्रान्त्युत्क्रान्तिकर्मणि ॥३१८॥ इति ।

अंगुल्या जानुभ्रमणावधि कालस्तालः । तेषां यावत् पञ्चशतं गच्छति, तावद् यदि प्राणादीनामविचलं ध्यानं सिद्धचति तदा ते जिता भवन्ति । ततश्च परशरीरसंक्रान्तौ, उत्क्रान्तौ च सामर्थ्यं भवति । इदमेव प्राणजयस्य लक्षणम् । ततः—

दिव्या कान्तिः शुभो गन्धः, प्रज्ञा चास्य विवर्धते ।
दिव्या दृष्टिश्च श्रवणम्, दिव्यं वाक्यं प्रजायते ॥ ३१९ ॥ इति ।

अत्र प्राणजये सति दिव्यश्रवणस्य प्राप्तिरुक्ता । दिव्यश्रवणे लब्धे सति दूरात् कथनविज्ञानं स्वतः सञ्जायते ।

अस्येदं रहस्यमत्र विदांकुर्वन्तु सज्जनाः—दूरध्वनिग्राहकादियन्त्रेण विद्युन्माध्यमेनैव दूरात् कथनविज्ञानं जायते । पूरककुम्भकरेचकविधिना प्राणे जिते सति जाठरो वह्निः प्रदीप्तो जायते । वह्निशक्त्या च श्रोत्रादीन्द्रियेषु दिव्या शक्तिः समायाति । तेन दूरात्कथनविज्ञानं जायते ।

## ४. नादध्यानविद्या

अन्तःकरणेऽनाहतध्वनिभट्टारकस्य ध्यानेनापि दूरध्वनिग्रहणस्य शक्तिः श्रोत्रयोः समुपलभ्यते । उक्तञ्च स्वच्छन्दतन्त्रस्य द्वादशपटले चतुर्दशेऽधिकारे—

कर्णौ पिधाय यत्नेन निमीलितविलोचनः ।
शृणोति स महाघोषं चेतस्तत्रानुसन्दधेत् ॥
दीप्यते जाठरो वह्निस्ततोऽस्य दशभिर्दिनैः ॥ १३४ ॥
दूराच्श्रवणविज्ञानं षण्मासाद् उपजायते ॥ इति ।

श्रोत्राकाशसम्बन्धसंयमद्वारा दूरात् कथनविज्ञानसिद्धिः यावता कालेन समुपलभ्यते, तावता एव कालेन नादध्यानादिति बोद्धव्यम्। उक्तञ्च श्रीमालिनी-विजयोत्तरतन्त्रस्य पञ्चदशाधिकारे—

सन्दधानः स्वकं चेतः श्रोत्राकाशे विचक्षणः।
दूरात् कथनविज्ञानं षण्मासादुपजायते ॥ ३४ ॥ इति।

अत्र षण्मासादित्युक्त्या मदुक्तं पुष्टं जायते। परन्तु ब्रह्माण्डे यत्र कुत्रापि समुद्भूतं ध्वनिं श्रोतुं त्रिभिः सम्वत्सरैः श्रोत्राकाशध्यानात् सिद्धिः समुपलभ्यते। उक्तश्चोपर्युद्धृतग्रन्थस्य पञ्चदशाधिकारे—

त्रिभिः सम्वत्सरैर्देवि ब्रह्माण्डान्तरुदीरितम्।
शृणोति स स्फुटं सर्वं जरामरणवर्जितः ॥ ३५ ॥ इति।

स्फुटम् = स्पष्टतया, असन्दिग्धमित्यर्थः।

**५. मनोवती सिद्धिः**

प्रत्नयुगे दूरध्वनिग्रहणस्य अन्यान्यपि मनोवतीसिद्धिरूपाणि साधनान्यासन्। उक्तञ्च—

मनोवतीमतो वक्ष्ये धारणां सर्वसिद्धिदाम्।
यया संसिद्धया देवि सर्वसिद्धिफलं लभेत् ॥ ३७ ॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
तस्मात् तदभ्यसेन्मन्त्री यदीच्छेन्मोक्षमव्ययम् ॥ ३८ ॥

तदर्धचन्द्रसंकाशमधोवक्त्रं हृदि स्थितम्।
चिन्तयन् मासमात्रेण प्रतिभां प्रतिपत्स्यसे ॥ ३९ ॥

अकस्मात् पश्यते किञ्चिद् अकस्माच्छृणुते तथा।
सर्वेन्द्रियात्मकं ज्ञानमकस्माच्च क्वचित् क्वचित् ॥ ४० ॥ इति।

(—श्रीमालिनीविजयोत्तरतन्त्रे पञ्चदशोऽधिकारः)

अत्र मनोध्यानेन दूरात् कथनविज्ञानादिसिद्धीनां चर्चा कृता। मनोऽस्माकं शरीरस्य विद्युच्छक्तिः। विद्युच्छक्तिरेव मनोरूपेणाऽस्माकं शरीरं सञ्चारयति। चित्तैकाग्रतासम्वर्द्धनानुसारं मनसः शक्तिः सञ्चयीभूय समेधते।

किञ्च, साधनद्वारा पादयोः दिव्यां शक्तिं लब्ध्वा वाञ्छितदेशञ्च गत्वा वार्तां जानन्ति स्म प्रत्नयुगे। तद्यथा वायवीयधारणया अव्याहृतगतिलाभः प्रोक्तः—

स्वदेहं चिन्तयेत् कृष्णं वृत्तं षड्बिन्दुलाञ्छितम्।
चलं सचूचूशब्दञ्च वायवीं धारणां श्रितः ॥३४॥

चलत्वं कफजव्याधिविच्छेदाद् वायुवद् भवेद् ।
षण्मासमभ्यसेद्योगी तद्गतेनान्तरात्मना ॥३५॥
योजनानां शतं गत्वा मुहूर्ताद् एत्यखेदतः ।
वत्सरैस्तु त्रिभिः साक्षाद् वायुरूपधरो भवेत् ॥३६॥ इति ।

अत्र 'योजनानां शतं गत्वा मुहूर्ताद् एत्यखेदतः' इति प्रोक्तम् । सत्यमिदं प्रतिभाति । यदा पादत्रयभूमियाच्ञाछलेन त्रैलोक्यराज्यं स्वायत्तीकर्तुं विष्णुर्वामनरूपं धृतवान् । वलिञ्च वञ्चयित्वा आब्रह्मपर्यंतं स्वशरीरं वर्द्धयामास, तदा जाम्ववान् मुहूर्तादेव सप्तप्रदक्षिणां कृतवान् भगवतो वामनस्य । मन्ये तावद् अनयाऽपि रीत्या प्रत्नयुगे विप्रकृष्टदेशजन्यां वार्तां शृण्वन्ति स्म ॥

॥ इति शम् ॥

# पराश्रव्यध्वनिः

## ( षष्ठः परिच्छेदः )

### नवीनं प्राचीनं च पराश्रव्यध्वनिस्वरूपम्

परैः श्रोतुमनर्हो ध्वनिः पराश्रव्यनाम्ना विद्वद्भिः प्रोच्यते। श्रोतुमर्हः श्रव्यः, न श्रव्यः अश्रव्यः, परैः स्वपरकर्णेन्द्रियैः मनसा वा अश्रव्यश्चासौ ध्वनिः पराश्रव्यध्वनिः। मानवीयश्रोत्रेन्द्रियशक्तिदृष्ट्या श्रव्याश्रव्यभेदेन ध्वनिर्द्विधा विभक्तः। यथा नूतनविज्ञानसम्प्रदाये दृश्यादृश्यभेदेन प्रकाशो द्विधा विभक्तः, तथा ध्वनिरपि द्विधा विभक्तः। सामान्येन प्रतिक्षणं विंशत्यावृत्तितः प्रारभ्य २०००० विंशतिसहस्रावृत्तिस्पन्दनविशिष्टमेव ध्वनिं गृहीतुमस्माकं श्रोत्रेन्द्रियं समर्थं विद्यते। विंशतिसंख्यातो न्यूनं स्पन्दनं यस्मिन् ध्वनेरुच्चारणे विद्यते, स ध्वनिः श्रोत्रेन्द्रियाग्राह्यः। अयमेव ध्वनिः नूतनध्वनिविज्ञानसम्प्रदाये पराश्रव्यनाम्ना प्रसिद्धिमागतः। वृक्षाणां शाखापल्लवादिषु यत् किमपि स्पन्दनं विद्यते, तत्रापि ध्वनिः समुद्भवति। किन्तु अस्माकं श्रोत्रेन्द्रियैर्न श्रूयते। अयं विषयः अत्रैव ग्रन्थे प्रथमपरिच्छेदे बहुशः प्रतिपादितः। स्थावरयोनिजा इमे वृक्षा अपि परस्परं सुखदुःखादिभावविशिष्टां वार्तां कुर्वन्तीति नूतनविद्वद्भिरन्वेषितम्।[1] किन्तु सा वार्ता अस्माभिर्न श्रूयते। अश्वत्थ-तुलसी-कुन्द-कदम्बादि-स्थावरयोनिजानामेतेषां वृक्षाणां ध्वनिषु विलक्षणा शक्तिरपि विद्यते। वृक्षाणां पराश्रव्यध्वनयो गुप्तरूपेण अस्माकमन्तःकरणं प्रभावयन्ति। वृक्षा अपि परस्परं वार्तां कुर्वन्ति, तेऽपि मातृकाघटकान् अकारादिध्वनीन् जानन्तीति तथ्यं न केवलं नूतना एव, अपि तु प्राचीना अपि स्वीचक्रुः। उक्तञ्च स्वच्छन्दतन्त्रस्य चतुर्थपटले—

> वर्णाः शब्दात्मकाः सर्वे जगत्यस्मिंश्चराचरे।
> स्थिताः पञ्चाशता भेदैः शास्त्रेष्वानन्त्यकोटिषु ॥ २४७ ॥ इति।

आनन्त्येन कोटिसंख्येषु शास्त्रेषु पञ्चाशता भेदैः मातृकारूपैः चरे=जङ्गमे वाग्वति, अचरे=अन्तःसंज्ञे स्थावरे वर्णाः स्थिताः। ते च शब्दात्मकाः शब्दनरूपाः। अत्र स्पष्टतया चराचरेषूभयेष्वपि अकारादिवर्णानां स्थितिः प्रोक्ता। तेन स्थावर-योनिजा अन्तःसंज्ञा वृक्षा अपि परस्परं सुखदुःखादिवार्तां कुर्वन्तीति शास्त्रचक्षुषा नूतनान्वेषणैश्च ज्ञायते। अस्माकं श्रोत्रेन्द्रियैः ग्रहीतुमनर्हत्वाद् अयमपि ध्वनिः पराश्रव्याख्यां लभते। नूतनध्वनिविज्ञानसम्प्रदाये सर्वप्रथमम् अस्यैव प्राकृतिकस्य

---

१. डा० जगदीशचन्द्रवसुः अत्र विषये ख्यातिं प्राप्तवान्।

अन्तःसंज्ञेषु स्थावरेषु स्थितस्य पराश्रव्यध्वनेरन्वेषणं जातम्। वृक्षाः पराश्रव्यध्वनेर्विसर्जनं कुर्वन्ति। अयं ध्वनिर्महोर्जस्वान्, तस्य च महान् प्रभावः।

स्वपरश्रोत्रेन्द्रियातीतत्वं सूक्ष्मरूपेण स्फुरत्ताशक्तिविशिष्टत्वञ्च पराश्रव्यध्वनेर्लक्षणम् इति व्याकरणागमादिशास्त्रिणो मन्यन्ते। उक्तञ्च स्वच्छन्दतन्त्रस्य द्वितीयपटले—

आत्मा न शृणुते यं तु मानसोऽसौ प्रकीर्तितः।
आत्मना श्रूयते यस्तु तमुपांशुं विजानते॥
परे शृण्वन्ति यं देवि स शब्दः स उदाहृतः॥ इति।

आत्मा=परस्य स्वस्य च श्रोत्रेन्द्रियं यं न शृणोति, स ध्वनिः मानसाख्यः प्रकीर्तितः। मानसाख्यो ध्वनिश्च मध्यमायां वाचि स्थितः। मध्यमायां वाचि जपविषयीभूतो मन्त्रो यद्वा स्वविवक्षितवाचकशब्दाः लीनाः सन्तीति मनसा चिन्तनमेव पराश्रव्यत्वलक्षणम्। अस्मिन् ध्वनौ च जगदुद्भव-पालन-संहार-कर्तृ महदूर्जो विद्यते। पुराकाले मध्यमायां वाचि मानसिको जप एव अद्यतनपराश्रव्यध्वनिस्थानापन्न आसीत्। यद्वा अद्यतनपराश्रव्यध्वनिरेव मध्यमायां वाचि मानसिकजपस्य स्थानं गृहीतवान् इति बोद्धव्यम्। अन्तःकरणस्थमध्यमध्वनिरेव पराश्रव्यध्वनिस्वरूप इत्यपि वक्तुं पार्यते। अस्मिन् विषये अत्रैव ग्रन्थे प्रथमपरिच्छेदे बहुशः प्रतिपादितम्। तथाप्यत्र किञ्चिद्वैलक्ष्येण तत्स्वरूपमुच्यते। वैखर्या वाचो मानसं यद् आणवं स्वरूपं तत्तु सूक्ष्मं श्रोत्रेन्द्रियातीतञ्च विद्यते।

उक्तञ्च याज्ञवल्क्यशिक्षायाम्—

सूर्यरश्मिप्रतीकाशा कणिका यत्र दृश्यते।
आणवस्य तु सा मात्रा मात्रा तु चतुराणवी॥
मानसे चाणवं विद्यात् कण्ठे विद्याद् द्विराणवम्।
त्रिराणवं तु जिह्वाग्रे निःसृतं मात्रिकं विदुः॥ १०॥ इति।

'आणवस्य तु सा मात्रा' इत्यत्र मात्राशब्दः परिमाणवाचकः, 'मात्रा तु चतुराणवी' इत्यत्र अकारादिस्वरार्थे विद्यते। अकारादिमात्राश्चतुराणव्यः। अर्थाद् वैखरी वाक् चतुराणवी, मानसी च आणवी। सूर्यरश्मिप्रतीकाशानां कणिकानां परिभ्रमणे यावति कालेः ध्वनिः समुदेति, तावानेव ध्वनिः मानसिकशब्दस्य बोद्धव्यः। अयमेव मानसिकः सूक्ष्मो ध्वनिः मात्रास्वरवर्णभेदेन स्थूलंस्वरूपं दधाति। उक्तञ्च श्रीमद्भागवतस्य एकादशस्कन्धे द्वादशतमेऽध्याये—

स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रास्वरो वर्ण इति स्थविष्ठः॥ १७॥

श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डे च—

अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥

इत्युक्तम्। अयमेव मानसिकः पराश्रव्यो ध्वनिः प्रणवनाम्नाऽपि बोद्धव्यः, परैरश्रव्यत्वात्। याज्ञवल्क्यशिक्षायां प्रतिपादितो य आणवस्वरूपः पराश्रव्यो ध्वनिः स एव शिवस्य अखण्डं चैतन्यस्वरूपं गृह्णाति। उक्तञ्च श्रीशिवमहिम्नस्तोत्रे—

त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरान्
अकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः,
समस्तं व्यस्तं त्वा शरणद गृणात्योमिति पदम् ॥ २७ ॥ इति।

अत्र अणुभिः ध्वनिभिरित्यनेन मानसिकस्य पराश्रव्यध्वनेर्ग्रहणं बोद्धव्यम्। अयमेव मानसिको ध्वनिरार्द्धमात्रिकोऽप्युच्यते। तद्यथा प्रणवस्वरूपव्याख्यावसरे प्रणवकल्पे ॐकाराक्षरमालिकाप्रस्तावावसरे चतुर्थाध्याये प्रोक्तम्—

अर्द्धमात्राममात्राञ्च देवतां विजनोज्ज्वलाम्।
ॐकाररूपिणीं देवीं नित्यं वन्दे सुनिर्मलाम् ॥ ९ ॥ इति।

अत्र मात्रापदेन आणवध्वनिमयस्य प्रणवस्य सङ्केतः कृतः। अमात्रामित्यनेन मनसातीतस्यापि पराश्रव्यध्वनेः स्वरूपमुक्तम्। मनःशक्त्या ग्रहीतुमक्षमोऽपि ध्वनिः पराश्रव्याख्यां लब्धुमर्हः; मनसा अश्रव्यत्वात्।

अयमेव सर्वप्राणिनामुरःप्रदेशस्थो मानसो ध्वनिः हंसाख्यया उपनिषत्सु प्रतिपादितः। उक्तञ्च पाशुपतब्रह्मोपनिषदि पूर्वकाण्डे—

मानसो हंसः सोऽहं हंस इति तन्मयो यज्ञो नादानुसन्धानम्।
तन्मयविकारो जीवः ॥ १२ ॥ इति।

अत्र मानसो हंस इत्युक्त्या मदुक्तस्य पुष्टिर्जायते। अयं पराश्रव्याख्यो ध्वनिः प्राणिषु सततं विद्यमानः सन् जीवनं सञ्चारयति। अतएव प्रमाणतयोपर्युद्धृते मन्त्रे 'तन्मयो विकारो जीव' इत्युक्तम्। अस्य ध्वनेः निर्मलस्फटिकवद् दिव्यं सर्व देवमध्ये च दक्षिणमुखं देवतात्मकमपि स्वरूपं विद्यते। तद्यथा ब्रह्मविद्योपनिषदि प्रोक्तम्—

हंसज्योतिरनूपम्यं देवमध्ये व्यवस्थितम्।
दक्षिणामुखमाश्रित्य ज्ञानमुद्रां प्रकल्पयेत् ॥ ६४ ॥
सदा समाधिं कुर्वीत हंसमन्त्रमनुस्मरन्।
निर्मलस्फटिकाकारं दिव्यरूपमनूपमम् ॥ ६५ ॥

मध्यदेशे परं हंसं ज्ञानमुद्रात्मरूपकम् ॥ इति ।

ज्ञानमुद्रामाश्रित्य देवमध्ये दक्षिणाभिमुखं व्यवस्थितमनूपम्यं हंसज्योतिः प्रकल्पयेत् । हंसमन्त्रमनुस्मरन् निर्मलस्फटिकाकारं दिव्यरूपम् अनूपमज्ञानमुद्रात्मकरूपकं मध्यदेशे = मूलाधारे सदा समाधिं कुर्वीत ।

अत्र स्पष्टतया मानसस्य हंसाख्यस्य पराश्रव्यध्वनेः देवतात्मकं स्वरूपमुक्तम् । तच्च स्वरूपं 'ज्ञानमुद्रात्मकरूपकम्' इत्यादि शब्देन व्याख्यातम् ।

वस्तुतस्तु न केवलं मध्यमानादाख्यो ध्वनिरेव पराश्रव्याख्यः, अपि तु पश्यन्ती, परा अपि इति द्वे वाचौ, उत्तरोत्तरं तयोः पराश्रव्यरूपत्वात् । परायां वाचि प्रविष्टं मनः सर्वशक्तिसम्पन्नं सञ्जायते, पराया वाचः सर्वशक्तिविशिष्टत्वात् ।

तदित्थं नूतनप्राचीनमतसमालोचनया पराश्रव्यो ध्वनिर्भेदद्वयेन विभक्तुं शक्यते—

१. नूतनध्वनिविज्ञानविद्भिरन्वेषितो यन्त्रेण समुत्पादितः कृत्रिमो बाह्यः पराश्रव्यो ध्वनिः ।

२. सर्वप्राणिष्वन्तर्भूतो मानसोऽनाहतध्वनिरित्यपरनाम्ना प्रसिद्धः आभ्यन्तरः पराश्रव्यो ध्वनिः ।

यथा वैयाकरणसम्प्रदाये बाह्याभ्यन्तरभेदेन स्फोटो द्विविधः, तथैव पराश्रव्यध्वनेरपि बाह्याभ्यन्तरभेदेन द्विविधो भेदो बोद्धव्यः ।

**पराश्रव्यध्वनेरुत्पादनविधिः**

सम्प्रति नूतनध्वनिवैज्ञानिकाः कृत्रिमप्रक्रियया यद्वा यान्त्रिकप्रक्रियया पराश्रव्यध्वनिं समुत्पाद्य तद्द्वारा भौतिकादिकार्यं सम्पादयन्ति । श्रोत्रेन्द्रियग्राह्यं ध्वनिं समुत्पाद्य ततः किञ्चिद् दूरे स्फटिकं[1] स्थापयन्ति । स्फटिकात् पूर्वभागे ध्वनिस्तु श्रूयते, उत्तरभागे तु स एव ध्वनिः श्रोत्रेन्द्रियातीतः सञ्जायते । अस्मिन् पराश्रव्यध्वनौ महती क्षमता विद्यते । अभिग्राहियन्त्रेण इमं पराश्रव्यध्वनिं प्रगृह्य लौकिकं व्यवहारं साधयन्ति । एवं दाववियुत्, काचमणिः[2], स्फटिकः[3] चुम्बकीयनिरूपणम्[4], स्फटिककम्पित्रम्[5]—'इत्यादिविधिना सर्वरोगनिवर्तनक्षमं ध्वनिं प्रादुर्भावयन्ति । अत्र संक्षेपतः पराश्रव्यध्वनिशक्तेरुत्पादनविधीनां मध्ये केचिद् विधयोऽधस्तात् प्रतिपाद्यन्ते । तद् यथा—

---

१. २ क्रिस्टल । ३. क्वार्टज ।
४. मैगनेटोस ट्रीक्सन । ५. ट्रान्सड्यूसर ।

## १. दाबविद्युद्

दाबविद्युत्प्रक्रियायां स्फटिकस्य विशेषरूपेण प्रयोगः क्रियते। केचित् स्फटिका एतादृशगुणविशिष्टाः समुपलभ्यन्ते, येषामुपरि बलप्रयोगेण विद्युत् प्रादुर्भवति। यथा मन्थनविधिना बलप्रयोगेण अरणिद्वारा यज्ञीयोऽग्निः समुत्पाद्यते स्म। एवं नूतनध्वनिवैज्ञानिकाः कृत्रिमस्फटिकद्वारा पराश्रव्याख्यं ध्वनिम् अभिव्यञ्जयन्ति। पराश्रव्योत्पादकाः स्फटिकाः काचमणिना[1], टूर्मलिनपदार्थेन[2] अथ च रोशेलाख्यलवणेन[3] च निर्मीयन्ते। वृहत्पात्रसन्निहिते जले लवणचूर्णं सम्मिश्रय चुल्लिकोपरि संस्थाप्य च तज्जलं वह्निना सन्तापयेत्। तदुपरि च लवणखण्डं तन्तुना सम्बद्धं प्रलम्बयेत्। लवणमिश्रितजलवाष्पैः, लम्बमानो लवणखण्डः प्रभावितः सञ्जायते। कालान्तरे स लवणखण्डः पूर्वापेक्षया स्थूलरूपेण दृश्यते। लवणखण्डे तां स्थूलतां जलसम्पृक्तलवण एव वाष्परूपेण सम्पादयति। अर्थात् सन्तप्तजलसम्पृक्तलवणवाष्पमेव लम्बायमाने लवणखण्डे सघनरूपतामादधाति। एवं सन्तप्तजलसम्पृक्तटूर्मलिनादि वाष्पमेव तन्तुना लम्बायमानं लघुटूर्मलिनखण्डं स्थूलं सम्पादयन् पूर्वकालिकं स्वरूपं सम्पादयति। अनया रीत्या काचमण्यादिद्वाराऽपि पराश्रव्यध्वनेरुत्पादकाः स्फटिकाः निर्मीयन्ते। श्वेतधातुतत्त्व[4]निर्मितटिटानेटपदार्थेन निर्मिता मृत्तिकाऽपि पराश्रव्यध्वनिमुत्पादयितुं क्षमा भवति। अस्यां मृत्तिकायां कृत्रिमस्फटिकाभावाद् अक्षस्यावश्यकता न जायते। बलप्रयोगे सति अस्यां मृत्तिकायां प्रत्येकं दिक्षु समरूपेण स्पन्दनं जायते। अतएव इयं प्रक्रिया नूतनध्वनिविज्ञानसम्प्रदाये विद्युद्[5] विरूपणनाम्नाऽभिधीयते।

ऋण-धनभेदेन विद्युद् द्विधा भवतीति वैज्ञानिकाः स्वीकुर्वन्ति। बलप्रयोगे सति वैद्युतस्फटिकस्य एकस्मिन् भागे धननामिका, अपरस्मिश्च भागे ऋणाख्या विद्युत् प्रादुर्भवति। परस्परमाकर्षणे सति उभयोर्भागयोरावेशः परिवर्तते। पुनः बलान्तरप्रयोगे सति (विभवान्तरप्रयोगे सति) स्फटिकः प्रसरति। प्रत्यावर्तिविभवप्रयोगे सति स्फटिके भूयोभूय आकुञ्चनप्रसारणे भवतः, तेन तस्मिन् यान्त्रिकं स्पन्दनम् आविर्भवति। आवृत्तिप्रत्यावर्तिविभवयोः स्पन्दनं यदा समानरूपेण जायते, तदा समस्पन्दनेन पराश्रव्यध्वनिः समुत्पद्यते।

### अस्य स्वरूपम्

षट्फलकोऽयं स्फटिकखण्डः प्रथमचित्रे स्फटिकखण्डस्योर्ध्वाधस्तात् षट्फलकः

---

१. क्वार्टज। २. टूर्मलीन।

३. रोसेल साल्ट। सोडियम पोटासियम टारट्रेट।

४. वैरियम टीटानेट। ५. इलेक्ट्रोस्ट्रीक्शन।

समरूपस्तूपो विद्यते । स्तूपशिरोदेशस्थस्य विन्दुद्वयस्य संयोक्त्री रेखा Z इत्यात्मक-चिह्नेन सूच्यते, Z.Y.X–इत्यादयः संकेताः अक्षनाम्नाऽप्यभिधीयन्ते ।

द्वितीये चित्रे तु X. Y. Z. इत्यक्षत्रयं विद्यते । अक्षेऽभिलम्बमानं स्फटिकस्य कोणेभ्यश्च निःसृतं रेखात्रयं X अक्षनाम्ना, बहिष्ठंश्च रेखात्रयं Y अक्षनाम्ना अभिधीयते । Y अक्षः X अक्षेणापि सम्बद्धः । Z प्रकाशाक्षः, Y यान्त्रिकाक्षः, X विद्युदक्षः– इत्येवं बोद्धव्यम् ।

**पराश्रव्योत्पादनविधिः**

उपर्युक्तषट्फलकेन निम्नोक्तविधिना पराश्रव्यध्वनिः समुत्पाद्यते । X फलके Y अक्षस्याभिमुखं बलप्रयोगे सति X. Y इत्यक्षद्वयेऽपि ऋण-धनात्मको विद्युद्-आवेशः प्रादुर्भवति । अस्यां स्थितौ Y. X इत्यक्षद्वये धातुपात्राणि संश्लिष्य तेषामुपरि विद्युद्द्वारा विभवप्रयोगे सति X अक्षफलकस्याकुञ्चनम्, अथ च Y अक्षफलकस्य च प्रसारणं जायेते। अस्याम् आकुञ्चनप्रसारणदशायां X अक्षे प्रत्यावर्तिविद्युता विभवप्रयोगे सति Y इत्यक्षे अनुदैर्घ्यं स्पन्दनं जायते । अनुदैर्घ्य-स्पन्दने सति पराश्रव्यो ध्वनिः समुत्पद्यते[१] ।

इत्थमुपर्युक्तविवरणेन कृत्रिमे स्फटिके पराश्रव्यध्वनेरुत्पादनक्षमता विद्यते इति ज्ञायते । यदि कृत्रिमे स्फटिके एतावती शक्तिर्विद्यते तर्हि विशुद्धस्य स्फटिकमणेः स्फटिकपाषाणस्य वा का वार्ता ? किन्तु नूतनध्वनिवैज्ञानिकैः पराश्रव्यध्वनेरुत्पादनेऽस्य प्रयोगो न क्रियते, तदुपयोगविधेर्ज्ञानाभावात् । अस्माकम् आगमशास्त्रे सर्वविधिमन्त्रजपविधौ स्फटिकमणिरचितमालायाः सदुपयोगो दृश्यते। उक्तञ्च स्वच्छन्दतन्त्रस्य द्वितीयपटले—

गृहस्थेन न कर्तव्यम् उद्वेगजननं परम् ।
तस्मात्तु स्फाटिकी माला जप्तव्या साधकोत्तमैः ॥ १५३ ॥ इति ।

साधकोत्तमैः गृहस्थैरित्यर्थः ।

साधयेद् विविधान् कामान् अधमान् मध्यमोत्तमान् ॥

सरस्वतीस्वरूपपरकस्तुतावपि--

हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थिताम् ,
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ इति ।

सरस्वतीहस्तेन ग्राह्यत्वात् स्फाटिकमालिकायाः महत्वं सूच्यते । अत्रेत्यं योजना कर्तव्या—

---

१. श्रीललितकिशोरसिंहकृते ध्वनिविज्ञाने ग्रन्थे एतदीयोंऽशो द्रष्टव्यः ।

नूतनध्वनिवैज्ञानिकाः कृत्रिमस्फटिकाद् लोकोत्तरकार्यसम्पादनक्षमं पराश्रव्यध्वनिं समुत्पादयन्ति । विशुद्धस्फटिकविरचितमालायाश्च सर्वविध-मन्त्रानुष्ठाने सर्वविधकामप्रदत्वं प्रोक्तम् । विशुद्धस्फटिकमालायां सर्वविधकामप्रदत्वं लोकोत्तरशक्तिसम्पन्नपराश्रव्यध्वनिद्वारैव सम्पाद्यते । एतच्च तथ्यं कृत्रिमस्फटि-कात् समुत्पन्नपराश्रव्यध्वनिद्वारा रोगादिनिवारणकार्येण ज्ञायते । जपकाले स्फटिकमालया सह अङ्गुल्याः संघर्षणेन मन्त्रचैतन्यपूर्वकः पराश्रव्यध्वनिः समुत्पद्यते । एवं नरास्थिमालायामपि एतादृशीशक्तिर्दृश्यते । उक्तञ्च—

वीरस्थानरतानां हि वीराणां वरवर्णिनी ।
महाशङ्खाक्षसूत्रं तु सर्वकामफलप्रदम् ॥ १५ ॥ इति ।
( स्व० त० पट० २ )

वीरस्थानम् = श्मशानादि, महाशंखम् = नरास्थि, वीराः = निष्कम्पाः । नरास्थिषु एतादृशशक्तेः सत्त्वादेव मन्त्रानुष्ठाने करमालाया वैशिष्टयं दृश्यते । परन्तु मृतनरास्थिमालया सर्वैर्न जपः कर्तव्यः; उद्वेगजननात् । उक्तञ्च स्वच्छन्द-तन्त्रस्य द्वितीये पटले –

गृहस्थेन न कर्तव्यमुद्वेगजननं परम् ।
तस्मात्तु स्फाटिकी माला जप्तव्या साधकोत्तमैः ॥ १५३ ॥

किञ्च पाषाणोऽपि श्रोत्रवान्, अथं च ध्वन्युत्सर्जनशक्तिविशिष्टः । उक्तञ्च 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' ( ३।१।७ ) इति पाणिनीयसूत्रस्य पात-ञ्जलमहाभाष्ये 'सर्वस्य वा चेतनावत्त्वात्' इति वार्त्तिकव्याख्यावसरे अयस्कान्त-मणिः सङ्क्रामति, ऋषिः पठति, शृणोत ग्रावाणः इति । वस्तुतस्तु सर्वस्य चेतनावत्त्वात् सर्वेऽपि पदार्थाः अतीव सूक्ष्मं ध्वनिं विसर्जयन्ति, यं वयं न शृणमः । आधुनिकध्वनिविज्ञानदृष्टयाऽपि सर्वत्र पराश्रव्यध्वनिः निःसरति, सर्वत्र स्पन्दनस्य सत्त्वात् इति तु पूर्वमेव ध्वनितत्वाख्ये परिच्छेदे प्रतिपादितम् । किन्तु विधिद्वारा समभिव्यक्त एव पराश्रव्यो ध्वनिः सर्वविधिकार्यसम्पादनार्हः सम्भवति ।

**मन्त्रजपविधिना पराश्रव्यध्वनिशक्तेरुत्पत्तिः**

विधिद्वारा अनुष्ठितो मन्त्रः पराश्रव्यरूपतां स्वीकृत्य स्वनिष्ठविद्युच्छक्त्या अनुष्ठातुरभिलषितं कार्यं सम्पादयति । आकर्षण-वशीकरण-मोहन-विद्वेष्णोच्चाटन-मारणेति षड्विधा मन्त्रध्वनयः शास्त्रोक्तासनादिविधिना अनुष्ठिताः अद्भुतं कार्यं सम्पादयन्ति ।

मानसोपांशुवाचिकभेदेन त्रिविधो जपः स्मृतः । उक्तञ्च—

शान्तिके मानसो जप्य उपांशु पौष्टिके स्मृतः ।
सशब्दश्चाभिचारेऽसौ प्रागुदग्दक्षिणामुखः ॥ १४५ ॥ इति ।
( स्व० तं० पट० २ )

प्राक्=प्राची, उदक्=उत्तरदिशा, दक्षिणदिशेति तिसृणां दिशानां सङ्केतः। शान्तिकपौष्टिकाभिचारशब्देन कर्मणां निर्देशः। मानसोपांशुसशब्दपदैः जपविधिः प्रोक्तः। आकर्षणवशीक्रणमोहनभोगमोक्षाख्ये शान्तिके कर्मणि प्राङ्मुखः सन् मानसिको ( मध्यमायां वाचि ) स्वाभीष्टसाधनसमर्थवान् मन्त्रो जप्तव्यः। एवमुपांशुजपादावपि समूहनीयः। एवं कृते सति मन्त्रनिष्ठा शक्तिर्जार्गति। अत्र विषये श्रद्धाविश्वासावपि अपेक्षणीयौ। आकर्षणमोहनमारणेत्यभिचारमन्त्राः भूतविषजिन्मन्त्राश्च अनुष्ठानकाले वाचिकजपेनैव सिद्ध्यन्ति।

वाचिकजपस्वरूपं प्रोक्तं तत्रैव—

'परे शृण्वन्ति यं देवि स शब्दः स उदाहृतः।
अष्टोत्तरशतेनैव अक्षमाला समेरुका ॥ १४७ ॥ इति।

'परे शृण्वन्ति यम्' इत्यस्य रहसि द्वेषणादिमन्त्रस्य एतादृशध्वनिना जपो विधेयः, यः परैः श्रोतुं शक्यः। अन्यथा मदुक्ततात्पर्यविरुद्धार्थस्वीकारे तु 'षट्कर्णो मन्त्रो भिद्यते' इति लोकप्रसिद्धमतविरोधः स्यात्। किञ्च, योगयुक्तितपोमन्त्र-प्रभावा गोपनीये सत्येव फलन्ति, नान्यथा। बाह्याभ्यन्तरशुद्धिः, श्रद्धाविश्वासौ, आसनमाला, कालदिशा, परभावभावनाश्च—एतासु सामग्रीषु सत्स्वेव मन्त्रेषु पराश्रव्यध्वनिशक्तिर्जार्गति।

## आसनम्

वशीकरण-कर्षणोच्चाटन-विद्वेषण-मारणमन्त्रेषु क्रमशो मेषमृगोष्ट्रगजचर्म-कृष्णकम्बलानाञ्च आसनानि प्रयुज्यन्ते। पुष्टिकर्मसु पद्मासनेन, शान्तकर्मसु स्वस्तिकासनेन स्थातव्यम्। विद्वेषणोच्चाटनयोः क्रमशः कुक्कुटार्द्धस्वस्तिकासनाभ्याम्, मारणस्तम्भनयोश्च विकटासनेन, वशीकरणे च भद्रासनेन अनुष्ठानं कर्तव्यम्। शुभकर्मसु प्रागुदीच्योः, दुष्टकर्मसु च दक्षिणप्रतीच्योः दिशोः मुखं कृत्वा आसने समुपविशेत्। दर्शनोपनिषदश्चतुर्थे खण्डे कानिचिद् आसनानि प्रोक्तानि। तद्यथा—

कुक्कुटासनम्

कूर्पराग्रे मुनिश्रेष्ठ निक्षिपेन्नाभिपार्श्वयोः ॥ १० ॥
भूम्यां पाणितलद्वन्द्वं निक्षिप्यैकाग्रमानसः।
समुन्नतशिरःपादो दण्डवद् व्योम्नि संस्थितः ॥ ११ ॥
मयूरासनमेतत् स्यात् सर्वपापप्रणाशनम् ॥

स्वस्तिकम्

जानूर्वोरन्तरे कृत्वा सम्यक् पादतले उभे ॥ २ ॥

समग्रीवशिरःकायः स्वस्तिकं नित्यमभ्यसेत् ॥

पद्मासनम्

अङ्गुष्ठावपि गृह्णीयाद् हस्ताभ्यां व्युत्क्रमेण तु ॥ ४ ॥
ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतलद्वयम् ॥
पद्मासनं भवेत् प्राज्ञ सर्वरोगभयापहम् ॥ ५ ॥

भद्रासनम्

गुल्फौ तु वृषणस्याधः सीविन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलम् ॥ ७ ॥
भद्रासनं भवेद् एतद् विषरोगविनाशनम् ॥

यथा नूतनध्वनिवैज्ञानिकाः क्वार्ट्जक्रिस्टल यन्त्रद्वारा पराश्रव्यध्वनिं समुत्पादयन्ति । तथैव पुराकाले आसनप्रभावेण मन्त्रेषु विचित्रां शक्ति समुत्पादयन्ति स्म । आसनप्रभावेण मन्त्राक्षरेषु कार्यसम्पादनक्षमाणि आवर्तिप्रत्यावर्तिस्पन्दनानि प्रादुर्भवन्ति ।

**माला**

वशीकरणादिमन्त्रेषु पराश्रव्यध्वनिशक्तेरभिव्यक्त्यर्थं मालाया अपि निर्देशः कृतः शास्त्रकृद्भिः । वशीकरणमोहनमन्त्रयोरनुष्ठाने हीरकमाला, आकर्षणमन्त्रे च गजमौक्तिकमाला, विद्वेषणोच्चाटनमारणमन्त्रेषु च कृष्णोर्णनिर्मिता माला प्रयोक्तव्या । मौक्तिकस्फाटिकमालासु सप्तविंशतिः, यद्वा चतुःपञ्चाशतमणयः, गुञ्जारुद्राक्षमालयोश्च अष्टोत्तरशतमणयो ग्रथ्यन्ते । शान्तकर्मसु स्तम्भनवशीकरणमन्त्रानुष्ठाने तर्जन्या, आकर्षणे अंगुष्ठेन अनामिकया च, विद्वेषणोच्चाटनयोश्च अंगुष्ठतर्जनीभ्याम्, मारणे च अंगुष्ठया, कनिष्ठया च माला जप्तव्या ।

अत्रेदं रहस्यम्—

अभीष्टकार्यसम्पादनार्थं तत्तन्मन्त्रेषु या या माला निर्दिष्टा तास्वेव तत्तत्कार्यसम्पादनक्षमविद्युच्छक्तेरुत्पादनशक्तिर्विद्यते, नान्यासु । मालानिष्ठविद्युच्छक्तिरावेशेन यद्वा विभवेन मन्त्राक्षरेषु पराश्रव्यध्वनेः शक्तिरभिव्यज्यते ।

**कालः**

मन्त्राः कालानुसारेण अनुष्ठाने सत्येव पराश्रव्यध्वनिशक्तिविशिष्टा भवन्ति । कालशब्देनात्र बाह्याभ्यन्तरोभयोः कालयोर्ग्रहणमत्र बोद्धव्यम् । बाह्यकालो यथा प्रातः, मध्याह्नः, अपराह्णश्चेति । एवं आभ्यन्तरा अपि प्रातरादयः कालाः सन्ति । शरीरान्तःप्रदेशे कदा प्रातः, कदा च सायङ्कालो भवतीत्ययं विषयो ध्वनितत्त्वाख्ये प्रथमपरिच्छेदे अत्रैव ग्रन्थे हंसध्वनिनिरूपणावसरे व्याख्यातः ।

अतो नास्ति पिष्टपेषणस्यावश्यकता। प्रातः कालेऽनुष्ठाने सति मन्त्राः शीघ्रफलप्रदा भवन्ति। किन्तु न केवलं बाह्य एव प्रातःकालः, अपि तु आभ्यन्तरोऽपि स्याद्। युगपद् बाह्याभ्यन्तरोभयविधप्रातःकाले समागते सति अनुष्ठिता मन्त्रध्वनयः पराश्रव्यात्मना सिद्धिमायान्ति। किञ्च, आभ्यन्तरे प्रातर्वेलायां सर्वे मन्त्राः स्वत एव उद्यन्ति। उक्तञ्च—

बाह्येऽपि तरवो लोके ऋतुषट्कसमीरितम् ॥ १०५ ॥
कुसुमानन्दमायान्ति कुसुमायुधदीपकम् ॥

अत एव

मन्त्राः कालानुरूपेण व्रतचर्यादिनेरिताः ॥ १०६ ॥
ज्ञेयबोधप्रदीप्ताश्च सिद्धिमुक्तिप्रसाधकाः ॥ इति।
( स्व० तं०, पट० ७ )

कालः = मीनाद्युदयः, व्रतम् = आराधानमियः, चर्या = साधकोचितः समयाचारः, आदिशब्दात् करणवन्धादिः उच्चारणोपायः। ईरिताः = उत्तेजिताः। ज्ञेयबोधः = मन्त्रवाच्यदेवताव्याप्तिज्ञानम्, तेन प्रदीप्ताः तत्प्रकाशाविभेदसाराः। अष्टाङ्गुलकण्ठदेशाद् अंगुलद्वयं त्यक्त्वा ऊर्ध्वं तालवन्तं सञ्चरन् षडङ्गुलं तालवन्तं प्राप्नोति, तदा आभ्यन्तरे मीनोदयकालः सञ्जायते।

परभावभावना—

मन्त्रेषु पराश्रव्यध्वनिशक्तेरभिव्यक्त्यर्थं परभावभावनाया विशेषमहत्त्वं विद्यते। परभावभावना एव वस्तुतो मन्त्रजपस्य विशुद्धं स्वरूपम्। उक्तञ्च—

भूयो भूयः परे भावे, भावना भाव्यते हि या।
जपः सोऽत्र स्वयं नादो मन्त्रात्मा जप्य ईदृशः ॥ १४५ ॥

परे भावे अनाहतध्वनिभट्टारके या मनसा मन्त्राक्षराणां भावना = विमर्शनं—

अहमेव परो हंसः, शिवः परमकारणम्।
( स्व० तं० प० ५ श्लो० ३९५ )

इत्यादिरूपा सम्पाद्यते, स एव नादः अकृतकाहंविमर्शात्मा जपनीयो देवः। इत्थं या भावना निष्पाद्यते स एव जपः। समेषां मन्त्राणाम् आत्मा स्वरूपभूतः नादस्तु जप्यः। अयं भावः—समेषां मन्त्राणां विशुद्धं स्वरूपम् अनाहतनादः, तत्र च सर्वे मन्त्राः लीनाः। उक्तञ्च—

वाङ्निरुद्धः सुचित्तात्मा राजीवासनसंस्थितः।
मूलमन्त्रं समुच्चार्य नादे लीनं विचिन्तयेत् ॥ १३८ ॥
( स्व० तं० पट० २ )

अक्षराण्यपि इन्द्रियाणि उन्मील्य ऊर्ध्वं मीलितानि कृत्वा सञ्चिन्त्य मन्त्रदेवतां सम्यगात्मैक्येन चिन्तयित्वा लीनं तन्मयीभूतं विशेषेण मन्त्रम् अनाहतनादानुप्रवेशात्मना चिन्तयेत्। अनाहतनादानुप्रवेशात्मना चिन्तयन्नेव च जपमारभेत, भूयोभूयो मन्त्रं विमृशेत्। एतदेव तात्पर्यमनुवदति—

अक्षराक्षरसन्तानं न द्रुतं न विलम्बितम् ॥ १३९ ॥
जपः प्राणसमः कार्यः दिनस्थो मुक्तिकांक्षिभिः ॥ इति।

दिनस्थः = हृदयदेशाद् आभ्यन्तरसूर्यस्योर्ध्वसञ्चारकालः। अयं भावः— अनाहतनादात्मना मन्त्राक्षराणां स्वतः स्फुरणमेव विशुद्धो जपः। अन्यसाधनेषु सत्स्वपि परभावभावनाऽभावे मन्त्रेषु पराश्रव्यध्वनेः शक्तिर्न जागर्ति; आदिमान्त्यविहीनमन्त्राणां शरदभ्रवद् निरर्थकत्वात्। आसनाद्यभावेऽपि परभावभावनायां सत्यां तु मन्त्राः पराश्रव्यध्वनिशक्तिविशिष्टा जायन्ते एव।

इत्थमनया दिशा प्राचीनः, अथ च नवीनः पराश्रव्यध्वनिशक्तेरुत्पादनविधिः प्रोक्तः। नूतनाः कृत्रिमसाधनैः पराश्रव्यध्वनिशक्तिमुत्पादयन्ति, प्राचीनास्तु मन्त्रजपादिविधिना दैवशक्त्येत्युभयत्र भेदो बोद्धव्यः। अयं तु बाह्यस्यैव मन्त्रात्मकस्य पराश्रव्यध्वनिशक्तेरुत्पादविधिः प्रोक्तः, आभ्यन्तरस्य तु एतद्भिन्नः। देहान्तर्भूतायाः पराश्रव्यध्वनिशक्तेः साक्षात्कारविधिस्तु अत्रैव ग्रन्थे प्रथमपरिच्छेदे हंसतत्त्वविमर्शावसरे षण्मुखीमुद्रानिरूपणमुखेन प्रतिपादितः। बाह्याभ्यन्तरयोरयं भेदः—बाह्यपराश्रव्यध्वनिशक्तेरभिव्यक्तौ मन्त्राक्षराणां नादात्मना चिन्तनं क्रियते। आभ्यन्तरस्य समभिव्यक्तौ तु षण्मुखीमुद्रया केवलं सोऽहं हंसः इत्यात्मकानाहतध्वनिभट्टारकस्य मननं क्रियते। कालदिशाऽऽसनादिप्रभावात् मन्त्रेषु पराश्रव्यध्वनेः शक्तिरभिव्यज्यते। एतदर्थं सत्यशौचादयोऽपि अपेक्षणीयाः।

## मन्त्राणां पराश्रव्यरूपत्वम्

मन्त्रा आदिमान्त्याख्यपराश्रव्यध्वनियुता एव सजलाभ्रवत् फलदा भवन्तीति पूर्वमुक्तम्। आदिमान्ताख्यो ध्वनिरहमित्युच्यते। अहन्तत्त्वमेव च जीवलोके प्राणमाध्यमेन हंसात्मना अवतरति। उक्तञ्च—

अहमेव परो हंसः शिवः परमकारणम्। (स्व० तं० प०)

हंस-प्रणवयोश्चाभेदः। अत एव पाशुपतब्राह्मोपनिषदि—

'हंसप्रणवयोरभेदः' (१९)।

इत्युक्तम्। गर्भीकृताशेषवर्णराश्यात्मकमहं-तत्त्वमेव परापश्यन्तीत्यादिरूपं भवतीति पूर्वं ध्वनितत्त्वाख्ये प्रथमपरिच्छेदे बहुशो व्याख्यातम्। प्रणवश्च अनाहतध्वनिभट्टारकनाम्नापि प्रसिद्धः। इत्थमहं हंसप्रणवानामभेद एव समायाति। एते

च सर्वे ध्वनयः पराश्रव्याः। पराश्रव्यध्वनिमूलकत्वात्, स्वभावतः पराश्रव्यध्वनि-स्वरूपतया स्फुरणे सत्येव फलकत्वाच्च, लोकोत्तरकार्यसम्पादनक्षमत्वाच्च मन्त्रा अपि पराश्रव्यध्वनिस्वरूपाः। यदा साधनद्वारा अभ्यासाद्वा प्रतिश्वासम् अनाहतध्वनौ स्वत एव अनायासेन स्फुरणं भवति तदा मन्त्रध्वनिषु चेतनशक्तिः समायाति।

किञ्च, मन्त्रघटका ध्वनयः शरीरस्यान्तःस्थितग्रन्थिचैतन्यप्रदविधिना नियुक्ताः। अर्थाद् मन्त्रेषु अकाराद्यक्षराणि एतादृशविधिना न्यस्तानि भवन्ति, यथा उच्चारणकाले ते मन्त्राः प्रसुप्तान् अन्तःकरणस्थग्रन्थीन् जागरयन्ति। जपकाले उच्चरिता मन्त्रध्वनयो नूतनवैज्ञानिकगवेषितेषु विश्वव्यापिषु ईथरतत्त्वेषु स्पन्दनं प्रादुर्भावयन्ति। क्षणमात्रेण च ईथरतत्त्वस्पन्दनमाध्यमेन विश्वं परिक्रम्य स्वाभि-व्यक्तिस्थानं ते ध्वनयः प्रत्यावर्तन्ते। मन्त्रघटकध्वनीनामुच्चारणद्वारा नाडीनां गुप्ततन्तुषु स्पन्दनोदयात् क्रमबद्धो यः स्पन्दनप्रवाहः ईथरतत्त्वेषु प्रचलति, स एव मन्त्रशक्तेरभिव्यक्तौ कारणम्। नूतनशब्दविज्ञानस्य वैज्ञानिकतथ्यानामवलोकनेन भारतीयमहर्षिभिरन्वेषितमन्त्रध्वनिशक्तिविज्ञाने स्वभावतोऽस्माकं विश्वासः सञ्जायते। नूतनभौतिकविज्ञानविद्वद्भिः गवेषिताः केचिद् ध्वनिविषयकाः प्रयोगा अधस्तात् समुल्लिखिताः।

**पराश्रव्यध्वनेः क्षमता**

नूतनध्वनिविद्वद्भिः पराश्रव्यध्वनेरन्वेषणं कृतमिति अद्यैव पराश्रव्यध्वने-रुपक्रमे प्रतिपादितम्। पराश्रव्यध्वनिद्वारा रोगोत्पादका बहवः कीटाणवो नश्यन्ति। अयं पराश्रव्याख्यो ध्वनिः विषवत् पदार्थेभ्यः विषं निःसारयितुं क्षमः। तद्विषश्च संशोध्य तेन रोगाक्रमणं विरुध्यते। अस्माकं रुधिरेषु रक्तश्वेतोभया-त्मकाः परमाणवः समुपलभ्यन्ते। अरुणपरमाणूनां वृद्धौ सत्यां शरीरं रोगाक्रान्तं जायते। रक्तेषु पराश्रव्यध्वनिसञ्चारे सति रोगः स्वतः शाम्यति। हृत्पिण्डेषु, यकृते, मांसलग्रन्थिषु च सुगमतया पराश्रव्यध्वनिः प्रविश्य बहून् रोगान् अपसार-यति। अयं ध्वनिर्बौद्धिकगतिविधिमापने रोगापसारणे च सफलो दृष्टः। प्राचीरादिस्थूलताज्ञानमनेन ध्वनिना सुगमतया कर्तुं शक्यते। विदीर्णस्य धातु-पिण्डस्य परिस्थितिज्ञानेऽपि अयं ध्वनिः प्रयुज्यते। यदि धातुखण्डद्वयं केनाप्युपायेन न संयुज्यते, तर्हि अनेन ध्वनिना तत्कार्यं सुगमतया कर्तुं शक्यते। ध्वनिसाहाय्येन लोहधातुषु स्वाभीष्टं छिद्रं कर्तुं शक्यते। पराश्रव्यध्वनेः सदुपयोगोऽतीव सूक्ष्म-पदार्थस्य मलापसारणेऽपि क्रियते। पराश्रव्यध्वनिद्वारा मलिनानि ऊर्णवस्त्राणि सुगमतया निर्मलीक्रियन्ते। द्रवीभूतेषु पदार्थेषूद्वहन्तो लघुकणाः, पराश्रव्यध्वनि-द्वारा समानरूपेण विस्तीर्यन्ते, परिस्थितिवशाच्च परस्परं सङ्कुट्य घनीभूतं रूपं दधति। जगति केचित् पदार्था एवम् अप्युपलभ्यन्ते, येषां केनचिद् पदार्थेन सह

सम्मिश्रणमसम्भवम् । यथा जलतैलयोः, तैलपारदयोः । किन्तु पराश्रव्यध्वनिद्वारा अनयोः पदार्थयोः सम्मिश्रणं सम्भवति । ध्वनिद्वारा जलतैलयोः, तैलपारदयोः सम्मिश्रणं कृत्वा पदार्थान्तरं[1] निर्मीयते[2] ।

एवं कृत्रिमसाधनद्वारा समुत्पादितस्य पराश्रव्यध्वनेः अद्भुतः कार्यकलापो दृश्यते । किं पुनरस्माकं निगमागमपुराणदर्शनादिषु दृश्यमानमन्त्रघटकध्वनि-शक्तिविषये अथ च आभ्यन्तरपराश्रव्यध्वनिविषये परमाश्चर्यम् !

आभ्यन्तरः स्फोटाख्यः पराश्रव्यध्वनिरेव प्राणापानादिकं चेष्टयति, प्राणापानादिचेष्टया च जीवं जीवयति । प्राणापानौ च तदाश्रयेण सार्थकौ । उक्तञ्च स्कन्दपुराणान्तर्गते प्रणवकल्पे श्रीप्रणवस्तवराजव्याख्यायाम्—

जीवा जीवन्ति येनैव प्राणापानादिचेष्टया ।
यमाश्रित्य उभौ तस्मै प्रणवाय नमो नमः ॥ १६ ॥

जीवाः सर्वे येनैवात्मना जीवन्ति, चेतयन्ति, उभौ प्राणापानौ यं प्रणवध्वनि-माश्रितौ । तथा श्रुतिः—

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥
ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्ति च ।
मध्ये वामनमासीनं विश्वेदेवा उपासते ॥ इति ।

कृत्रिमसाधनद्वारा समुत्पन्नस्य पराश्रव्यध्वनेर्वेगस्य निर्णयः केनचिद् यन्त्रेण कर्तुं शक्यते, परन्तु प्रणवाख्यस्य स्वभावतः समुच्चरितस्य सदोदितस्य पराश्रव्यस्य तु गतिः न केनापि ज्ञातुं शक्यते । मनोगतिमपि तिरस्करोति । उक्तञ्च श्रीस्कन्द-पुराणे प्रणवकल्पे पञ्चमेऽध्याये—

मनसो गतिहन्ता च गम्यानामुत्तमोत्तमः ।
घण्टानिनादो घण्टेयो घण्टेयपरनन्दनः ॥ १९ ॥ इति ।

शक्तिमत्त्वान्मनसो गतिं हन्ति तिरस्करोतीति मनसो गतिहन्ता । 'अनेजव एको मनसो जवीयः' इति श्रुतेः । गम्यानां प्राप्याणां कर्मोपास्तिज्ञानफलानामुत्त-मोत्तमो निरतिशयोत्कर्षकाष्ठां प्राप्तः । घण्टेयः = घण्टानादसदृशोऽनाहतः ।

---

१. इमलसन ।

२. एते सर्वे पराश्रव्यध्वनिप्रयोगाः श्रीललितकिशोरसिंहकृतं ध्वनिविज्ञानग्रन्थमाश्रित्य प्रोक्ताः । तत्र 'पराश्रव्यकी' इति चतुर्दशाध्याये २३२ तमपृष्ठतः २३४तमपृष्ठपर्यन्तम् एतदीयोंऽशो द्रष्टव्यः ।

घण्टेयपरनन्दनः = घण्टेयपरान् अनाहतनादसमाधिनिष्ठान् नादयत्यानन्दमिति घण्टेयपरनन्दनः।

विधिपूर्वकसमुच्चरितः प्रणवो जलमपि वर्षयति। किञ्च, निर्जलं घनं सजलदं सम्पादयति। उक्तञ्च प्रणवकल्पे प्रथमेऽध्याये—

घण्टानादकरो घण्टानादवान् नादवान् घृणाः।
घस्रो घनितचिद्रूपो घनानां जलदायकः॥ २०॥

अत्र 'घनानां जलदायकः' इत्युक्तम्। कृत्रिमपराश्रव्यध्वनिस्तु बाह्यमेव ऊर्णादिवस्त्रमलं प्रक्षालयति, लोहधातुखण्डद्वयञ्च संयुनक्ति; अन्तर्भूतप्रणवस्तु सर्वमपि पापजनितं मलं नाशयति। सर्वविधमपि सम्पत् प्रददाति। तस्य वेत्ता च सर्वमपि वेदं जानाति। उक्तञ्च ध्यानबिन्दूपनिषदि—

ह्रस्वो दहति पापानि दीर्घः सम्पत्प्रदोऽव्ययः।
अर्धमात्रासमायुक्तः प्रणवो मोक्षदायकः॥ १७॥
तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत्।
अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित्॥ १८॥ इति।

वैज्ञानिकाश्चोरभयाद् गृहस्य सुरक्षां कृत्रिमपराश्रव्यध्वनिद्वारा सम्यक्तया सम्पादयन्ति। गृहप्रकोष्ठं पराश्रव्यध्वनिना प्रपूरयन्ति। पराश्रव्यध्वनिप्रपूरिते प्रकोष्ठे चौरो यदा प्रविश्य पादसञ्चारं करोति, तदा पराश्रव्यध्वनितरङ्गाः प्रत्यावर्तन्ते, प्रत्यावृत्य च सूक्ष्मम् अभिग्राहकयन्त्रम् उत्तेजयन्ति। ततः तत्संश्लिष्टा घटनासूचिका घण्टा च नादयते[1]। औरस्येनानाहतध्वनिना तु दूरदर्शनश्रवणादि सर्वविधमपि ज्ञानं जायते। उक्तश्च स्वच्छन्दतन्त्रस्य सप्तमे पटले—

हतमृत्युर्जरां त्यक्त्वा रोगैः सर्वैरथोज्झितः।
विज्ञानं श्रवणं दूरात् मननं चावलोकनम्॥ २११॥

---

१. "पराश्रव्य ध्वनि की अनेक व्यावहारिक उपयोगितायें हैं। इसकी प्रतिध्वनि द्वारा समुद्र की गहराई या पनडुब्बियों आदि के पता लगने की चर्चा आगे की जा चुकी है। पर इसी साधन से एक अन्धा अपने रास्ते पर निरापद चल सकता है। उसके उपयोग से चोर पकड़े जाते हैं। जिस कमरे की रक्षा करनी होती है उसे पराश्रव्य से भर दिया जाता है। जब उस कमरे में कोई चलता है तो डायलपरिणाम से परावर्तित तरङ्ग की आवृत्ति बदल जाती हैं। इस बदलती हुई आवृत्ति की तरङ्ग से सूक्ष्म अभिग्राहक उत्तेजित हो उठता है। और उससे लगी हुई खतरे की घण्टी बजने लगती है"। ( —श्री ललितकिशोरसिंहकृते ध्वनिविज्ञाने पृ० सं० २३४ )।

यः परमनिष्कलभट्टारकात्मा हंसः, स एव विश्वं कलयन् काल हंस इतीह उक्तः। हंसप्रणवयोर्नास्ति भेदः—इति पूर्वमेवोक्तम्। किञ्च, दक्षिणनासापुटयोरस्य ध्वनेः ध्यानाभ्यासाद् भूतकालादिज्ञानोपलब्धिरपि जायते। तद्यथा प्रोक्तं तत्रैव—

सर्वैश्वर्यगुणावाप्तिर्भवेत् कालजयात् सदा।
दक्षनासापुटे ध्यात्वा ब्रह्मैश्वर्यमवाप्नुयात्॥ २१२॥

तदायुस्तत्समं वीर्यंभूतकालश्च वेत्यतः।
भविष्यज्ञो भवेद् वामे विष्णुतुल्यबलश्च सः॥ २१६॥

तत्समं चैतदैश्वर्यं तदायुर्योगिराड् भवेत्।
भूतं भव्यं भविष्यच्च सर्वं जानाति मध्यतः॥ २१४॥ इति।

किञ्चास्यान्तःस्थितस्य पराश्रव्यध्वनेर्या क्षमता, सा सर्वात्मना वर्णयितुं न पार्यते। आंशिकरूपेण किमप्युक्तं मया। नूतनैर्भौतिकीयध्वनिविज्ञानविद्वद्भिरन्वेषितेन कृत्रिमविधिना समुत्पन्नेन पराश्रव्यध्वनिना लोहधातुखण्डद्वयं संश्लिष्यते। रोगोत्पादकीटाणव एवं नश्यन्ति। एतच्च तथ्यं, 'मन्त्रघटकध्वनिभिर्दूरस्थितानां पदार्थानां यद् आकर्षणम्, रोगनिवारणम्, शत्रूणां मारणमोहनादिकञ्च इत्यादीनि यानि कार्याणि, तत्रास्माकं विश्वासं समुत्पादयति। मन्त्रघटकध्वनिभिर्दूरस्थवस्तूनाम् आकर्षणं क्रियते। उक्तञ्च वातुलशुद्धाख्यतन्त्रस्य पञ्चमे पटले—

कर्षणादिक्रियाः सर्वाः मन्त्रेणैव प्रकीर्तिताः।
तस्मान् मन्त्रे क्रियार्थत्वाद् विना मन्त्रं क्रिया न च॥ ३॥

मन्त्रस्तु देवतारूपं मन्त्ररूपमिदं जगत्।
परार्द्धकोटिमन्त्राश्च शिववक्त्राद् विनिर्गताः॥

मननं सर्वपक्षेषु त्राणं संसारसागरात्।
मननत्राणधर्मत्वाद् मन्त्र इत्यभिधीयते॥ ७॥ इति।

जिह्वया वायुमाकृष्य तत्पानेन च श्रमदाहनाशो ध्वनिः समुत्पद्यते। एवम् इडादिनाड्या अपि आकृष्टवायुजनितध्वने रोगनाशकत्वं प्रोक्तम्। तद्यथा—दर्शनोपनिषदि षष्ठे खण्डे—

जिह्वया वायुमाकृष्य यः पिबेत् सततं नरः।
श्रमदाहविनिर्मुक्तो योगी नीरोगतामियात्॥ २५॥

जिह्वया वायुमाकृष्य जिह्वामूले निरोधयेत्।
पिबेद् अमृतमव्यग्रं सकलं सुखमवाप्नुयात्॥ २६॥

ईडया वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत्।
यः पिबेदमृतं शुद्धं व्याधिभिर्मुच्यते हि सः॥ २७॥ इति।

अयं भावः—इडादिनाड्या वायोराकर्षणे सति एतादृशो ध्वनिः समुत्पद्यते, येन अमृतबिन्दवः स्रवन्ति, रोगाश्च नश्यन्ति ।

अन्तःस्थिते प्रणवाख्ये पराश्रव्यध्वनौ अग्नितत्त्वम्, विद्युत्तत्त्वञ्च सन्निहिते । उक्तञ्च नादबिन्दूपनिषदि प्रणवस्य प्रधानमात्राचतुष्टयस्वरूपनिरूपणे—

आग्नेयी प्रथमा मात्रा वायव्येषा तथा परा ॥ ६ ॥
भानुमण्डलसंकाशा भवेन्मात्रा तथोत्तरा ।
परमा चार्द्धमात्रा या वारुणी तां विदुर्बुधाः ॥ इति ।

व्यष्टिसमष्ट्यात्मकद्वादशमात्राभेदनिरूपणे च—

घोषिणी प्रथमा मात्रा विद्युन्मात्रा तथा परा ।
पतङ्गिनी तृतीया स्यात् चतुर्थी वायुवेगिनी ॥ ९ ॥
पञ्चमी नामधेया तु षष्ठी चैन्द्रयभिधीयते ।
सप्तमी वैष्णवी नाम अष्टमी शाङ्करीति च ॥ १० ॥
नवमी महती नाम धृतिस्तु दशमी मता ।
एकादशी भवेन्नारी ब्राह्मी तु द्वादशी परा ॥ ११ ॥ इति ।

अत्रोपर्युद्धृतेषु श्लोकेषु 'आग्नेयी प्रथमा मात्रा, विद्युन्मात्रा तथा परा' इति वचनेन मदुक्तं प्रमाणीभवति । अयमन्तःस्थपराश्रव्यो ध्वनिः स्वनिष्ठविद्युच्छक्ति-महिम्ना सर्वविधमपि कार्यं सम्पादयति ॥

॥ इति शम् ॥

## अकारादिध्वनीनामर्थवत्ताविचारः

### ( सप्तमः परिच्छेदः )

अहमिति प्रत्याहारान्तर्भूता अकारादिध्वनयः सूर्यरश्मिस्वरूपाः मन्त्रभूता इति निगमागमयोः उपनिषत्-पुराणयोश्च बहुशः प्रतिपादितम् । उक्तञ्च--

अमन्त्रमक्षरं नास्ति नास्ति मूलं निरौषधम् ।
अयोग्यः पुरुषो नास्ति प्रेरकस्तत्र दुर्लभः ॥ इति ।

प्रत्येकमन्त्रस्य आद्यक्षरं बीजमित्युच्यते । तद्यथा–

'रां रामाय नमः' इति ।

अयमुपर्युद्धृतो मन्त्रोऽस्माकं भागवतानां जीवनभूतो मन्त्रराजनाम्ना प्रोच्यते । अस्य मन्त्रराजस्य रामिति बीजम् । यथा बटबीजे सर्वमपि शाखापल्लवादिकं सूक्ष्मरूपेण सन्निहितम्, एवं रामित्यक्षरात्मके बीजे भगवतः श्रीरामचन्द्रस्य सर्वं तत्त्वम् अनभिव्यक्तरूपेण तिष्ठति । रामिति बीजाक्षरं कृशानुभानुहिमकराणां हेतुभूतम् ।[1] अस्मादेव बीजाक्षराद् अग्नीषोमौ समुत्पद्येते । "अग्नीषोमात्मकमिदं जगद्' इति श्रुतिप्रामाण्येन इदं सर्वं जगद् अग्नीषोमतत्त्वद्वयेन निर्मितम् । अग्नीषोमयोश्च रामिति बीजाक्षरात् समुत्पत्तेः सत्त्वाद् रामिति जगदुपादानभूतम् ।

प्रत्नयुगे भर्गादिशब्दानां द्विधा निरुक्तिरासीद् इति प्राचीनभारतीयसंस्कृतवाङ्मयेन प्रतीयते—१. व्याकरणप्रक्रियानुसारिणी, २. अक्षरार्थस्वरूपा च ।

१. तद्यथा भर्गशब्दस्य—

भृज्यन्ते कामादयोऽनेनेति भर्गः[2] । इति ।

२. अक्षरानुसारिणी निरुक्तिर्यथा गोपथब्राह्मणे भर्गशब्दस्य—

भ – इति भासयतीमांल्लोकान् ।
र–इति रजयतीमांल्लोकान् ।
ग–इति गमयतीमांल्लोकान् ।

परन्तु इयमक्षरानुसारिणी निरुक्तिः अस्माकं देशे चिरकालात् तिरोहिता । केवलमुपनिषदादिग्रन्थेषु लिपिबद्धा दृश्यते, न तु तस्या व्यावहारिकं रूपं लोके

---

१. "वन्दौं राम नाम रघुवर के, हेतु कृशानु भानु हिमकर के ।"
( गोस्वामितुलसीदासकृते श्रीरामचरितमानसे, बालकाण्डे ) ।

२. द्र०—अमरसिंहकृतामरकोषः ( स्वर्गवर्गे श्लोके ३३तमे श्री पं० शक्तिधरकृतायां रसालाख्यव्याख्यायाम् । )

दृश्यते। प्रत्नयुगे अक्षरार्थस्य रीतिरासीदित्यत्राहं दृढं विश्वसिमि। नेयं मत्कृता कल्पना; एकैकस्य वर्णस्य प्रसङ्गानुसारेणार्थवत्त्वस्वीकारे भगवतः पतञ्जलेरपि सम्मतिः। महाभाष्यस्य प्रत्याहाराह्निके-"किं पुनरिमे वर्णा अथवन्तः, आहोस्विदनर्थकाः" इत्येवं पूर्वपक्षः समुत्थापितः। तत्रोभयोः पक्षयोर्विचारः कृतः। अकारादिवर्णानामर्थवत्त्वस्वीकारे हेतुचतुष्टयम्, अनर्थवत्त्वे तु हेतुद्वयं समुपस्थापितम्। तद्यथा—

१. अर्थवन्तो वर्णाः; धातुप्रातिपदिकनिपातानामेकवर्णानामर्थदर्शनात्।

अत्र वार्त्तिके केचिच्छब्दाः समुपस्थापिताः। तदयथा—

धातव एकवर्णा अर्थवन्तो दृश्यन्ते—एति, अध्येति, अधीते इति। प्रातिपदिकान्येकवर्णान्यर्थवन्ति—आभ्याम्, एभिः, एषु। प्रत्यया एकवर्णा अर्थवन्तः—औपगवः, कापटवः। निपाता एकवर्णा अर्थवन्तः—अ अपेहि, इ इन्द्रं पश्य। अ अपक्राम।

२. वर्णव्यत्यये चार्थान्तिरगमनात्। उदाहरणं यथा—

कूपः, सूपः, यूप इति। एकस्य वर्णस्याभ्युपगमे अन्यस्यापगमो व्यत्ययः। कूपशब्दे ककारस्यापगमे सकारस्य चाभ्युपगमे कूपवाच्यार्थभिन्नोऽर्थः समुपलभ्यते। अतः कूपादिशब्देषु ककारादय एव कूपाद्यर्थवाचकाः।

३. वर्णानुपलब्धौ चानर्थगतेः। उदाहरणं यथा –

वृक्षः, ऋक्षः, काण्डीरः। वृक्षशब्दे 'व' ध्वनिसत्तायां योऽर्थोऽवगम्यते, तदसत्त्वे सोऽर्थो नोपलभ्यते।

४. संघातार्थवत्वाच्च। येषां संघाता अर्थवन्तः, तेषामवयवा अपि अर्थवन्तः। तद्यथा—एकश्च तिलस्तैलदाने समर्थः, तत्समुदायोऽपि। येषाञ्च अवयवा निरर्थकाः, तेषां समुदायोऽपि निरर्थकः; यथा सिकताः। एका सिकता तैलदानेऽसमर्था, तत्समुदायोऽपि तथैव।

अनर्थवत्त्वे तु हेतुद्वयम्ः तद्यथा—

१. अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः।

२. वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात्। इति।

अस्योदाहरणं यथा—वर्णव्यत्यये—कृतेस्तर्कः, कसेः सिकताः, हिसेः सिंहः। वर्णव्यत्ययो नार्थव्यत्ययः।

अपायः=लोपः—घ्नन्ति, घ्नन्तु, अघ्नन्। वर्णापायो नार्थापायः।

उपजनः=आगमः, लविता, लवितुम्। वर्णोपजनो नार्थोपजनः।

विकारः=आदेशः—घातयति, घातकः। वर्णविकारो नार्थविकारः।

यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति, तद्वत् अर्थव्यत्ययापायोपविकारैर्भवितव्यम् । न चेह तद्वत् । अतो मन्यामहे—अनर्थका वर्णा इति ।

एवं भगवता पतञ्जलिनाऽत्र विषये पक्षद्वयमपि समुपस्थापितम् । कूपसूपादिशब्देषु ककारादिवर्णस्यार्थवत्त्वस्वीकारे—प्रातिपदिकत्वात् सुबुत्पत्तिस्तु न, संघातस्यैवार्थबत्त्वात् । संघातस्यैकत्वमर्थः । तेन वर्णात् सुबुत्पत्तिर्न भविष्यति । 'वृक्षः' इत्यत्र एकत्वं विभक्त्या द्योत्यते । यथा बहवो द्रष्टारः एकेनैव प्रदीपेन दृश्यं पश्यन्ति, एवं विभक्तिरपि उत्पद्यमाना समुदायादेव तन्त्रेण सर्वानुग्राहिणी उत्पद्यते । समुदाये द्विर्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति, न प्रत्येकम्, असुबन्तत्वात् । "यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" (पा० सू० १, ४, १३) इत्यनुवर्तनात् ।

इत्थमत्र भगवान् पतञ्जलिः पक्षद्वयं समुपस्थाप्य, किमत्र न्याय्यमिति शङ्कां पुरस्कृत्योभयपक्षस्य युक्तत्वं प्रतिपादितवान् । तद्यथा प्रत्याहाराह्निके—

"उभयमित्याह । कुतः ? स्वभावतः । तद्यथा समानमीहमानानां चाधीयानानां च केचिद् अर्थैर्युज्यन्ते, अपरे न । न चेदानीं कश्चिद् अर्थवान् इति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम् । कश्चिद् अनर्थक इति सर्वैरनर्थकैः" इति ।

अनेनोद्धरणेन प्रतीयते यत् प्रत्नयुगे प्रसङ्गवशाद् अन्वयव्यतिरेकाभ्यां वर्णानामार्थवत्त्वमनर्थवत्त्वञ्चोभयमपि संगृह्यते । अकारादिध्वनीनामर्थवत्त्वस्वीकारे न केवलं महाभाष्यकार-पतञ्जलेरेव सम्मतिः, अपि तु, अत्र विषये वैदिकवाङ्मयोऽपि प्रमाणतामावहति । तद्यथा—

ऋचो अक्षरे परमेव्योमन् यस्मिन् देवा अधिविश्वे निषेदुः ।
यस्तन्न वेद किम् ऋचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ इति ।
( ऋग्वेदः १।१।३६४।३९ )

निरुक्तदैवतकाण्डे अकारादिध्वनीनां मध्ये केषाञ्चिद् वर्णानामर्थो निरुक्तः । तद्यथा—

कः—कमनीयो भवति, सुखो भवति, क्रमणीयो वा" । तद्यथा—

"कः कमनो वा क्रमणो वा सुखी वा । इति ।
( निरु० दै० ४।२२ )

गकारमनक्तेर्दहतेर्वा । ( निरु० दै० १।१४ ) ।

छान्दोग्योपनिषदि यथा—

तानिह वा एतानि त्रीण्यक्षराणि स ति यमिति । तद्यत् सत् तदमृतम्, अथ यत् ति तन्मर्त्यम्, अथ यद्यम् तेनोभे यच्छति । ( छान्दोग्योपनिषद् )

गोपथब्राह्मणे (२।२।५ इत्यत्र) मखशब्दस्य व्याख्या कृता । तद्यथा—

मख इत्येतद् यज्ञनामधेयं छिद्रप्रतिषेधसामर्थ्यात् छिद्रं खमित्युक्तं तस्य म इति प्रतिषेधः, मा यज्ञे छिद्रं करिष्यतीति ।

'किञ्च अर्थवन्तो वर्णाः धातुप्रातिपदिकनिपातानामेकवर्णानामर्थदर्शनात्' । इति प्रत्याहाराह्निके महाभाष्ये यदुक्तं तत्पुष्टयर्थम् आगमेषु बहूनि प्रमाणानि समुपलभ्यन्ते । तद्यथा स्वच्छन्दतन्त्रस्य चतुर्थपञ्चमषष्ठपटलेषु—

अ = ब्रह्मा । उ = विष्णुः ।
य = रुद्रः । ० = ईश्वरः ।
( स्वच्छन्दतन्त्रम्—प० ४, श्लो० २६३ )

ऊ = धरित्र्यादिप्रधानान्तस्य वाचकः ।

य = पुरुषः, व = नियामिका शक्तिः, ल = कालः, कला, म = मायातत्त्वम्, क्ष = विद्यातत्त्वम्, र = ईश्वरः, ह = सदाशिवः, ० = शक्तिः ।
( स्वच्छन्दतन्त्रम् पट० ५ श्लो० ५-८ )

व्याकरणदर्शनपीठिकायां[1] तु 'हकारादिवर्णा वासुदेवादितत्त्वानां वाचकाः' इत्येवं निर्णीतम् । तद्यथा—

श, ष, स, ह = वासुदेवस्य तनुः । एतच्चतुष्टयं चतुर्ब्रह्म-शब्दाभिधेयम् ।

य, र, ल, व = अन्तःपुरुषेश्वरः ।

म = सर्वेषां चेतनानां समष्टिः ।

भ = प्रकृतिः, ब = बुद्धितत्त्वम्, फ = अहङ्कारः, प = मनस्तत्त्वम्, न = श्रोत्रेन्द्रियम्, ध = त्वगिन्द्रियम्, द = चक्षुरिन्द्रियम्, थ = रसनेन्द्रियम्, त = घ्राणेन्द्रियम् ।

एवं तवर्गस्य ज्ञानेन्द्रियवाचकत्वं समायाति । टवर्गः कर्मेन्द्रियवाचकः । चवर्गश्च शब्दादितन्मात्राणां वाचकः । आकाशादिपञ्चमहाभूताश्च कवर्गवाच्याः ।

योगिनीहृदयदीपिकायामपि केषाञ्चिद् वर्णानां निरुक्तिः कृता । तद्यथा—
अ = प्रकाशः, शिवः, वासुदेवः । ह = कला, विमर्शः ।

अयमर्थो योगिनीहृदयदीपिकायां चक्रसंकेतनिरूपणे दशमे, एकादशे च श्लोके दीपिकासेतुबन्धाख्यटीकायां निरुक्तः । तद्यथा—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोक्तः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥ इति ।

क = कामरूपपीठम्, पू = पूर्णगिरिपीठम्, जा = जालन्धरपीठम्, ओ = ओड्याणपीठम् ।

---

१. श्रीरामाज्ञापाण्डेयविरचितायां ३२तमे पृष्ठे एतद्विषयोंऽशो द्रष्टव्यः ।

उक्तञ्च उपर्युद्धृते ग्रन्थे चक्रसंकेतनिरूपणे—

भासनाद् विश्वरूपस्य स्वरूपे बाह्यतोऽपि च।
एताश्चतस्रः शक्त्यस्तु का पू जा ओ इति क्रमात् ॥ ४ ॥ इति।

ह=शिवः, सः=शक्तिः, क=ब्रह्म, हा=हन्तीति हा, ज्ञानवान्। ला=लातीति ला।

उपर्युद्धृतस्य ग्रन्थमन्त्रसंकेतनिरूपणे १९, २० श्लोकयोः दीपिकासेतुबन्धेऽयमर्थो निरुक्तः। किञ्च प्रत्नयुगे अकारादिवर्णानां न केवलमर्थः स्वीक्रियते स्म, अपि तु शिवादिवाचकानामकारादिवर्णानां समासोऽपि दृश्यते। तद्यथा—

हं च तत्सं च इति हंसः=परस्परं समापन्नशिवशक्तिरूपम्। ब्रह्मणि तु ककारस्यार्थः। हंसश्च तत्कश्च हंसकम्, हसकं हन्तीति हसकहा, तादृशब्रह्मविषयकज्ञानवान्, हन्तेर्गत्यर्थतया ये गत्यर्थास्ते ज्ञानार्थाः इत्यनुशासनेन तथोपपत्तेः। हसकहनं लाति स्वभिन्नं करोतीति हसकहला[1]।

ह=ब्रह्मा, स=विष्णुः, ल=पृथ्वी, क=भारती, र=रुद्राणी।

पुनश्च—

ह=व्योमबीजम्, क=वायुबीजम्, र=अग्निबीजम्, स=जलबीजम्। ल=पृथ्वीबीजम्।

इमान्येवाक्षराणि क्रमशः शब्दादिपञ्चगुणानां वाचकानि। उक्तञ्च योगिनीहृदयदीपिकायां मन्त्रसंकेतनिरूपणे—

तेषां कारणरूपेण स्थितं ध्वनिमयं परम्।
भवेद् गुणवतां बीजं गुणानामपि वाचकम् ॥ ३७ ॥

हकारादिवर्णा न केवलं व्योमादिबीजम्, अपि तु तद्वाचका अपीत्ययं विषयः उपर्युद्धृते श्लोके दीपिकासेतुबन्धटीकायां निरूपितः।

अक्षमालिकोपनिषदि प्रत्येकमकारादिध्वनेरर्थो निरुक्तः। तद्यथा—

अ=मृत्युञ्जयः, सर्वव्यापकः। आ=आकर्षणात्मकः।
इ=पुष्टिदः, अक्षोभकरः। ई=वाक्प्रसादकरः।
उ=सर्वबलप्रदः। ऊ=उच्चाटनकरः।
ऋ=संक्षोभकरः। ॠ=सम्मोहनकरः।
ऌ=विद्वेषणकरः। ॡ=मोहकरः।
ए=सर्ववश्यकरः। ऐ=शुद्धसात्त्विकः।

---

१. योगिनीहृदयदपिकायां मन्त्रसंकेतनिरूपणे ( १९, २०श्लोकयोः ) एतदीयोंऽशो द्रष्टव्यः।

ओ = अखिलवाङ्मयः । औ = सर्ववाङ्मयः ।
अं = गजादिवश्यकरः । अः = मृत्युनाशकरः ॥
क = सर्वविषहरः । ख = सर्वक्षोभकरः । ग = सर्वविघ्नशमनः ।
घ = सौभाग्यदः । ङ = सर्वविषनाशकः ।
च = अभिचारघ्नः । छ = भूतनाशकरः । ज = कृत्यादिनाशकरः ।
झ = भूतनाशकरः । ञ = मृत्युप्रशमनः ।
ट = सर्वव्याधिहरः । ठ = चन्द्ररूपः । ड = गरुडात्मकः ।
ढ=सर्वसम्पत्प्रदः । ण = सर्वसिद्धिप्रदः ।
त = धनधान्यादिसम्पत्प्रदः । थ = धर्मप्राप्तिकरः । द=पुष्टिवृद्धिकरः ।
ध = विषज्वरनिघ्नः । न = भुक्तिमुक्ति प्रदः ।
प = विषविघ्ननाशनः । फ = अणिमादिसिद्धिप्रदः । ब=सर्वदोषहरः ।
भ = भूतप्रशान्तिकरः । म = विद्वेषिमोहनकरः ॥
य = सर्वव्यापकः । पावनश्च, र = दाहकः ।
ल = विश्वम्भरः । व = सर्वप्यायनकरः ।
श = सर्वफलप्रदः । ष = धर्मार्थकामदः ।
स = सर्वकारणः । ह = सर्ववाङ्मयः ।
क्ष = परापरतत्त्वज्ञापकः । इति ।

इमेऽर्था अक्षमालिकोपनिषदि निर्दिष्टाः । 'अक्षम्' इति प्रत्याहारः । लोकमातृकाघटका अकारादिक्षान्ता वर्णा अत्र प्रत्याहृताः । किञ्चात्र अकारादिध्वनीनां येऽर्था निर्दिष्टास्ते वाच्यार्थास्तेषाम् अकाराद्यक्षराणां शक्तयः । अकारादिध्वनिषु मृत्युञ्जयत्वादिशक्तयोऽपि विद्यन्ते । पञ्चाशद्वर्णसंकेतविहीनस्य साधकस्य रौरवादिप्राप्तिरपि शास्त्रकृद्भिः प्रोक्ता । तद्यथा—

एतत्तत्त्वं विजानाति हरिर्ब्रह्मा पुरन्दरः ।
पञ्चाशद्वर्णसङ्केतं सावधानाऽवधारय ॥ ३ ॥
अकृत्वा साधको याति रौरवं नरकं व्रजेत् । इति ।

( कामधेनुतन्त्रम्, प० १६ )

अकारादिध्वनीनां कानिचित् सङ्केतानि ध्वनितत्त्वाख्ये प्रथमे परिच्छेदे निरूपितानि । तद्यथा—

शृणु तत्त्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोषमयं सदा ॥ १३ ॥
पञ्चदेवमयं वर्णं शक्तित्रयसमन्वितम् ।
निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्तिमान् ॥

विन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपिणीम् ॥ १४ ॥
( कामधेनुतन्त्रम्, प० १ )

इत्येवं रूपेण निरूप्य,

पञ्चाशद्वर्णसङ्केतं पञ्चाशत् तत्त्वमुत्तमम् ।
सर्वदेवमयं तत्त्वं सर्वज्ञानमयं तथा ॥ २ ॥

इत्यष्टमे पटले 'पञ्चाशद्वर्णसङ्केतम्' इत्युक्तम् । तेन कामधेनुतन्त्रस्य प्रथमपटलतः प्रारभ्य षष्ठपटलपर्यन्तं यत् प्रतिपादितम्, स एव वर्णसङ्केतः ।

**आद्यक्षराणि संगृह्य निरुक्तिः**

अकारादिध्वनीनामर्थवत्त्वादेव मद-निद्रा-राका-दिशा-शब्दानाम् आद्यक्षराणि संगृह्य निरुक्तिः क्रियते । अमरभाषायां प्रचलिता यावन्तः शब्दनिरुक्तिप्रकारास्तेषां मध्येऽयं निरुक्तिप्रकारोऽतीव कौतूहलमादधाति । उशरटादिशब्दानां प्रत्येकमक्षरं पदान्तराणामाद्यक्षराणि संगृह्य निरुच्यते । तद्यथा उशरटा—

उमया[1] सहितो रुद्रः शङ्करः शूलपाणिभृत् ।
रक्षतु त्वां महीपालः, टङ्कारबलगर्वितः ॥

अप्रशिखः[2]—

अनेन तव पुत्रेण प्रकर्षेण वनान्तरे ।
शिखामादाय हस्तेन, खड्गेन निहतं शिरः ॥

अत्र अप्रशिखशब्दघटकेषु अकारादिवर्णैः क्रमशः 'अनेन, प्रकर्षेण, शिखा, खड्गः', इत्याद्यर्थानां ग्रहणं बोद्धव्यम् । एतच्च मदुक्तमुपर्युद्धृतश्लोकतो ज्ञेयम् ।

कायस्थः—

काकाल्लौल्यं यमात् क्रौर्यं स्थपतेर्दृढघातताम् ।
आद्यक्षराणि संगृह्य कायस्थः केन निर्मितः ॥

पुरोहितः —

पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च ।
आद्यक्षराणि संगृह्य वेधाश्चक्रे पुरोहितम् ॥ इति ।

शब्दानां निरुक्तेरियं रीतिर्न केवलमाह्लादजननप्रयोजनवती, अपि तु निरुक्तेरितिहासे काञ्चन सुप्रसिद्धां परम्परामपि आवहति । कविशिरोमणिः कालिदासो वितर्कवाचिनः उ-पदात्, प्रतिषेधीयार्थान्मिश्च उमाशब्दस्य निरुक्तिं प्रदर्शितवान् । तद्यथा —

---

१, २. विश्वशम्भुप्रणीता एकाक्षरनाममालिका ।

उ वितर्केऽपि वचनावसरेऽव्ययम् ।
मा निपातो निषेधकः ॥

अमरकोषस्य प्रथमकाण्डे स्वर्गवर्गे तु 'उमा कात्यानी' (श्लो० ३६) इत्यत्र रसालाख्यटीकायाम् उमाशब्दस्य ओर्महेशस्य मा लक्ष्मीरिति व्याख्यानं कृतम् ।

भूपः, नारी, निद्रा, आगमः, गुरुः, आचार्यः, वेदः, सम्प्रदायः, पादुका, पुराणम्, इतिहासः—इत्येवमनेके शब्दाः सन्ति, येषां प्रत्येकमक्षराणाम् अर्था व्याख्याताः । तद्यथा भूपशब्दः—

भू=भूखण्डमात्रविभवः । प=परसेवकः ॥

यो भूखण्डमात्रविभवः, यश्च परसेवकः, स भूपपदव्यवहार्यः । उक्तञ्च भावप्रकाशनकारेण शारदातनयेन—

यः कुन्तपाणिरिह भूप इति प्रसिद्धो,
भूखण्डमात्रविभवः, परसेवकश्च ॥ इति ।

साहित्यविलासिना केनचित् कविना 'नारी' शब्दस्य नृणाति, नयति स्ववशं पुरुषम्' इत्येवं व्याख्यानं कृतम् । भावप्रकाशनकारः शारदातनयस्तु नान्दी-रतिपदयोराद्यक्षराणि संगृह्य निरुक्तिं कृतवान् । तद्यथा—

नान्दीपदानि रतिनाटकविभ्रमाणा-
माद्यक्षराणि परमाण्वथवा स्मरस्य ।
दष्टेऽधरे प्रणयिना विधुताग्रपाणेः,
सीत्कारशुष्करुदितानि जयन्ति नार्याः ॥ इति ।

एवमेव भावप्रकाशनकारो मदशब्दस्य निर्वचनं मानार्थकस्य मकारात् दानशब्दस्य च दकारात्, निद्राशब्दस्य च 'निमीलन्ति' क्रियायाः 'नेः' द्राक्पदस्य च द्रा, त्रपाशब्दस्य 'त्रयं पदस्य त्रात्, पातिक्रियायाश्च पः प्रभृत्याद्यक्षराभ्यां कृतां निरुक्तिं परम्परानुमोदितां मन्यते । उक्तञ्च भावप्रकाशने—

मदः—

मशब्दार्थो मतिर्मानस्तद्दानात् खण्डनान्मदः ।

निद्रा—

इन्द्रियाण्येव निमीलन्ति द्रागेव युगपद् यतः ।
तस्मान्निद्रेति कविभिः कथ्यते भावकोविदः ॥

त्रपा—

भूतं भवद् भविष्यञ्च त्रयं पातीति वै त्रपा ।

पूर्वमत्र प्रमाणत्वेन समुद्धृताः अपरे आगमादिशब्दाः १९७४ विक्रमाब्दे

कृते हंसमिठुशुक्लस्य हंसविलासनाम्नि तन्त्रे प्रत्येकमक्षराणामर्था निरुक्ताः सन्ति । तद्यथा--

आगमः—

आचारपदस्याकारात्, गतिपदस्य गकारात्, महावाक्यपदस्य च मकान्निरुक्तः कमपि अभिनवमेवार्थं गमयति । उक्तञ्च--

आचारकथनाद् दिव्यगतिप्राप्तिविधानतः ।
महावाक्यार्थकथनाद् आगमः कथितः प्रिये ॥

गुरुः--

एवं गुरुशब्दश्च एकाक्षरगुरुशब्दाभ्यां निरुक्तः सन् अन्धकारनिरोधिन्यर्थे पर्यवसानं दधाति । उक्तञ्च--

गुकारस्त्वन्धकारोऽपि रुकारस्तन्निरोधकः[1] ।
अन्धकारनिरोधित्वाद् गुरुरित्यभिधीयते ॥

अत्र गृणाति उपदिशतीतीयं निरुक्तिर्न गृह्यते ।

आचार्यः—

आचार्य-शब्दस्य प्रत्येकमक्षरं संगृह्य निरुक्तिः क्रियते । आचार्य-शब्दघटकेय आकारः स आम्नायार्थकः, चकाररेफयोश्च चराचरावर्थौ, यकारश्च यमार्थवाचकः । उक्तञ्च—

आम्नायतत्त्वविज्ञानाच्चराचरसमानतः ।
यमादियोगयुक्तत्वाद् आचार्य इति कथ्यते[2] ॥

प्रत्येकक्षराणामर्थकरणाद् अत्र निरुक्तस्य आचार्यशब्दस्य चयनार्थकचित्-धातोः आचिनोति अर्थात् शास्त्राणि अथवा आचारं ग्राहयति, शिष्यबुद्धिवृद्धं करोतीत्यादिनिरुक्तीनां स्मृतिकाराणां स्मृतैरर्थैः सह आलोचनया नवत्वं लक्ष्यते । उक्तञ्च मनुस्मृतौ—

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
साङ्गं सरहस्यञ्च तमाचार्यं विदुर्बुधाः ॥ (मनु० २।१४० )

वेदः—

किञ्च, प्रत्यक्षेण अनुमानाद्वा ज्ञातुमशक्यस्योपायस्य बोधको वेदशब्दोऽपि वेदितापदस्य वेकारम्, दर्शनपदस्य च दकारं संगृह्य निरुक्तः ।

वेदितान् सकलाभीष्टसद्धर्मार्थनिकर्षणात् ।
दर्शनानां प्रमाणत्वाद् वेद इत्यभिधीयते ॥

---

१. २–हंसमिठुविरचितहंसविलासः, षष्ठ उल्लासः ।

सम्प्रदायः—

एवं सम्प्रदायशब्दघटकस्य संवर्णस्य संसारः, प्रवर्णस्य च प्रसादः, 'दा' इत्यस्य 'दानम्', 'य' इत्यस्य 'यशः' इत्यर्थो निरुक्तः। उक्तञ्च—

संसारसारभूतत्वात् प्रसादानन्ददानतः।
यशःसौभाग्यकरणात् सम्प्रदाय इति स्मृतः ॥ १ ॥

पादुका—

पादुका-शब्दो व्याकरणप्रक्रियया गत्यर्थकात् पदधातोः 'पद्यतेऽनयेति पादुः, पादुरेव पादुका' इति निरुच्यते। अक्षरार्थप्रक्रियादृशा तु पालनात्, दुरितच्छेदात्, कामितार्थप्रबन्धात् प्रभृतिपदेभ्य आद्यक्षरैः निरुक्तः। उक्तञ्च—

पालनाद् दुरितच्छेदात् कामितार्थप्रबन्धनात्।
पादुकेति समाख्याता मम तत्त्वकुलेश्वरि ॥ १ ॥
( हंसमिठुकृतो हंसविलासः, २१ उल्लासः )

किन्तु नेमा निरुक्तयः सर्वथाऽपि ग्रन्थकर्तुरेव बुद्धिप्रभाप्रमाणभूता, अपि तु ग्रन्थान्तरीया। अयं विषयः पुराणेतिहासशब्दयोर्निर्वचनावसरे श्रीकुलार्णवागमरहस्येत्याख्यस्य कस्यचिद् ग्रन्थस्योल्लेखात् प्रतीयते। तत्र पुराणेतिहासशब्दयोः निम्नाङ्कितरीत्या निरुक्तिः कृता। पुराणशब्दघटकस्य पुवर्णस्य पुण्यपापादिकथनम्, रावर्णस्य च रागद्वेषादिवारणम्, नशब्दस्य च नन्दनमर्थाः कृताः। इतिहासशब्दश्च इष्टशब्दाद् इकारम्, तिमिरज्ञाननाशनशब्दस्य तिवर्णम्, हरणशब्दस्य हकारम्, सर्वदुःखपदस्य सकारम् आद्यक्षरं संगृह्य निरुक्तिः कृता। उक्तञ्च—

पुण्यपापादिकथनाद् रागद्वेषादिवारणात्।
नन्दनात् सर्ववर्णानां पुराणमिति कथ्यते ॥ १ ॥
इष्टधर्मकलात्मत्वात् तिमिराज्ञाननाशनात्।
हरणात् सर्वदुःखानामितिहास इति स्मृतः ॥ २ ॥
( हंसमिठुविरचितहंसविलासः, उल्लासः ५ )

**लोकमातृकाघटकध्वनीनामर्थाः**

अत्र कोशानुसारेण प्रत्येकमक्षराणामर्थाः समुपस्थाप्यन्ते। एतदनुसारं प्रत्येकं रामादिशब्दानां प्रत्यक्षरं व्याख्यानं कर्तुं शक्यते। तद्यथा—

'अ'

अः स्यादभावे स्वल्पार्थे निषेधे च नञर्थकम्।
अव्ययं चानुकम्पायामिदमर्थे त्वनव्ययम् ॥ ४ ॥

अः स्याद् विष्णौ विरिञ्चे च प्रथमे च स्वरे पुमान् ॥

'आ'

आः विश्वे स्यात् पुमाना तु स्त्रियां लक्ष्म्यां प्रकीर्तिता ।
आ प्रगृह्य स्मृतौ वाक्येऽनुकम्पायां समुच्चये ।

आ = शिवः, लक्ष्मीः प्रगृह्यम्, अनुकम्पा ॥

'इ'

इः खेदे परुषोक्तौ चापाकृतावनुकम्पने ।
इः पुमाँस्तु मतः कामे ··· ··· ··· ··· ॥

इ = खेदः, कटुवचनम्, अपाकरणम्, कामः ।

'ई'

ई विषादेऽनुकम्पायां लक्ष्म्यां पुनरव्ययम् ।

ई = विषादः, अनुकम्पा, लक्ष्मीः ॥

'उ'

उः सम्बोधनरोषोक्त्योरनुकम्पानियोगयोः ।
पदस्य पूरणे पादपूरणे चाव्ययं स्मृतम् ॥ ६८९ ॥
उः पुमान् उच्यते विष्णौ शिवेऽप्योष्ठचस्वरे तथा ।
उक्तास्त्र्येकाक्षरच्छन्दस्युक्तं स्याद् भाषिते त्रिषु ॥ ६९० ॥

'ऊ'

ऊः वाक्यारम्भरक्षानुकम्पास्वव्ययमुच्यते ।
ऊः स्त्रियां रक्षणे तृप्तौ प्रीताववगतौ गतौ ॥ ८५६ ॥

'ऋ'

ऋशब्दः स्त्र्यादितौ स्वर्गेऽव्ययं वाक्यगर्हयोः ।
ऋक् स्त्रियां पद्यमात्रेऽपि भारत्यामपि कीर्तिता ॥ ८७६ ॥

'ॠ'

ॠर्वाक्योपक्रमत्राणे वक्षःस्मृत्योस्त्वनव्ययम् ।

'ऌ'

ऌकारो देवतास्वायां भुवि क्रुद्धे च कीर्तितः ।

'ॡ'

ॡकारो देवनार्यां स्याद् आत्मन्यपि च मातरि ।
देवाम्बायां दनौ चापि भैरवे दनुजे गतौ ॥

'ए'

ए स्मृतावप्यसूयानुकम्पामन्त्रणाहुतिषु ।

'ऐ'

ऐ शब्दो दृश्यते हूतौ स्मृत्यामन्त्रणयोरपि ।

'ओ'

ओः सम्बोधने आह्वाने सारणे चानुकम्पने ।

'औ'

औस्त्वेतत् कथितं हूतो तथा सम्बोधनेऽव्ययम् ।
स्त्री तु विश्वम्भरायां स्यान्निःस्वने पुंसि कीर्तितः ॥

अत्र वाङ्मयार्णवाख्यकोशे 'अं अः' इत्यनयोरर्थो न निरूपितः; अनुस्वार-विसर्गयोः मकारे हकारे च अन्तर्भावात् ।

'क'

को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।
किं सर्वनाम्नः क इति रूपं प्रश्नादिवाचकम् ॥

पतत्त्रिपार्थिवे पुंसि कामग्रन्थे च चक्रिणि ।
मयूरेऽग्नौ नगे देहे शब्दबुद्धिमनःस्वपि ।
कं तु क्लीबं सुखशिरःसलिलेषु प्रकीर्तितम् ॥

'ख'

खमिन्द्रिये पुरे क्षेत्रे शून्ये विन्दौ विहायसि ।
सम्वेदने देवलोके नक्षत्रे छिद्रगेहयोः ॥

अभ्रके ब्रह्मणि क्लीं स्यात् खा तु कूपे भवेत् स्त्रियाम् ॥

'ग'

गः पुंसि गरुडे न स्त्री गान्धारगुरुवर्णयोः ।
त्र्युत्तरस्थो गन्तृमात्रे न ना गतिप्रभेदके ॥

'घ'

घस्तन्मात्रे निश्चयेऽपि परमार्थविशेषयोः ।
घाव्ययं निश्चये तावत्यमृषार्थविशेषयोः ॥

घ उत्तरस्थास्त्रिर्हन्तर्यथ घा ताडने तथा ।
किङ्किण्यां चैव घण्टायां तथा स्याद् घर्घरारवे ॥

'ङ'

ङः पुमान् विषये ख्यातः स्पृहायां विषयस्य च ॥

'च'

चश्चण्डीशे पुमानुक्तः कच्छपे चन्द्रचौरयोः ।

'छ'

छो निर्मलेऽन्यवच्छा तु स्त्रियां छादन इष्यते ।

'ज'

जो ना मृत्युञ्जये ताते जन्मन्यपि जनार्दने ।
जवे भागे विषे दीप्तौ पिशाचे देवरे स्त्रियाम् ॥
अपि मध्यगुरौ जातु जातास्त्रिस्तूत्तरस्थितिः ।
जाते जेतरि भुक्ते च रहस्विनि तथा मतः ॥

'झ'

झो झण्डीशे सुरगुरौ दैत्यराजे ध्वनावपि ।
झटो झटितरि द्वे तु शूद्रामैत्रेयजे नरे ॥

'ञ'

ञः स्याद्वै वलीवर्दे शुके वामगतावपि ।

'ट'

टः पुमान् वामने पादे निःस्वनेऽपि पुमान् मतः ।

'ठ'

ठो मण्डले चन्द्रबिम्बे शून्ये चालोकगोचरे ॥

'ड'

डः पुमान् वाडवाग्नौ स्याड् डा डाकिन्यां स्त्रियां मतः ।
डिङ्गस्तु भवेत् क्षेप्ये गङ्गरेऽप्यधेयवत् ॥

'ढ'

ढो ढक्कायां पुमानुक्तः शुनि पुच्छे तथा शुनः ।

'ण'

णः पुमान् बिन्दुदेवे स्याद् भूषणे गुणवर्जिते ।
पानीयविलये पीते केचिदूचुर्विपश्चितः ॥

'त'

तश्चौराभृतपुच्छेषु क्रोडे म्लेच्छे च कुत्रचित् ।
पुमांस्तु तरणे पुण्ये कथितः शब्दवेदिभिः ॥

'थ'

थं रक्षणे मङ्गले च साध्वसे च नपुंसकम् ।
शिलोच्चये तु थः पुंसि क्वचिच्च भयरक्षके ॥

'द'

दः पुमानचले दन्ते स्त्रियां शोधनदानयोः ।
छेदे सन्तापरक्षासु पुमान् दो दातरि स्मृतः ॥

'ध'

धो धर्मब्रह्मधनदधैवतेष्वथ नब्धने ।
धो धा च ब्रह्मणि ख्यातो ना धा त्रिर्धारके भवेत् ॥

'न'

नः पुमान् सुजते बन्धे द्विरण्डे प्रस्तुतेऽपि च ।

'प'

पो ना वाताण्डपूतेषु पाने पातरि कीर्तितः ।
स्त्रियां तु रक्षणे पाने द्यूते पूरितके च सः ॥

'फ'

फो यज्ञसाधने स्फाने झञ्झावाते च पुंस्ययम् ।
फं रूक्षोक्तो च फूत्कारे तथा निष्फलभाषणे ॥

'ब'

बः पुमान् वरुणे सिन्धौ भगे तोषे गतेऽपि च ।
गन्धनतन्तुसन्ताने पुंस्येव वपने स्मृतः ॥

'भ'

भं नक्षत्रे च मेषादौ संख्यायां सप्तविंशतौ ।
भस्तु भ्रान्तो तथा शुक्रग्रहेऽप्यादिगुरौ गणे ॥
संज्ञान्तरे पाणिनेश्च भा तु भासि स्त्रियां मता ।

'म'

मो मध्यमस्वरे काले शिवेन्द्रब्रह्मविष्णुषु ।
यमे विषे मन्त्रभेदे पुमाँश्छन्दोगणान्तरे ॥

मा प्रमामातृमानेषु ज्ञानबन्धनमृत्युषु ।
लक्ष्म्यां कट्यां स्त्रियां मं तु धनेऽम्बुनि नपुंसकम् ॥

'य'

यो ना वायौ यानयोगयशोयमनयातृषु ।
या यात्राधूमितत्यागसमज्ञायोगवारणे ॥
आप्तो रथादियानेऽपि स्त्रीयोनावपि च स्त्रियाम् ॥

'र'

रो रेफे लघुमध्ये र प्रत्याहारे रलात्मके ।
प्रेमेच्छाग्निजवे तीक्ष्णदातृधातृषु तु त्रिषु ॥
रा दाने विभ्रमे स्वर्णे रा गतौ रं मतं द्युतौ ॥

'ल'

ला स्त्रीलिङ्गं हि दाने स्याद् ग्रहणेऽपि ··· ।
लं पृथ्व्या विले ···· ··· ···· ····· ··· ··· निगद्यते ॥

"व"

वः सान्त्वने च वाते च वरुणे वन्दने शुभे ।
मन्त्रणे वसतौ वाहौ वस्त्रेऽपि वरुणालये ॥
शार्दूले चैव शालूके बलवत्यपि पुंसि च ।
वं बीजे वरुणस्य स्यादिवार्थे तु तदव्ययम् ॥

'श'

शमव्ययं वा क्लीबं वा कल्याणेऽथ पुमान् मतः ।
शास्त्रे शिवेऽप्युत्तरस्थस्त्वयं शयितरि त्रिषु ॥

'ष'

षकारसकारयोर्नास्ति भेदः ।

'स'

सो विष्णावीश्वरे सा तु लक्ष्म्यां गौर्यामपीष्यते ।
संयति युद्धेऽग्निचित्यायां द्वादशस्विष्टकासु च ॥

'ह'

हः पादपूर्तिसम्बुद्धिनियोगक्षेपनिग्रहे ।
निन्दायां च प्रसिद्धौ चाव्ययं सक्रोधवारणे ॥

अथ पुंसि शिवे शून्ये व्योम्नि स्वर्गेऽप्सु धारणे ।
चन्द्रेऽपि पापहरणे त्रिषु स्याद् रक्तशुष्कयोः ॥
तथोत्तरपदस्थोऽयं घातके त्याजकेऽपि च ।
हा स्त्री वीणासुरतयोर्हं ब्रह्मण्यायुधे मुदि ॥
रत्नज्योतिषि चाह्वाने भवेद्वीणाध्वनावपि ।
ह्मव्ययं मतं क्रोधे विनयामन्त्रणेऽपि च ॥ इति ।

अत्र एकस्यैव वर्णस्य बह्वर्थवाचकता दृश्यते । तस्माद्यथा अनेकार्थवाचकहर्यादिशब्दानां विषये शब्दानामनेकार्थाः–इत्युक्तिश्चरितार्था, तथैव वर्णविषयेऽपि बोद्धव्यम् ।

अकारादिध्वनीनां वाच्यार्थशक्तिगुणेषु ज्ञातेषु रामादिशब्दानां ज्ञानं सम्यक्तया सञ्जायते । यथा फूत्कारत्व-चुल्हचुपरिधारणत्वादिक्रियाणां समाहारः पचिरेका क्रिया उच्यते, एवं रामादिशब्दघटकानां रकारादिध्वनीनां ये वाच्यार्थाः शक्तयो गुणाश्च, तेषां समाहारो रामशब्दवाच्यार्थो बोद्धव्यः । यथा कश्चिद् विवेकशीलो वैयाकरणादिदार्शनिक एव फूत्कारादिसमाहाररूपं पचिक्रियास्वरूपं जानाति, अन्यश्च लोकः तण्डुलादिविक्लित्तिरूपमेवार्थं जानाति । लोके तस्यैवार्थस्य च प्रसिद्धिः । एवं शम्भ्वादिशब्दानामर्थं कश्चिदेव जानाति । लोके रामादिशब्दानां दशरथापत्यादिवाच्यार्थे सङ्केतः प्रसिद्धिमागतः । तमेवार्थञ्च लोको गृह्णाति । अत्रोदाहरणार्थं केषाञ्चिच्छब्दानामर्थः प्रस्तूयते । तद्यथा—

भूपेन्द्रपतिः—

प्रत्येकमक्षराणां शक्तिः ।

भ = भूतप्रशान्तिकरत्वं भयानकत्वं च इति द्वे शक्ती ।

ऊ = उच्चाटनकरत्वं दुःसहत्वं „ „ ।

प = विषविघ्नविनाशनत्वम् इति इत्येका शक्तिः ।

ए = सर्ववश्यकरत्वम् „ „ „

न = भुक्तिमुक्तिप्रदत्वं शान्तत्वं इति द्वे शक्ती ।

द = पुष्टिवृद्धिकरत्व-प्रियदर्शनता इति द्वे „ ।

र = दाहकरत्वम् „ इति द्वे „ ।

इमाः शक्तयो भूपेन्द्रपतिशब्दे तिष्ठन्ति । एतेषां शक्तीनां समाहार एव भूपेन्द्रपतेः शक्तिस्वरूपम् । अयं विषयोऽक्षमालिकोपनिषदमनुसृत्य निरूपितः ।

अर्थः

भ = प्रकाशः । ऊ = अनुकम्पा, तृप्तिः । प = रक्षा, पाता, संरक्षकः ।

ए = आमन्त्रणा, आहुतिः । न = सुगतम्, बन्धः, प्रस्तुतम् ।

द = धर्म-घनदः । र = अग्निः, रप्रत्याहारः पाणिनीयव्याकरणे ।

अयमर्थो वाङ्मयार्णवानुसारेण निरूपितः । तत्र प्रत्येकमक्षराणामर्था निरूपिताः ।

गुणः

भ = पीतवर्णः ऊ = श्वेतः ।

प = पीतवर्णः ए = श्वेतः ।

न द र = पीतवर्णाः ।

श्वेतत्वपीतत्वे च इति द्वे गुणे । अयमर्थोऽक्षमालिकोपनिषदनुसारेण निरूपितः । तत्र ये स्वरास्ते धवलाः, ये स्पर्शास्ते पीताः, ये परास्ते रक्ताः— इत्युक्तम् । एवमन्येषामपि शब्दानां विषये समूहनीयमिति ॥

॥ इति शम् ॥

# अकारादिध्वनीनां परिवर्तनम्

## ( अष्टमः परिच्छेदः )

ध्वनिपरिवर्तनस्य तात्पर्यम्

भाषा सर्वदा एकरूपेण नावतिष्ठते, अकारादिध्वनीनामनित्यत्वात्, परिवर्तनशीलत्वाच्च; अथ च भाषा सर्वदा एकरूपेण एव तिष्ठति, शब्दानां नित्यत्वात् इति मतद्वयमस्य परिच्छेदस्य आरम्भणहेतुभूतम्। ध्वनिविषये भाषाविज्ञानविदुषां मतानि[1] शब्दानित्यत्ववादिनां न्यायवैशेषिकादीनां प्राचीनंसिद्धान्तमनुसरति। अत्र पक्षे अकारादिध्वनीनामनित्यत्वमेव तेषां परिवर्तनहेतुभूतम्। ध्वनिविषयमवलम्ब्य अनित्यत्ववादस्य चर्चा पातञ्जलमहाभाष्ये प्रसङ्गानुसारेण क्वचित् कृता। तद्यथा—

'यावद् गकारे वाग्वर्तते न तावद् औकारे इति येनैव यत्नेन एको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यं यत्नं समुपादाय द्वितीयः प्रवर्तते'। इत्येवं 'परः सन्निकर्षः संहिता' (१।४।१०९) इति पाणिनीये सूत्रे भगवता पतञ्जलिना प्रोक्तम्। किञ्च, अकारादिध्वनीनामनित्यत्वं स्वीकृत्य नागेशो वैयाकरणलघुसिद्धान्तमञ्जूषायां शक्त्याश्रयनिरूपणस्थले वर्णपदवाक्यादीनां बाह्यस्फोटानामवाचकत्वं व्याख्याय प्रणवात्मकस्य अन्तर्नादरूपस्य आभ्यन्तरस्फोटस्य वाचकत्वमङ्गीकृतवान्।

वस्तुतस्तु "यावद्गकारे वाग्वर्तते न तावद् औकारे"— इत्युपर्युद्धृतं भाष्यं न शब्दानित्यत्वप्रतिपादनपरम्, प्रत्युत शब्दघटकवर्णोच्चारणे जिह्वादिव्यापाराणामेवानित्यत्वप्रतिपादनपरम्। तथा "यावद्गकारे वाग्वर्तते" इत्यत्र वागित्यस्य वागिन्द्रियमित्यर्थः। यावत्कालं वागिन्द्रिये गोशब्दघटकस्य गकारस्योच्चारणं वर्तते प्रयत्नं कुरुते न तावत्कालम् औकारस्योच्चारणे शब्दघटकवर्णानामभिव्यक्तौ प्रत्येकं वर्णा वागिन्द्रियेण युगपदेव न अभिव्यज्यन्ते, अपितु क्रमशः। तदित्थमिदं भाष्यं न शब्दानित्यत्वप्रतिपादनपरमिति सुधियो विभावयन्तु। अन्यथा शब्दनित्यत्वप्रतिपादनपरकभाष्यविरोधः स्यात्।

अपरत्र पक्षे तु वैयाकरणाः मीमांसका भौतिकशास्त्रनिपुणाः, आधुनिकविद्वांसश्च अकारादिध्वनीनां नित्यत्वमङ्गीकुर्वन्ति। नूतना भौतिकशास्त्रिणो ध्वनीनां नित्यत्वमाविष्कृत्य तत्सिद्धान्तं स्वीकुर्वन्तीत्ययं विषयोऽत्रैव ग्रन्थे 'ध्वनि-

---

1. "Language does not stay the same"--Rabert A Hall J. R. Linguistitc and Your Language.

सञ्चारविधिः' इत्यस्मिन् परिच्छेदे विशदीकृतः। पातञ्जलमहाभाष्ये अकारादिध्वनीनां नित्यत्वस्य चर्चा बहुशो दृश्यते। तद् यथा—'स्थानिवदादेशोऽनल्विधौ' (१।१।५६) इत्यत्र पाणिनिसूत्रे 'अनित्यत्वविज्ञानं तु तस्माद् उपसंख्यानम्' इति वार्त्तिकमुद्धृत्य—

"अनित्यत्वविज्ञानं तु भवति। नित्याः शब्दाः नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः। तत्र स एवायं विकृतश्च इत्येतन्नित्येषु नोपपद्यते" इति।

अत्रैवोद्धृते सूत्रे च "अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात्" इति वार्त्तिके—

"स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते। किं कारणम्? नित्यत्वात्। स्थानी हि नाम यो भूत्वा न भवति। आदेशो हि नाम यो भूत्वा भवति। एतच्च नित्येषु शब्देषु नोपपद्यते—यत्सतो नाम विनाशः स्यात्, असतो वा प्रादुर्भावः" इत्युक्तम्।

एवमत्र शब्दानां नित्यत्वं स्वीकृत्य तेषामपरिवर्तनत्वम्, अपरिवर्तनाच्च एकस्य शब्दस्य शब्दान्तररूपेण आदेशासम्भवः। एवं 'स्थानिवदादेशोऽनल्विधौ' इति सूत्राद् अन्यत्रापि सूत्रे ध्वनीनां नित्यत्वं स्वीकृतम्। तद् यथा—

अदर्शनं लोपः (पा० सू० १।१।६०) लोपसंज्ञायामर्थसतोरुक्तम् (वार्त्तिकम्)

अर्थस्य तावद् उक्तम्—इतिकरणेऽर्थनिर्देशार्थं इति। सतोऽप्युक्तम्—'सिद्धं तु नित्यशब्दत्वात्'। इति नित्याः शब्दाः नित्येषु शब्देषु सतो दर्शनस्य संज्ञा क्रियते, न संज्ञया अदर्शनं भाव्यते।"

अत्र शब्दानां नित्यत्वपक्षे कथं तेषां लोपः स्यादित्याशङ्क्य "यथा विद्यमानोऽपि घटः प्राचीरादिव्यवधानाद् न दृष्टिगोचरीभवति, अदर्शनाच्च तस्य घटस्य नाशो न स्वीक्रियते। किन्तु लोपः; एवं नित्यो विद्यमानोऽपि शब्दः केनचिद् व्यवधानेन विहितत्वान्न श्रुतिगोचरीभवति। श्रुतिगोचराभावाच्च न तस्य नाशः, किन्तु लोप एव स्वीकर्तव्यः।

"भूवादयो धातवः (१।३।१ पा० सू०) सिद्धं तु नित्यशब्दत्वात्। अनाश्रित्य भाववचनत्वं प्रत्यय उत्पद्यते।" इति।

अयं भावः—'पच्' इत्यादिधातुभ्यस्तिबादिप्रत्यये कृते सति भाववचनत्वं समायाति। भाववचनाख्यायां सत्यां 'पच' इत्यादयो धातुसंज्ञां लभन्ते, धातुसंज्ञायाश्च प्रत्ययः—इत्येवमन्योऽन्याश्रयः प्राप्नोति; अन्योन्याश्रितञ्च कार्यं न क्रियते शास्त्रकारैः? इत्येवमाशङ्क्य, शब्दस्य नित्यत्वमाश्रित्य अन्योन्याश्रयदोषस्य

परिहारः कृतः। पचतीत्यादयः शब्दाः नित्याः। नात्र प्रकृतिप्रत्ययविभागः। एवञ्चात्र पक्षे ध्वनिपरिवर्तनं न सङ्घटते। अत्र पक्षे आदेशलोपागमविपर्ययादि-कार्याणि बुद्धिविपरिणामादेव साध्यानि। अत्र शब्दनित्यत्वपक्षे ज्ञान-विपरिणाम एव ध्वनिपरिवर्तनस्य तात्पर्यं सन्निहितम्। 'अस्तेर्भूः' 'सुद्ध्युपास्यः' इत्याद्या-देशस्थलेषु यदर्थबोधनाय अस इत्यस्योच्चारणप्रसङ्गस्तदर्थबोधनाय 'भू' इत्यस्यो-च्चारणप्रसङ्गः। अतएव भाष्यकृता सर्वत्र अतिदेशस्थलेऽपि आनुमानिकस्थान्या-देशभावपरिकल्पना कृता। एतत्पोषकमेव वाक्यम् अर्थवत्येव स्थान्यादेशभावे विश्रान्तिः। अस्तिशब्दस्योच्चारणप्रसङ्गे 'भू' शब्दस्योच्चरणं कर्तव्यम्। अस्ति-शब्दो नित्यः, भूशब्दश्चापि। अस्तिशब्द एव भूरूपेण, यद्वा सुधी उपास्यः सुद्ध्युपास्य; इत्यादिषु ईकार एव यकाररूपेण न परिवर्तते, अपि तु यत्र भूशब्दस्य, यद्वा यवर्णस्य विवक्षा विद्यते, तत्र 'अस्ति'-शब्दम्, 'ई' वर्णञ्च अनुच्चार्य 'भू'शब्दं यवर्णञ्च उच्चारयेत्। यद्वा, यत्र अस्तिबुद्धिः यद्वा ईबुद्धिः प्रसक्ता, तत्र भू-यकारयोश्च बुद्धिः कर्तव्या। उक्तञ्चैतत्सर्वं 'स्थानिवदादेशोऽनल्विधौ' सूत्रे। तद्यथा—

"भूतपूर्वे चापि स्थानशब्दो वर्तते। कथम् ? बुद्ध्या।

तद् यथा कश्चित् कस्मैचिद् उपदिशति—'प्राचीनं ग्रामाद् आम्राः' इति, तस्य सर्वत्र आम्रबुद्धिः प्रसक्ता। ततः पश्चाद् आह—'ये क्षीरिणोऽवरोहतः पृथुपर्णास्ते न्यग्रोधाः' इति। स तत्र आम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते। स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधाँश्चोपाधीयमानान्। नित्या एव स्वस्मिन् विषये आम्राः, नित्याश्च न्यग्रोधाः। बुद्धिस्त्वस्य विपरिणम्यते। एवमिहापि अस्तिरस्माय विशेषेणोपदिष्टः। तस्य सर्वत्रास्ति बुद्धिः प्रसक्ता। स 'अस्तेर्भुः' इत्यनेनास्तिबुद्ध्या भवति, बुद्धिं प्रतिपद्यते। स ततः पश्यति-बुद्ध्या अस्ति चापकृष्यमाणं भवतिञ्चोपाधीयमानम्, नित्य एव च स्वस्मिन् विषयेऽस्तिर्नित्यो भवतिश्च, बुद्धिस्त्वस्य विपरिणमते।" इति।

तदित्थं वैदिकलौकिकभेदेन भिन्ना संस्कृतभाषा, अथ च पालिपाक्रितापभ्रंशादयो भारतीयाश्च भाषाः, आंग्ल-जर्मन-रूस-ग्रीकाद्याश्च याः भाषाः तासु भाषासु च ये शब्दास्ते सर्वे नित्याः। भाषान्तरस्य चाभिव्यक्तिर्व्यापारादिमाध्यमेन विभिन्नदेशवास्तव्यैः लोकैः सह संसर्गवशाद् विभिन्नभाषाघटकशब्दमिश्रणा-ज्जायते। अयं विषयः "शब्दतत्त्वं ( तत्सम्बन्धि ) आधुनिकं विज्ञानञ्च" इत्याख्येऽस्मत्कृते ग्रन्थे विशदरूपेण व्याख्यातः। तत्रैव एतदीयोंऽशो द्रष्टव्यः। कर्णशब्दस्यो-च्चारणे कर्तव्ये जनपदेषु 'कान' इति शब्दः प्रयुक्तः। यथा कर्णशब्दो नित्यः, तथा 'कान' शब्दोऽपि। यथा 'सुधीउपास्यः' इत्युच्चारणप्रसङ्गे 'सुद्ध्युपास्यः' इत्यु-

च्चारणं क्रियते। 'सुधी उपास्यः, सुद्ध्युपास्यः' इति शब्दद्वयं नित्यम्। तथैव 'कर्ण' 'कान', 'घट' 'घड़ा' इति शब्दविषयेऽपि समूहनीयम्।

एवञ्च 'गौः', 'गावी' इति साध्वसाधूभयोः शब्दयोर्नित्यत्वस्वीकारे 'अयमस्य शब्दस्यापभ्रंशः' इत्येवं व्यवहारस्तु समानार्थवाचकत्वं ध्वनिसादृश्यञ्च बुद्ध्या विषयीकृत्य प्रयुज्यते। 'गावी' इत्यादीनामपभ्रंशत्वव्यवहारस्तु अपभ्रष्टदन्तैः विगुणपुरुषैरसामर्थ्याद् उच्चरितत्वाद् पाणिनीयादिलक्षणशास्त्राननुमोदितत्वाच्च विषयान्तराबोधनाच्च बोद्धव्यम्। उक्तञ्चैतद् श्रीभर्तृहरिकृतवाक्यपदीयस्य ब्रह्मकाण्डे—

शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते।
तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम् ॥ १४८ ॥
अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे।
निमित्तभेदात् सर्वत्र साधुत्वं हि व्यवस्थितम् ॥ १४९ ॥ इति।

न च

पारम्पर्याद् अपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता ये तु तेषां साधुरवाचकः ॥ १५४ ॥
( वा० प० ब्र० का० )

इति भर्तृहर्युक्त्या 'पारम्पर्यादपभ्रंशाः' इत्यनेन अपभ्रंशशब्दानां सादित्वं सूचितम्। सति सादित्वे च कथं तेषां नित्यत्वं स्याद् इति वाच्यम्, वाच्यार्थकतया एव पारम्पर्यावगतेः, न तु कस्यचिच्छब्दस्य सत्तायाः। तथा च अभिधातृषु शब्दप्रयोक्तृषु विगुणेषु दन्तादिभङ्गवशेन विकलेषु सत्सु जायमाना अपभ्रंशा येषु स्त्री-शूद्र-चाण्डालादिषु पारम्पर्यात् प्रसिद्धिमागताः, तेषां स्त्रीशूद्रादीनां साधुरवाचकः, किन्तु असाधव एव वाचकाः, साधवश्च असाधुस्मरणद्वारा बोधका इति मतिर्भवति। प्रथमप्रयोगे यथा कस्मिंश्चिद् अर्थे साधुशब्दे प्रयोक्तव्ये असाधुशब्दः केनचित् प्रयुक्तः, तदा साधुशब्दार्थबोधद्वारा असाधुशब्दस्यापि सोऽर्थोऽवगतः, ततः प्रभृत्येव साधुशब्दवाच्यार्थे असाधुशब्दप्रयोगः प्रारब्धः। एवम् असाधुशब्दवाच्यार्थताया एव पारम्पर्यम्; न तु असाधुशब्दसत्तायाः। यथा "शवतिर्गतिकर्मा कम्बोजेषु, विकार एवमेनमार्या भाषन्ते। कम्बोजेषु विकारार्थे शवतिरपशब्दः, गतिकर्मार्थे च आर्येषु, एवं गवादिशब्दा दैव्यां गिरि यदर्थे प्रयुज्यन्ते स्म, गावी, गोणी शब्दा अपि लोकान्तरे तस्मिन्नेवार्थे तद्भिन्नार्थे वा प्रायुज्यन्त। यदा शक्तिजादिदोषवशाद् गौः, कर्णः इत्युच्चारणे कर्तव्ये गावी-गोणी-कान-इत्यादयः शब्दाः समुच्चरिताः, तदा तेषां गवादिवाच्यार्थतावबोधः प्रारब्धः। एवञ्च अनया कारिकया गोणी-गावी-इत्याद्यपभ्रंशशब्दानां गौः इत्याद्यर्थः

कथं वाच्यत्वमसंस्कृज्ञैः ज्ञायते-इत्यस्यैव समाधानम् अनया कारिकाया कृतम्। गावी गोणी इत्यपशब्दानां कम्बुग्रीवादिमद्रूपवाच्यार्थेऽस्मद्देशे यदा प्रयोगः कृतः तदैव तेषां सत्तेति तु न, प्रत्युत तेषां सत्ता देशान्तरे स्यादेव। अनुपलब्धिवशाद् अयं शब्दो नासीदिति न वाच्यम्; देशान्तरे तेषां सत्त्वाद्। महान् शब्दस्य प्रयोगविषयः। उपलब्धौ यत्नः क्रियताम्। निरूपितञ्चैतद् महाभाष्यस्य पस्पशाह्निके। तद्यथा—

"सन्ति वै शब्दा अप्रयुक्ताः, तद्यथा-ऊष, तेर, चक्र, पेच-इति।

इदं तावद् विप्रतिषिद्धम्, यदुच्यते सन्ति वै शब्दा अप्रयुक्ता इति, नैतद्विप्रतिषिद्धम्। सन्तीति तावद् ब्रूमः, यदेतान् शास्त्रविदः शास्त्रेणानुविदधते। अप्रयुक्ता इति ब्रूमः, यल्लोकेऽप्रयुक्ता इति।

'अप्रयुक्ते दीर्घसत्रवत्'

यद्यप्यप्रयुक्ताः अवश्यं दीर्घसत्रवल्लक्षणेनानुविधेयाः। तद्यथा—दीर्घसत्राणि वार्षशतिकानि वार्षसाहस्रिकाणि च, न चाद्यत्वे कश्चिद् अप्याहरति। केवलम् ऋषिसम्प्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते।

"सर्वे देशान्तरे।"

सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते।" इत्युक्तम्।

कस्मिश्चिद् देशे कस्यचिद् शब्दस्य प्रयोगाभावात् न स विद्यते इति न वाच्यम्; देशान्तरे तस्य प्रयोगात्। यदि 'गावी', 'गौणी' इत्यादयः शब्दा नासन्, तर्हि कुतस्तेषां प्रयोगः? यदि प्रयोगः, तर्हि तेषां सत्ता स्वाभिव्यक्तेः पूर्वं ग्राह्या।

'नासतो विद्यते भावो नाभावो विद्यते सतः'

इति न्यायात्तेषां सत्ता अनादिकालतः स्वीकार्या। यत्तु वाक्यपदीयस्य ब्रह्मकाण्डे—

दैवी वाग्व्यवकीर्णेयमशक्तै रभिधातृभिः।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः॥ १५५। इति।

अस्यां कारिकायां 'दैवी वाग्व्यवकीर्णा' इत्युक्तम्। अस्येदं तात्पर्यम्—यथा विशुद्धमपि सुवर्णं पङ्कादिमलेन आच्छन्नं सत् कुरूपं दृश्यते। सुवर्णपङ्कपदार्थौ परस्परं भिन्नौ। सुवर्णमेव पङ्कादिरूपेण परिणतिं न लभते, किन्तु पङ्कादिमलेन आच्छन्नं जायते। एवं दैवी वागपि अशक्तैरभिधातृभिः व्यवकीर्णा अपभ्रंशपङ्कमलिनीकृता। अस्मिन् वादे साधवो वाचका अपभ्रंशा वेत्यस्मिन् अनित्यदर्शिनां शब्दानित्यत्ववादिनां तार्किकाणां साधूनां धर्महेतुत्वमजानतां बुद्धिविपर्ययः, एते अपभ्रंशा एवार्थबोधकाः। इति भ्रमः।

वस्तुतस्तु वाक्यपदीयस्य ब्रह्मकाण्डे—

एवं साधौ प्रयोक्तव्ये योऽपभ्रंश प्रयुज्यते।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥ १५३ ॥
पारम्पर्यादपभ्रंशा विगुणेष्वभिधातुषु।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः ॥ १५४ ॥ इति।

अनयोः कारिकयोः साधुशब्दव्यवधानेन साधुशब्दार्थबोधद्वारापभ्रंशै-रर्थोऽभिधीयते। स्त्रीशूद्रचाण्डालादिषु च पारम्पर्याद् अपशब्दैरर्थबोधः प्रारब्धः। एवं साधव एवार्थबोधकाः, न तु असाधवः' इत्येवम्। यदुक्तम्—

अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ॥ १५५ ॥ इति।

अस्यां कारिकायाञ्च असाधव एवार्थबोधकाः, असाधुशब्दार्थबोधद्वारा साधुशब्दार्थावगतिः–इत्येवं यदुक्तम्, तदुभयं पूर्वपक्षीयं वाक्यम्, न तु सिद्धान्तपरम्। एतदुपोद्बलकं प्रमाणं पूर्वोक्तग्रन्थस्य अन्तिमकारिकायामुद्घुष्टम्। तदयथा—

अन्येषामविच्छेदाद् अन्यशब्दविवक्षया।
योऽन्यः प्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः ॥ १५६ ॥ इति।

अन्यशब्दविवक्षया योऽन्यः शब्दः प्रयुज्यते सोऽस्यार्थस्याभिधायको न भवतीति, न हि 'घटः' इति प्रयोक्तव्ये 'पटः' इति प्रयुक्ते कस्यापि घटरूपार्थस्य प्रतीतिर्भवति। उभयेषां साधूनाम् असाधूनाम् अविच्छेदाद् अनवच्छेदेन शिष्टैः स्मरणाद् वाचकत्वं समम् इति। तदुक्तं भाष्ये—'समानायामर्थावगतौ शास्त्रेण धर्मनियमः क्रियते' इति। तथा च स्वमते पुण्यजनकतावच्छेदकधर्मवत्त्वम्, बाह्यमलसंक्रमरहितत्वं वा साधुत्वम्, तद्रहितत्वञ्चासाधुत्वम् इति भावः। एवं साध्वसाधूभयेषां शब्दानां वाचकत्वमनादिकालतः प्रसिद्धम्। अत एव कारिकायाम् अविच्छेदादित्युक्तम्। साध्वसाधुपुरुषाणामिव साध्वसाधुशब्दानामपि प्रसिद्धिः।

काल एव सर्वेषां शब्दानाम् अथ च भाषाणामुद्भावकः।

कर्णादिशब्दस्थानापन्नाः 'कान' इत्याद्यपभ्रंशशब्दा लोके स्वाभिव्यक्तेः पूर्वं कालवशात् प्रच्छन्नाः लोकज्ञानाविषयीभूताश्चासन्। काले समागते ते च अपभ्रंशाः शब्दा जनलोकेऽभिव्यक्तिं व्यवहारेषु च प्रसिद्धिं गताः। पदार्थाववोध-कतारूपा या शक्तिः घटादिशब्देषु सा एव अपभ्रष्टशब्देष्वपि दृश्यते। एकस्यैव शब्दस्य तत्सदृशरूपत्वाभिव्यक्तिः कालवशाज्जाता। यथा वटवृक्षः स्ववीजे तिरोहितपल्लवशाखाद्यङ्गः संस्तिष्ठति। भूमौ उप्ते सति समयानुसारेण पत्रपुष्पा-दिरूपेण विकसितं तद्बीजं दृश्यते। यथा वा समये समागते सति वृक्षाः पुष्पवन्तः फलवन्तश्च जायन्ते। ततः पूर्वञ्च वृक्षेषु पुष्पाणि फलानि च प्रच्छन्नरूपेण

तिष्ठन्ति । एवं संस्कृतपालिप्राकृताद्या भाषाः सूक्ष्मरूपेण तिरोहितस्वरूपाः स्वमूलभूतायां परायां वाचि संल्लीनास्तिष्ठन्ति । समयानुसारेण च तेषां प्रादुर्भावः सञ्जायते । एकस्यैव शब्दस्य बहुरूपत्वाभिव्यक्तौ हेतुः काल एव । ततः वक्तुरिच्छाद्याश्च समय एव जायन्ते । उक्तञ्च पातञ्जलमहाभाष्ये 'कालः परिमाणिना' ( २।२।५ ) इत्यस्मिन् पाणिनीयसूत्रे—

तस्यात्मा बहुधा भिन्नौ भेदैर्धर्मान्तराश्रये ।
नहि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते ॥ १ ॥
नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः ।
द्रव्यात्मा चापि संसर्गाद् एवंरूपः प्रकाशते ॥ २ ॥
संसर्गिणां तु ये भेदाः विशेषास्तस्य ते मताः ।
संभिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते ॥ ३ ॥ इति ।

येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमित्याहुः । पुरायुगे लोके कम्बुग्रीवादिमद्रूपार्थे घटशब्द एव शक्त आसीत् । कालान्तरे च तद्वाच्यार्थे घटभिन्नः अपशब्दोऽभिव्यक्तः, न तु घटशब्द एव अपभ्रष्टः सेन् परिणतिं गतः । लोके यदा अपभ्रष्टशब्दानामभिव्यक्तिः, तदा ह्निन्दीत्यादिभाषाणां प्रादुर्भावः । अत्र शब्दनित्यन्तत्वपक्षे कर्णादिशब्दान्तरे 'कान' इत्यादिशब्दान्तरस्य प्रतिपत्तिरेव ध्वनिपरिवर्तनस्य तात्पर्यमवसीयते । 'षष्ठी स्थानेयोगा' ( पा० सू० १।२।४६ ) इत्यादिषु पाणिनीयसूत्रेषु स्थानशब्दः प्रसङ्गवाची, न तु निवृत्तिपरः । ततश्च सन्त एव प्रयोगे नित्याः शब्दाः बुद्धयुन्मज्जननिमज्जनद्वारेण प्रतिपद्यन्ते । एवञ्च शब्दनित्यत्वपक्षे बुद्धिविपरिणाम एव ध्वनिपरिवर्तनस्य स्वारस्यं सन्निहितम् । तदनित्यत्वपक्षे तु न कोऽप्रि बुद्धिव्यायामोऽत्र ।

### उदात्तादयः स्वरा अपि ध्वनिपदग्राह्याः

अत्र परिच्छेदे उदात्तादयोऽपि स्वरा ध्वनिपदेन गृह्यन्ते । उदात्तादिस्वराणामपि विवक्षितार्थबोधनाय परिवर्तनं ज्ञायते । उदात्तादिस्वरभेदेन एकस्यैव शब्दस्यार्थभेदो दृष्टः । उक्तञ्च पातञ्जलमहाभाष्यस्य पस्पशाह्निके—

दुष्टः शब्दः स्वरतो वर्णतो वा,
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति,
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ इति ।

वागेव वज्रो हिंसकत्वात् । यथेन्द्रशत्रुशब्दः स्वरदोषाद् यजमानं हिंसितवान् इत्यर्थः । इन्द्रस्याभिचारो वृत्रेणारब्धः, तत्र 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्र

ऊहितः। तत्र इन्द्रस्य शमयिता शातयिता वा भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितः, न तु रूढ़िशब्दः। तत्रेन्द्रामित्रत्वे सिद्धे सति 'इन्द्रस्य शत्रुर्वर्द्धस्व' इत्यर्थं प्रतिपादयेऽन्तोदात्ते प्रयोक्तव्ये आदयुदात्त ऋत्विजा प्रयुक्तः, अर्थान्तराभिधानाद् इन्द्र एव वृत्रस्य शातयिता सम्पन्नः।

न केवलं संस्कृतभाषायामेव उदात्तादिस्वराः तदनुसारेण च अर्थपरिर्तनानि दृटिगोचरीभवन्ति, अपि तु अन्यास्वपि भाषासु[1]। तद्यथा चीनदेशे एकस्यैव वर्णस्योदात्तादिभेदेन अर्थोऽतितरां वेभिद्यते। यथा 'क्वेइक्कोक' शब्दे इकारस्योदात्तस्वरेण उच्चारणे सति 'विशिष्टो देशः' इत्यर्थः पूर्वापेक्षया भिन्न एव जायते। एवमफरिकीभाषायामपि एकस्य शब्दस्य उदात्तादिस्वरानुसारेण अर्था भेदं प्राप्नुवन्ति।

तदित्थमत्र परिच्छेदे ध्वनिपरिवर्तनपदेन वर्णानामागमलोपादेशविपर्ययापभ्रंशाश्चेते सर्वे ग्राह्याः।

**ध्वनिपरिवर्तनस्य हेतवः**

आसृष्टेरद्यावधि शब्दा नैकस्वरूपातिष्ठन्तीत्यत्र कानि कारणानि सन्ति ? ध्वनिपरिवर्तस्य बहवो हेतवः सन्ति, तेषां मध्ये ये मज्ज्ञानविषयीभूताः, ते अत्रोद्ध्रियन्ते। तद्यथा—

१. आदेशः, २. सन्धिः, ३. समासः, ४. उच्चारणदोषः,
५. यदृच्छादिहेतवः, ६. आचार्यशीलनम्, ७. देशशीलनम्,
८. व्यापारादिमाध्यमेन विदेशिजनसम्पर्कः, ९. जलवायू।

**१-३. आदेशः, सन्धिः, समासः**

'आदेशः, समासः, सन्धिश्च' इति हेतुत्रयं संस्कृतभाषायां प्रचुरतया समुपलभ्यते। संस्कृतभाषायां सन्धिः वाक्येषु वैकल्पिकरूपेण, समासे तु नित्यतया क्रियते। उक्तञ्च वाक्यपदीये—

'नित्या समासे, वाक्ये तु सा व्यपेक्षामपेक्षते'॥ इति।

तद्यथा—'सुधीभिः उपास्यः' इति लौकिकविग्रहवाक्यमिदम्। समासे सति 'सुधीउपास्यः' इति, सन्धौ च 'सुद्ध्युपास्यः' इति रूपत्रयं दृश्यते। समाससन्धिभ्याञ्च अत्र ध्वनिपरिवर्तनं जातम्। किञ्च, समाससन्धिहेतुत्रयेण न

---

१. "ऐसे वाक्यों में स्वर भी बड़ा भेद उत्पन्न करते हैं। जैसे 'क्वेक्कौक' का उच्चारण करने में यदि इ पर उदात्त स्वर रहता है तो उसका अर्थ होता है—दुष्ट देश। और यदि उसी इ पर अनुदात्तस्वर रहता है तो उसका 'मान्य अथवा विशिष्ट देश' होता है।"—प्रभुनारायणशर्मणः भाषाविज्ञानतत्त्वग्रन्थे एतदीयोंऽशो द्रष्टव्यः।

केवलं संस्कृतवाङ्मय एव ध्वनिपरिवर्तनस्य रीतिर्दृष्टिगोचरीभवति, अपि तु इयं रीतिः अन्यास्वपि भाषासु परिलक्ष्यते। मैक्सिकोभाषयां यद्वा उत्तरदक्षिण-भेदेन अमेरिकाद्वयदेशस्य भाषायामेतादृशानि वाक्यानि व्यवह्रियन्ते। तद् यथा--मैक्सिकोभाषायां 'नेवल नकल क' इत्यत्र शब्दत्रयं विद्यते। एतेषां शब्दानां क्रमशः 'अहं मासं भक्षयामि' इत्यर्थः। अस्य शब्दत्रयस्य समासे कृते सति 'नीकक' इत्येवं शब्दो निष्पद्यते। अत्र 'नेवल नकल, क-नीनकक' हृत्यनयोः स्वरूपभेदो दृश्यते। अयं भेदः समासद्वारा ध्वनिपरिवर्तनाद्धेतोः समायातः। नेवलशब्दघटक ने-वर्णस्य 'नी' आदेशे सति वलवर्णयोः, अथ च नकल-शब्दघटक लकारस्य लोपे सति 'नीनकक' इति शब्दस्वरूपं दृश्यते। एवं 'नातन अमोलन निन' एषां त्रयाणां क्रमशः 'आनय नावं मह्यम्' इत्यर्थः सञ्जायते। समासे कृते सति 'नाधो लिनिन' यद्वा 'मधो लिनिन' इत्येवं पूर्वापेक्षया भिन्नमेव रूपं दृश्यते। उभयोरमेरिकादेशयोः भाषासु इत्थं समासद्वारा ध्वनिपरिवर्तनं दृश्यते। यथा संस्कृतवाङ्मये समस्तव्यस्तशब्दयोर्नार्थभेदः, एवमस्यामपि भाषायमार्थपरिवर्तनं न जायते।

एवम् एस्पेरन्तो-भाषायामपि स्वरसन्धिनियमो दृश्यते। तद् यथा— 'काट+इड+इडो' काटिडेडो 'विडालस्य लघुशावकः' इत्यर्थः। अत्र संहित-वाक्यस्य 'काट इड इडो' इति रूपम् सन्धौ सति च पूर्वापेक्षया भिन्नमेव रूपं निष्पद्यते।

### ४. उच्चारणदोषः

उच्चारणदोषवशादपि ध्वनिपरिवर्तनं जायते। आसृष्टेरद्यावधि या विभिन्ना विकृतस्वरूपा भाषा दृष्टिगोचरीभवन्ति, ताः सर्वाः उच्चारणादि-दोषवशादेव लोके अभिव्यक्तिं गताः। उच्चारणदोषाणां संख्या न विद्यते। तथाऽपि ऋग्वेदप्रातिशाख्ये उच्चारणदोषपटले केषाञ्चिद् उच्चारणदोषाणां परिगणना कृता। तद्यथा—

१-निरस्तम्, २-व्यासपीलनम्, ३-अम्बूकृतम्, ४-शूनम्, ५-सन्दष्टम्, ६-विक्लिष्टम्, ७-ग्रस्तम्, ८-अनुनासिकम्, ९-अयथामात्रम्, १०-सन्दंशः, ११-व्यासः, १२-पीडनम्, १३-निरासः, १४-ग्रासः=विषमरागता, १५-सन्द-ष्टता, १६-आदिलोपान्तलोपौ, १७-अदेशे वचनम्, १८-अन्यान्येन व्यञ्जनानां विरागः, १९-लेशेन वा वचनं पीडनं वा।

एते सामान्यदोषाः। सर्वेषां वर्णानामुच्चारणे अनवधानचेतोभिः पुरुषैः एते दोषाः क्रियन्ते। दोषवशाच्च शब्दघटकध्वनीनां परिवर्तनं जायते। सति च परिवर्तने, भाषान्तरस्याभिव्यक्तिर्भवति। केचिच्च उच्चारणदोषाः पातञ्जल-

महाभाष्ये परिगणिताः। तद्यथा—पस्पशाह्निके 'आकृत्युपदेशात्सिद्धमिति चेत् ? सम्वृतादीनां प्रतिषेधः' इति वार्त्तिकमुद्धृत्य—

'आकृत्युपदेशात् सिद्धमिति चेत् सम्वृतादीनां प्रतिषेधो वक्तव्यः। के पुनः सम्वृतादयः ? सम्वृतः, कलः, ध्मातः, एणीकृतः, अम्बूकृतः, अर्द्धकः, ग्रस्तः, निरस्तः, प्रगीतः, उपगीतः, क्ष्विण्णः, रोमश इति।

अपर आह—

ग्रस्तं निरस्तमवलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम्।
सन्दष्टमेणीकृतमर्द्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः॥ इति।

सम्वृतः—आकारादीनां सम्वृतत्वं दोषः, न त्वकारस्य; सम्वृतगुणत्वात्।

कलः—स्थानान्तरनिष्पन्नः काकलिकत्वेन प्रसिद्धः। यथा चीनीभाषायां 'ट्हेल' शब्दे टकारः, कलदोषग्रस्त उच्चार्यते।

ध्मातः—श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते। तद्यथा इक्षुशब्दे ईकारः।

एणीकृतः—अविशिष्टः, किमयमोकारः, औकारो वेति यत्र सन्देहः।

अम्बूकृतः—यो व्यक्तोऽप्यन्तर्मुखमिव श्रूयते।

अर्द्धकः—दीर्घोऽपि ह्रस्व इव श्रूयते।

ग्रस्तः—जिह्वामूले निगृहीतः। अव्यक्त इत्यपरे।

निरस्तः—निष्ठुरः।

प्रगीतः—सामवद् उच्चारितः।

उपगीतः—समीपवर्णान्तरगीत्यानुरक्तः।

क्ष्विण्णः—कम्पमान इव।

रोमशः—गम्भीरः।

अवलम्बितः—वर्णान्तरसम्भिन्नः।

निर्हतः—सूक्ष्मः।

सन्दष्टः—वर्द्धित इव।

विकीर्णः—वर्णान्तरे प्रसृतः। एकोऽप्यनेको निर्भासि। अनन्ता हि दोषा अशक्तिप्रमादकृताः।

एते एव दोषा ऋग्वेदप्रातिशाख्ये उच्चारणदोषपटले वशदरूपेण वर्णिताः। ऋग्वेदप्रातिशाख्ये परिगणितानामुच्चारणदोषाणां मध्ये केचिद्दोषा विंशतिसंख्यासु पूर्वं गणिताः। तद्यथा—

निरस्तं स्थानकरणापकर्षे॥ १४।२॥

स्थानकरणयोरपकर्षेण निरस्तं नाम दोष उत्पद्यते। यथा स्थानकरणाभ्यां वर्णोऽपकृष्टो भवति, तथा वर्णादपि स्थानकरणे अपकृष्टे भवतः।

विहारसंहारयोर्व्यासपीदने ॥ १४।३ ॥

स्थानकरणयोर्विहारे—विस्तारे सङ्कोचेन च क्रमशो व्यासः, पीडनम्= द्विर्भावः इति दोषौ समुत्पद्येते।

ओष्ठाभ्याममम्बूकृतमाह नद्धं दुष्टम् ॥ १४।४ ॥

ओष्ठाभ्यां नद्धं=बद्धं यदा आह वक्ता, तदा अयम् अम्बूकृतनामा दोषः सञ्जायते।

मुखेन सुषिरेण शूनम् ॥ १४।५ ॥

सुषिरेण=विलापितेन मुखेन यदाह वक्ता तद् दुष्टं शूनं नाम वेदितव्यम्।

सन्दष्टं तु व्रीडन आह हन्वोः ॥ १४।६ ॥

हन्वोः व्रीडने सन्दष्टं नाम दोषो भवति।

प्रकर्षणे तद्‌ विक्लिष्टमाहुः ॥ १४।७ ॥

हन्वोः प्रकर्षणे विक्लिष्टं नाम दोषो जायते।

जिह्वामूलनिग्रहे ग्रस्तमेतत् ॥ १४।८ ॥

जिह्वामूलस्य निग्रहे ग्रस्तं नाम दोषो भवति।

नासिकयोस्त्वनुषङ्गेऽनुनासिकम् ॥ १४।९ ॥

नासिकयोर्यदा वर्णोऽनुषज्यते तदाऽनुनासिकत्वमुत्पद्यते।

अयथामात्रं वचनं स्वराणाम् ॥ १४।१० ॥

यथा मात्रा यथामात्रम्। अयथामात्रं वचनं स्वराणाम्। ह्रस्वदीर्घप्लुतानामयथामात्रोच्चारणं दोषो भवति। प्रायेण दीर्घेषु ह्रस्वेषु च रक्तेषु मात्राधिक्यं कुर्वन्ति।

सन्दंशो व्यासः पीलनं निरासः ॥ १४।११ ॥

सन्दशो व्यासः पीलनं निरासः—इत्येते च पुरस्तात् कीर्तितास्ते स्वराणां भवन्ति।

ग्रासः कण्ठ्ययोः ॥ १४।१२ ॥

जिह्वामूलनिग्रहे ग्रस्तम् इति यः प्रागुक्तो ग्रासो नाम दोषः स कण्ठ्ययोः अकाराकारयोरुत्पद्यते।

अनुनासिकानां सन्दष्टता विषमरागता वा ॥ १४।१३ ।

अनुनासिकानां वर्णानां सन्दष्टता दोषो भवति, स व्याख्यातः। तद्यथा—

अक्रंत एभिः अभ्रं आं अपः ॥

अक्रंत एभिः अभ्रं आ अपः इत्युच्चारणं सन्दष्टता विषमरागता च उच्यते।

सान्तःस्थानामादिलोपान्तलोपौ ॥ १४।१४ ॥

सहान्तःस्थया वर्तन्त इति सान्तःस्थाः, तेषां सान्तःस्थानां वर्णानां क्वचिद् आदिलोपः क्रियते, क्वचिदन्तलोपः। आदिलोपो यथा—

पिबा निषद्यः ( ऋ० वे० १।१७७।४ )

'निषद्यः' इत्यत्र दकारस्य लोपे कृते सति 'निषयः' इत्युच्चारणं क्रियते।

अन्तलोपो यथा—'इन्द्रवाय्वोः' अत्र वकारस्य लोपे कृते सति 'इन्द्रवायोः' इत्युच्चारणं जायते। इदञ्च उच्चारणं दोषग्रस्तं जायते।

अदेशे वा वचनं व्यञ्जनस्य ॥ १४।१५ ॥

अदेशे=अस्थाने असद्वचनमुच्यते। तद्यथा 'अस्मान् स्तोमैरभुत्स्महि'। इत्यादीनां 'अस्त्मान् स्तोभैरभुत्स्तमहि' इत्युच्चारणम् अदेशदोषग्रस्तम्।

'यक्ष्मं दोषण्यं', 'विष्णुः' इत्यनयोः क्रमशः 'दोषिण्यम्, विषुणुः' इत्युच्चारां यत् तद् दुष्टम्।

वर्गेषु जिह्वाप्रथनं चतुर्षु ॥ १४।२१ ॥

आद्येषु चतुर्षु वर्गेषु जिह्वाप्रथनं क्रियते, तद्यथा—

क्य, ख्य, च्य, छ्य, ट्य, ठ्य इत्यादि।

ग्रासो मुख्ये ॥ १४।२२ ॥

एतेषां वर्गाणां मुख्ये=आद्ये वर्गे ग्रासो नाम दोषो भवति।

अतिस्पर्शो वर्वरता च रेफे ॥ १४।२६ ॥

दुःस्पृष्टः स रेफः अतिस्पर्श-वर्वरतादोषाभ्यां युक्तो जायते।

जिह्वान्ताभ्याञ्च वचनं लकारे ॥ १४।२७ ॥

जिह्वाग्रेण वक्तव्यः स लकारो यदा जिह्वाया अन्ताभ्यामुच्यते तदा स दोषो भवति, पूर्वोक्तौ चातिस्पर्शवर्वरौ।

श्वासोऽघोषनिभता वा हकारे १४।२८ ॥

श्वास अघोषनिभता च इति दोषद्वयं हकारस्य बोद्ध्यम्।

एवमशक्तिप्रमादजा बहवो वर्णोच्चारणा विद्यन्ते। एभिः दोषैर्ग्रस्ता वर्णा भाषान्तरस्य जनित्वं प्रतिपादयन्ति। तद्यथा—विस्नुः, घड़ा, कान इत्यादयः शब्द ऋग्वेदप्रातिशाख्ये 'अदेशे वा वचनं व्यञ्जनस्य' ( १४।१५ ) इत्यत्र दोषा

उक्ताः तेन ग्रस्ताः। 'विस्नुः' इत्यत्र 'विष्णु' इत्युच्चारयितव्ये 'स' इत्यद् व्यञ्जनमुच्चरितम्। एवं 'घड़ा' इत्यत्र टकारोच्चारणे कर्तव्ये 'ड़ा' इत्यस्द व्यञ्जनमुच्च्चार्यते। अदेशवचनो नामायं दोषः। अनेन दोषेण हिन्दीभाषायां 'घड़ा' विस्नुः--इत्याद्यपभ्रंशशब्दानामभिव्यक्तिर्जाता। तदात्थिमिमे अशक्तिप्रमादजा दोषा ध्वनिपरिवर्तनं विधाय भाषान्तरस्याभिव्यक्तिं लोके सम्पादयन्ति। एव ग्रीकलैटिन-तीन-रसियनप्रभृतिभाषास्वपि ये शब्दाः समुपलभ्यन्ते, तेषामत्र समन्वयो निभालनीयः।

## ५. यदृच्छादिहेतवः

यदृच्छादिदोषवशादपि शब्दघटकध्वनीनां परिवर्तनं लक्ष्यते। अत्र आदिपदेन यदृच्छानुकरणादीनामपि ग्रहणं बोद्धव्यम्। एतेषामशक्तिजादीनां ध्वनिपरिवर्तनहेतूनां चर्चा महाभाष्यस्य प्रत्याहाराह्निके भगवता पतञ्जलिना कृता। तद्यथा—

"ऌकारोपदेशो यदृच्छाशक्तिजानुकरणाप्लुताद्यर्थः" इति। ऌकारोपदेशः क्रियते। यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुताद्यर्थश्च। यदृच्छाशब्दार्थस्तावद्-यदृच्छया कश्चिद् ऌतको नाम। तस्मिन्नच्कार्याणि यथा स्युः दध्य्ऌतकाय देहि, मध्व्ऌतकाय देहि, उदङ्ऌतकोऽगमत, प्रत्यङ्ऌतकोऽगमत्। चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्चतुर्थाः। अशक्तिजानुकरणार्थः। अशक्त्या कयाचिद् ब्राह्मण्या ऋतक इति प्रयोक्तव्ये ऌतक इति प्रयुक्तम्, तस्यानुकरणं ब्राह्मण्य्ऌतक इत्याह, कुमार्य्ऌतक इत्याह। इति।

एवमत्र पातञ्जलमहाभाष्ये यदृच्छाशक्तिजानुकरणाख्यैर्हेतुभिः शब्दघटकध्वनयः परिवर्तनं लभन्ते। यदा अम्बा शिशुं शिक्षयति—'पुत्र अम्बा इति वद', तदा स शिशुः अशक्त्या वम्वा वम्बा इत्युचारयति। शिशूच्चरितं वम्बाशब्दमनुकृत्य अन्योऽपि तथैवोच्चारयति—शिशुः 'वम्बा' इत्याह। लोके च कश्चित् कम्बुग्रीवादिमद्रूपवाच्यार्थबोधनाय 'घट' इत्युच्चारयितव्ये 'घटे' इत्येवं यदृच्छया उच्चारयति। कमपि घटोदरं देवदत्ताद्याख्यं जनं दृष्ट्वा यदृच्छया उपनामत्वेन 'घटे जी' इत्येवमुच्चारयति। अत्रोपर्युक्तेषु शब्देषु यदृच्छादिहेतुभिर्ध्वनिपरिवर्तनं दृश्यते।

एभिः प्रतिपादितैः हेतुभिर्ध्वनीनां लोपागमादेश-विपर्ययलोपादीनि कार्याणि भवन्ति। लोपागमाद्यादेशानामुदाहरणानि पूर्वोक्तानि। अतो न पिष्टपेषणस्यावश्यकता प्रतिभाति।

## ६. आचार्यदेशशीलनम्

ध्वनिपरिवर्तनस्य हेतुः परिसंख्यातः आचार्यदेशशीलनमिति। आचार्यस्य देशस्य च पुनः पुनः संकीर्तनमाचार्यदेशशीलनम्। आचार्यशीलनेन ध्वनिपरिवर्तनं यथा—

इको ह्रस्वोऽङ्यो गालवस्य ( ६।३।७१ पा० सू० )।

इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्याद् उत्तरपदे। तद्यथा—ग्रामणिपुत्रः, अन्यत्र ग्रामणीपुत्रः। एवं पाणिनीयाष्टाध्याय्यां बहूनि सूत्राणि दृश्यन्ते, यत्र आचार्यमतभेदेन एकस्मिन्नेव शब्दे ध्वनिभेदो दृष्टिगोचरीभवति। तद्यथा—

वा सुप्यापिशलेः ( ६।१।६२ ) प्रार्षभीयति, प्रर्षभीयति।

लोपः शाकल्यस्य ( ८।३।१९ ) हर एहि, हरयेहि, विष्ण इह, विष्णविह'।

व्योर्लघुप्रयत्नतरः शाकटायनस्य (८।३।१८) पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे। यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः।

ओतो गार्ग्यस्य ( ८।३।२० ) ओकारात् परस्य पदान्तस्यालघुप्रत्नस्य यकारस्य नित्यं लोपः स्यात्। यथा—भो अच्युत, लघुप्रयत्नपक्षे च भो यच्युत। अत्र आचार्यमतभेदेन एकस्यैव शब्दस्य स्वरूपभेदो दृष्टिपथमायाति। शाकटायनाचार्यः'—भोयच्युत', गार्ग्यश्च 'भो अच्युत' इति प्रयोगं समीहेते। किञ्च, एकमेव एकारध्वनिं कश्चिद् आचार्यः ह्रस्वमुच्चारयति, कश्चिच्च दीर्घम्। उक्तञ्च महाभाष्ये 'एच इग्घ्रस्वादेशे' ( १।१।४८ ) इति पाणिनीयसूत्रे—

"ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारम् अर्द्धमोकारञ्चाधीयते—सुजाते ऐश्वसूनृते, अध्वर्यो ओद्रिभिः सुतम् शुक्रन्ते ऐन्यत् यजतं ते एनत्' इति।

समाधानसाधकभाष्यम्—'पार्षदकृतिरेषा तत्र भवताम्। नैव लोके नाप्यस्यिन् वेदे अर्द्ध एकारः, अर्द्ध ओकारो वा अस्ति" इति।

पार्षदकृतिः तत्र भवतां या पर्षत्=सभा तत्र भवेत्यर्थः। यद्यपि ह्रस्वस्य अथ च ओकारस्य वैदिकलौकिकसंस्कृतवाङ्मये सर्वथाऽभावः, तथापि केषाञ्चिद् गुरुकुले आचार्यस्य एषा शैली आसीत्। 'एकारो ह्रस्वः ओकारश्च ह्रस्वोऽपि उच्चारयितव्यः' इति।

## ७. देशशीलनम्

देशशीलनमपि ध्वनिपरिवर्तनस्य एको हेतुरस्माभिर्निश्चीयते। देशशीलनेन न केवलं ध्वनिपरिवर्तनम्, अपि तु अर्थपरिवर्तनमपि केषाञ्चिद् शब्दानां दृश्यते।

तद्यथा शवतिर्गतिकर्मा कम्बोजेषु, विकार एव एनमार्याः पठन्ति। देशशीलनेन एकस्मिञ्छब्दे ध्वनिपरिवर्तनस्य बहूनि उदाहरणानि दृष्टिगोचरीभवन्ति। तद्यथा--

| संस्कृतम् | अवेस्ता | ग्रीकः |
|---|---|---|
| अजति | अजइति | अगइ |
| अस्ति | अस्तिय | ऐस्ति |
| पतिः | पइतिश | पोँशिस |
| दश | दस् | दक् |
| ततः | ततः | ततास्--इत्यादि। |

किञ्च, अस्मद्देशे एव प्रतिमण्डलं प्रतिकोशत्रयान्तराले च शब्दा भिद्यन्ते। तद्यथा–मिर्जापुर-वाराणसीत्यनयोर्मण्डलयोर्भाषाभेदः, शब्दगतध्वनिभेदश्च दृश्यते।

किञ्च, पातञ्जलमहाभाष्यस्य पस्पशाह्निके बहवः अपशब्दाः प्रदर्शिताः, येषाञ्च अन्यत्र लोके प्रयोगः समुपलभ्येत। यदि उच्चारणदोषवशात् परिवर्तितध्वयः अपशब्दाः सन्ति, तर्हि तेषां क्वचिद्देशे प्रयोगो भवत्येव। तेषामपशब्दानामर्थवत्त्वात्, लोकेऽर्थबोधनाय च शब्दप्रयोगात्। एतेषामपशब्दानामपि प्रकृतिप्रत्ययसद्भावाद् अनुमानं क्रियते। तद्यथा प्राकृतभाषायाम्—

| संस्कृतम् | प्राकृतम् |
|---|---|
| ईश्वरः | इस्सरो, ईसरो |
| कृतम् | कअम् |
| आकृतिः | आइदी |

इत्युपर्युक्तेषु अपशब्देषु प्रकृतिप्रत्ययाः संस्कृतशब्दानुसारेण अनुमीयन्ते। एषां शब्दानामर्थे अन्यशब्दप्रयोगात् क्वचिद् देशेऽप्रयुक्ता उच्यन्ते। तद्यथा— 'ऊष' इत्यस्य शब्दस्यार्थे क्व यूयमुषिताः, 'तेर' इत्यस्यार्थे 'क्व यूयं तीर्णाः, 'चक्र' क्व यूयं वृतवन्तः, 'पेच' इत्यस्यार्थे क्व यूयं पक्ववन्तः— इत्येते शब्दाः प्रयुज्यन्ते।

अत्र एकस्यैव शब्दस्य देशशीलनानुसारेण ध्वनिपरिवर्तनं परिलक्ष्यते। अत्र अधस्ताद् एते शब्दाः संकलय्य प्रदर्श्यन्ते—

उषिताः =ऊष।

तीर्णाः =तेर।

कृतवन्तः =चक्र।

पक्ववन्तः =पेच।

येषां शब्दानां उच्चारणदोषाद् ध्वनिपरिवर्तनं परिलक्ष्यते ते सर्वे शब्दा देशान्तरेषु प्रयुज्यन्ते। यत्ने कृते सति तेषां क्वचिद् उपलब्धिः भविष्यत्येव। उक्तञ्च पातञ्जलमहाभाष्यस्य पस्पशाह्निके—

'उपलब्धौ यत्नः क्रियताम्! महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः, साङ्गाः सरहस्याः सहस्रधाभिन्नाः। एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा वाह्वृच्यम्, नवधाऽथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणम्—इत्येतावाञ्छब्दस्य प्रयोगविषयः। एतावन्तं शब्दस्य प्रयोगविषयमनुनिशम्य 'सन्त्यप्रयुक्ताः' इति वचनं केवलं साहसमात्रमेव'।

महाभाष्यकारेण भगवता पतञ्जलिना देशभेदेन एकस्यैव शब्दस्य ध्वनिपरिवर्तनं प्रदर्शितम्। तद्यथा—

"हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु"। इति।

तदित्थमत्र देशमेदेन एकस्मिन्नेव शब्दे ध्वतिपरिवर्तनानि बहुशः समुपलभ्यन्ते। इतः पूर्वं केषाञ्चिद् शब्दानामुदाहरणं समुपस्थापितम्। अत्र नामाख्यातोपसर्गनिपातानां क्रमशः उदाहरणानि दीयन्ते। तद्यथा—

१. नाम

| संस्कृतम् | अवेस्ता | ग्रीकः | प्रा० भा० यो० |
|---|---|---|---|
| पतिः | पइतिस | पोसिस | पोतिस |
| दश | दश | दक् | दक्म |
| मातृ | मातर | मातेर | मातेर |
| ग्राम | गम | वोन | ग्वोम |
| पितृ | पितर | पतेर | पअतेर् |
| गुरु | गोउरु | वरुस | गृउस |
| गिरि | गइरि | — | गृरि, गृर अ |
| गौः | — | वाउरु | ग्वोम |

२. आख्यातः

| | | | |
|---|---|---|---|
| जातः | जाता | ग्नोतास | ग्नतास |
| ददाति | — | ददोति | ददोति |
| दधार | — | तेथेतइ | घेघार |
| भरति | वरइति | भेरेसि | भरति |
| पिपर्मि | — | पिप्लमन् | पिपलिम |
| तिष्ठामि | हिस्तइति | — | — |

**३. उपसर्गाः**

| संस्कृतम् | ग्रीकः | प्रा० भा० यो० |
| --- | --- | --- |
| उप | उपा | उप |
| प्रपिता | प्रोगानास<br>( अत्र प्रा इत्युपसर्गः ) | — |
| पर | 'लैटि० परे' | |
| अप | आपस | — |

**४. निपाताः**

| संस्कृतम् | ग्रीक | लैटिन |
| --- | --- | --- |
| तात् | हास | रक्तेद |
| कस्मात् | हापास | फक्लिमेद |
| तत्र | हाइ | उवि |
| कस्मिन् | पाइ | — |

**केचिद् धातवः**

ग्रीकः

ग्राफे[1] = लिखति

एग्राप्सेन[2] = अलैक्सीत्

ग्राप्से[3] = लिखिष्यति

अवेस्ता—

दिस्तइति = तिष्ठामि

तदित्थमत्र देशशीलनानुसारेण नामाख्यातोपसर्गनिपातानामथ च धातूनां ध्वनिपरिवर्तनं दृष्टिपथं समायाति।

**८. व्यापारादिमाध्यमेन विदेशिजनसम्पर्कः**

विदेशिजनानां सम्पर्कादपि शब्दघटकवर्णानां परिवर्तनम् अथ च भाषायाः प्रचारः प्रसारश्च सञ्जायते। पुरा युगे अत्र भारतवर्षे धीरा विद्वांसः दैवीं वाचं ज्ञातुं यज्ञं कृतवन्तः। तत्र यज्ञे ऋषयोऽपि समाजग्मुः। धीरा ऋषिषु प्रविष्टां वाचम् आभृत्य बहुदेशेषु तस्याः प्रचारं कृतवन्तः। उक्तञ्च ऋग्वेदस्य दशममण्डले नवसप्ततिमे सूक्ते—

१, २, ३. "ए स्कूल ग्रीक ग्राम" इति ग्रन्थे १९०तमे पृष्ठे द्रष्टव्यम्।

यज्ञेन वाचः पदवीयमभ्यन्तामविन्दन्नृषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रातां सप्तरेभा अभिसन्वन्ते ॥ ३ ॥

विदितार्था धीराः पदवीयम्—वेतेः 'अचोयत्', संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः । पदेन यातव्यः पन्थाः पदवीयः, तं वाचो मार्गं यज्ञेन अयन् प्राप्तवन्तः । ऋषिष्वतीन्द्रियार्थदर्शिपु प्रविष्टां तां वाचमविन्दन् अलभन्त । अनन्तरं तां वाचम् आभृत्य आभृत्य पुरुषा वहुषु देशेषु व्यदधुः व्यकार्षुः = सर्वान् मनुष्यान् अध्यापयामासुः । एतादृशीं वाचं रेभाः शब्दायमानाः पक्षिणः पक्षरूपाणि गायत्र्यादीनि सप्तच्छन्दोभिः अभिसन्वन्ते अभितः संगच्छन्ते ।

एतद्देशप्रसूता आर्याः दैवीं वाचं प्रसारयितुम् अथ च सर्वान् जनान् शिक्षयितुं निखिलभूमण्डलं परिचक्रमुरिति अनयोपर्युद्धृतया ऋचा प्रतीयते । न केवलं भारतीया आर्या एव स्वसंस्कृतं शिक्षयितुं विदेशं गतवन्तः, अपि तु वैदेशिका जनां अपि अत्रागत्य शिक्षां लब्धवन्तः । उक्तञ्च मनुस्मृतौ—

एतद्देशप्रसूतस्य सकाशाद् अग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ इति ।

ते च विदेशीया मानवा उच्चारणदोषवशात् संस्कृतशब्दान् आचार्यमुखाद् यथोच्चरितमभ्यस्तुमसमर्था बभुवुः । अतएव ग्रीक-लैटिनादिभाषासु संस्कृतशब्देन सह साम्यं भजमानाः शब्दा यथास्थानं वर्णा न समुपलभ्यन्ते । तद्यथा—

| संस्कृते | ग्रीके |
|---|---|
| मातृ | मातेर |
| पितृ | पतेर । इत्यादि । |

किञ्च, शकहूणमुस्लिमैत्यादिभिः, अयं देशो वहुश आक्रान्तः आंग्ला व्यापारव्याजेन भारतवर्षं वहुवर्षाणि अधिचक्रुः । एतेषां विदेशिजनानां सम्पर्काच्च घटपटेत्यादिशब्दानां ध्वनिषु परिवर्तनमभूत् । ततश्च बह्वीनां प्रान्तीयभाषाणां जनिरभूदिति विदेशिजनसम्पर्कस्य परिणामः सर्वैरनुभूयते ।

## ९. जलवायू

शीतोष्णदेशवास्तव्या जना येऽतिशयेन हिमपातजन्यं कष्टं यद्वा उष्णताधिक्यजन्यं कष्टमनुभवन्ति, उभयोः वर्णोच्चारणविधौ महान् भेदः परिलक्ष्यते । आंग्लदेशवास्तव्या जनाः संस्कृतशब्दान् यथास्वरं यथास्थानं वर्णमुच्चारयितुमसमर्थाः अतीव शैत्येन वर्णोच्चरणोपयुक्तजिह्वाद्यङ्गानां काठिन्यात्, तेषाञ्च सरलतया सङ्कोचादिक्रियया असम्भवाच्च ।

## केषाञ्चित् पाणिनीयध्वनिपरिवर्तननियमानां तुलनात्मकमध्ययनम्

आँग्लभाषायां केषाञ्चिद् ध्वनीनामुच्चारणविधिना ज्ञायते यत् केषाञ्चित् पाणिनीयध्वनिपरिवर्तननियमानां तस्यां प्रभावो विद्यते। आंग्लभाषीयध्वनीनामुच्चारणं कैश्चित् पाणिनीयध्वनिपरिर्तननियमैः प्रभावितं परिलक्ष्यते। पाणिनीयव्याकरणे यादृशं ध्वनिपरिवर्तनं परिलक्ष्यते, प्रायेण तादृशमेव ध्वनिपरिवर्तनम् आंग्लभाषायाः। केवलं व्यञ्जनोच्चारणस्वरूपमेवात्र संक्षेपरूपेण यथाशक्ति प्रस्तूयते।

तत्र भगवता पाणिनिना यस्य वर्णस्य यावन्त आदेशाः समुपदिष्टाः, तावन्त्युच्चारणानि तस्यैकवर्णस्य आंग्लभाषायां क्रियन्ते। अन्तरं तु एतावदेव विद्यते यद् भगवान् पाणिनिः निमित्तमादाय तत्तद्वर्णानां तांस्तान् आदेशान् समुपदिष्टवान्। तद्यथा 'कुहोश्चुः' (७।४।६२) इति सूत्रेण अभ्यासस्य, न तु अनभ्यासकवर्गहकारयोरेव चवर्गादेशमनुशास्ति, तद्यथा 'जगाद, जहास' इत्यत्र; किन्त्वांग्लभाषायां निमित्तं विनाऽपि वर्णाः पाणिन्युपदिष्टेन तत्तद्वर्णादेशरूपेण समुच्चार्यन्ते। तद्यथा हस्ताक्षरपदार्थवाचके सिग्नेचर[1] शब्दे, व्याकरणवाच्यार्थग्रामरशब्दे[2] तथा वालिकापदार्थवाचके गर्ल[3]शब्दे च गकारस्य यथोल्लिखितमेव उच्चारणम्। एवं वहून्युदाहरणानि समुपस्थापयितुं शक्यन्ते, यत्र कवर्गीयगकारस्य यथोल्लिखितमेव उच्चारणं क्रियते। परमेतादृशा अपि बहवः शब्दाः सन्ति यत्र गकारस्य 'जगाद' इत्यादिसंस्कृतशब्देष्विव जकारोच्चारणं क्रियते। तद् यथा—शारीरिकव्यायामपदार्थवाचके 'जिम्नाष्टिक[4]' शब्दे, भूतकालिकमन्त्रणादानार्थके 'सजेस्टेड[5]'शब्दे च गकारस्य जकारोच्चारणं क्रियते। तथा च मैजिक, ट्रैजिक, करेज इत्यादिशब्देषु गकारः ( G वर्णः ) जगाद इत्यादाविव गकारस्य जकारावेशे सति जकाररूपेण समुच्चार्यते। अन्यथा आंग्लभाषायां गकारभिन्नजवर्णस्य सत्त्वे मैजिक, ट्रैजिक इत्येव विलिख्येत, किन्तु न उल्लिख्यते; लिख्यते च मैगिक ट्रैगिक इति, उच्चारणञ्च क्रियते 'मैजिक, ट्रैजिक' इति। मन्ये तावत् 'कुहोश्चुः' इति पाणिनीयसूत्रेण अभ्याससंज्ञकस्य गकारस्य जकारादेशे सति 'जगाद' इत्यादिशब्देष्वांग्लभाषायामपि 'ट्रैजिक, मैजिक' इत्यादिशब्देषु गकारोच्चारणे कर्तव्ये जकारमुच्चारयन्ति। मन्ये तावत् प्राचीनांग्लभाषायां यद्वा आंग्लभाषाजनयित्र्यां भाषायां मैजिक ट्रैजिक-इत्यादिशब्दघटकजकारस्य जकारमेवोच्चारणमासीत्। परन्त्वाधुनिकांग्लभाषायां गध्वनेर्जध्वनिरूपेण परिवर्तनं जातम्। तस्याउपरि 'कुहोश्चुः' इति पाणिनीयसूत्रस्य महान् प्रभावो दृश्यते। तथा च आंग्लभाषाया ध्वनिपरिवर्तनं पाणिनीयध्वनिपरिवर्तननियमसदृशं विद्यते।

---

१. Signature. २. Grammar. ३. Girl.
४. Gymnastick. ५. Suggested.

एवमेव आंग्लभाषायां चेयर[१], क्राउच्ड[२], अप्रोच्ड[३] इत्यादिषु शब्देषु चकारो यथोल्लिखितमेवोच्चार्यते। परन्तु केमेस्ट्री[४], क्लोरोफार्म[५] इत्यादिशब्देषु चकारस्य ककारोच्चारणं क्रियते। तत्र पाणिनीये व्याकरणेऽपि चवर्गस्य कवर्गरूपेण परिवर्तनं दृश्यते। तद्यथा—'चोः कुः' ( ८।३।३० ) इति सूत्रेणं 'सुयुज्' इत्यत्र जकारस्य गकारादेशे सति, तस्य विकल्पेन चर्त्वे सति 'सुयुक्, सुयुग्' इति रूपद्वयं निष्पद्यते। 'चोः कुः' इति सूत्रेण चवर्गस्य कवर्गादेशकरणाद्, आंग्लभाषायामपि केषुचिद् शब्देषु चकारस्य ककारोच्चारणदर्शनाद् अस्यां भाषायां ध्वनिपरिवर्तनं पाणिनीयध्वनिपरिवर्तननियमप्रभावितं विद्यते। अन्तरं तु एतावदेव विद्यते यत् पाणिनिर्झलि पदान्ते च चुत्वस्य कुत्वमनुशास्ति। आंग्लभाषायां तु निमित्तं विनाऽपि यत्र कुत्रापि चकारस्य ककारोच्चारणं क्रियते।

एवमेव आंग्लभागायां तकारस्य चकारोच्चारणं क्रियते। तध्वनिः टध्वनिश्चेत्युभौ ध्वनी 'T' इत्येवं रूपेण लिख्येते, तस्य क्वचित् तकारात्मना क्वचिच्च टकारात्मना उच्चारणं क्रियते। तद्यथा पन्त्व शब्दे "त" इत्यस्य तकारोच्चारणम्, स्टेशन-शब्दे च तस्य टकारोच्चारणं क्रियते। आंग्लभाषायां तकारटकारध्वन्युद्बोधकमेकमेव लिपिचिह्नं विद्यते। अस्यां भाषायां 'सिच्युएटेड' 'क्रिश्चियनटी'–इत्यादिशब्देषु तकारस्य चकारोच्चारणं क्रियते।

तत्र भगवान् पाणिनिरपि तवर्गस्य चवर्गादेशं कृतवान्। तद्यथा 'स्तोः श्चुना श्चुः' ( ८।४।४० ) इति सूत्रेण 'सत् + चित्, रामस् + चिनोति' इत्यादिषु तकारस्य चकारादेशं सकारस्य च शकारादेशं कृतवान्। आंग्लभाषायां 'क्रिश्चियनिटी'शब्दे तकारस्यैव चकारोच्चारणं क्रियते। आंग्लभाषाया वर्णमालायां दन्त्यमूर्द्धन्यतालव्यसकारेषु कोऽपि भेदो न विद्यते। दन्त्य-तालव्य-मूर्द्धन्यभेदेन त्रयः सकाराः एकस्मिन्नेव स-ध्वनावन्तर्भूताः। मन्ये तावत् क्रिश्चियन इत्यादिशब्देषु तकारस्यैव सकारयोगे चकारोच्चारणम् तद्योगे सकारस्य तालव्यशकारोच्चारणं जातम्। अन्यथा आंग्लभाषायां च-ध्वन्यभिव्यक्त्यर्थं 'च' इति लिप्यात्मकसंकेतस्य सत्त्वे क्रिश्चियनिटी शब्दः 'Chrischianity' इत्येवं विलिख्येत। किन्तु नोल्लिख्यते, लिख्यते च Christianity–क्रिश्टियनिटी इत्येवम्। उच्चारणञ्च क्रियते क्रिश्चियनिटी' इति। एतावताऽवगम्यते यत् पाणिनिना तवर्गस्य चवर्गादेश आदिष्टः। तदनुसृत्य एव क्रिश्चियनशब्दे तकारस्य चकारोच्चारणम्, तद्योगे दन्त्यसकारस्य तालव्यशकारः उच्चार्यते। अन्तरं तु एतावदेव विद्यते यत् संस्कृते शकाराच्चवर्गयोग एव सकारतवर्गयोः

१. Chair. २. Crouched. ३. Approached.
४. Chemestry. ५. Chloroform.

शकारचवर्गोच्चारणं क्रियते, आंग्लभाषायां तु निमित्ताभावेऽपि । अपरश्च उदाह्रियमाणः स्नेचेड (Shatched) विद्यते । तत्+चकार=तच्चकार इत्यादि-शब्देष्विव 'स्नेत्+चेड=स्नेचेड ( Snat+ched ) इत्यत्रापि तध्वनिः चध्वनिना प्रभावितः सन् तेनैव रूपेण व्यवह्रियते ।

अस्याम् आंग्लभाषायां तकारटकारयोः कोऽपि भेदो न स्वीक्रियते । किञ्चु आधुनिकभाषावैज्ञानिका टवर्गस्य तवर्गेणैव विकासं मन्यन्ते । मन्ये तावत् 'स्टेशन [illegible] शब्देषु तकारस्य टकारध्वनिरूपेण परिवर्तनं जातम् । तथा च भगवान् पाणिनिः 'ष्टुना [illegible] सूत्रे तवर्गस्य टवर्गादेशं कृतवान् ।

किञ्च, आंग्लभाषायां 'थिङ्क' ( Think ) [illegible] मेवोच्चार्यते, परन्तु देन ( Then ) शब्दे थकारस्य दकार[illegible]ल्लिखित-भगवता पाणिनिनाऽपि थकारस्य दकारादेशमनुशिष्टम् । तद्यथा—'झलां जशोऽन्ते इति सूत्रेण थकारस्य दकारादेशः सम्पाद्यते ।

एवमेव भगवता पाणिनिना 'षढोः कः सि' ( ८।२।४१ ) इति सूत्रेण ककारादेशः कृतः । आंग्लभाषायामपि सिटी, सेण्टर इत्यादिशब्देषु सकारो यथो-ल्लिखितमेवोच्चार्यते । परन्तु डिस्कवरी ( Discuvery ), कट ( Cut ), प्रैक्टिस ( Practice ), क्योर ( Cure ) इत्यादिशब्देषु सकारस्य ककारोच्चारणं क्रियते । आंग्लभाषायां मूर्द्धन्यषकारदन्त्यसकारयोश्च नास्ति भेदः, इति पूर्वमेव प्रति-पादितम् । पाणिनीयशास्त्रे षकारस्य कत्वादेशदर्शनात्, आंग्लभाषायाञ्च 'क्योर' ( Cure ) इत्यादिशब्देषु सकारस्य ककारोच्चारणञ्च मन्ये तावत् संस्कृतस्य आंग्लभाषायां महान् प्रभावो विद्यते ।

किञ्च, भगवता पाणिनिना यस्य वर्णस्य यो य आदेशः कृतः, आंग्लभाषायां तस्य वर्णस्य न केवलं तत्तद् उच्चारणं क्रियते, अपि तु विधीयमानवर्णस्य यद् उद्देश्यं विद्यते, तदप्युच्चारणं क्रियते । तद्यथा भगवता पाणिनिना 'व्रश्चभ्रस्ज-सृजमृजयजराजभ्राजच्छशां 'षः' इति सूत्रेण जवर्णस्य मूर्द्धन्यषकारादेशं षकारस्य च 'झलां जशोऽन्ते' इत्यनेन डकारादेशः कृतः । तद्यथा विराज्, शब्दे जकारस्य 'व्रश्चभ्रस्ज'इति सूत्रेण षकारादेशे तस्य च 'झलां जशोऽन्ते' इत्यनेन डकारादेशे सति, तस्य च विकल्पेन चर्त्वे सति 'विराट्, विराड्' इति रूपद्वयं निष्पद्यते ।

एवञ्च पाणिनीयशास्त्रे षकारस्य टकारादेशो दृष्टः । आंग्लभाषायां तु टकारस्य स्वमूलभूतसकारस्यैव उच्चारणं क्रियते, किन्तु लिख्यते टकारः । तद्यथा स्टेशन इत्यादिषु शब्देषु द्वितीयटकारस्य सकारोच्चारणं क्रियते । एजुकेशन ( Education ) शब्दे डकारस्य तु परम्परया स्वमूलभूतजकारोच्चारणं क्रियते,

किन्तु लिख्यते टकारः। संस्कृते 'विराट्' इत्यादिशब्देषु डकारस्य जकारः परम्परया, न तु साक्षात्मूलं विद्यते। यतो व्रश्चभ्रस्जेति सूत्रेण जकारस्य षकारः, तस्य च डकारादेशः क्रियते, न तु जकारस्यैव डकारादेशः। मन्ये तावद् आंग्ल-भाषायाम् एजुकेशन ( Education ) शब्दे डकारस्य यज्जकारोच्चारणं क्रियते, पेजेज ( Pages ) हैज ( Has ) इत्यादिशब्देषु सकारस्य यज्जकारोच्चारणम्, तेन ज्ञायते यद् आंग्लभाषायां डकारस्य जकारोच्चारणम्, टकारस्य च सकारोच्चारणं पाणिनिशास्त्रनिर्दिष्टविधीयमानयोः डकारटकारयोरुद्देश्यरूपौ यौ षकार-जकारौ स्तः, तावनुसृत्यैव क्रियते, कृतश्च भगवता पाणिनिना जकारस्य षकारादेशः, तस्य च डकारादेशः। परन्तूच्चारणे भेदः। आंग्लभाषायां क्वचिद् बुद्ध्या विपरिणमय्य डकारस्य जकारोच्चारणम्, संस्कृते तु जकारोच्चारणे कर्तव्ये डकारोच्चारणम् इति। दृष्टञ्चेदमुपर्युक्तेषु उदाहरणेषु।

एवञ्च एतावता ग्रन्थप्रबन्धेन इदमेव समायातम् यद् भगवता पाणिनिना एकस्यैव वर्णस्य यावान् आदेशः कृतः, आंग्लभाषायां तस्यैकस्य वर्णस्य तावान् उच्चारणं प्रायेण क्रियते। यद्यप्यांग्लभाषायां लिख्यते अन्यत्, पठ्यते च अन्यत् इति महती अवैज्ञानिकता भाषावैज्ञानिकैः स्वीक्रियते; परन्तु एकैकस्य ध्वनेरमुकध्वनिरूपेण परिवर्तनं कर्तुं शक्यते—इत्यैतद्रूपा महती वैज्ञानिकता दृश्यते। आंग्लभाषायाश्चेयं वैज्ञानिकता पाणिनीयव्याकरणनियमप्रभाविता प्रतीयते। आंग्लभाषायां चकारादीनां क्व ककाराद्युच्चारणं कर्तव्यम्, क्व च न—इत्येतद् अर्थमभ्यासः क्रियते। अभ्यासद्वारा च लिपिबद्धम् सी ( C ) ध्वनिं क्वचित् ककारं क्वचिच्च सकारमुच्चारयन्ति। लिपिस्तु न परिवर्तिता भवति, केवलं बुद्धिरेव विपरिणमते। दैव्यां गिरि तु ककारादीनां 'क्व चकाराद्यादेशाः कर्तव्याः, क्व च न' इत्येतदर्थं 'कुहोश्चुः', 'चोः कुः' इत्यादीनि सूत्राणि कण्ठस्थीक्रियन्ते। 'वाक्', 'वाग्' इत्यादिशब्देषु च चकारस्य ककारादेशे सति 'वाच्' इति लिपेः परिवर्तनं जायते। सति च परिवर्तने 'वाक्' इत्येवं लिप्यात्मकं स्वरूपं दृश्यते। उच्चारणञ्च 'वाच्' इति पूर्वापेक्षया भिन्नं 'वाक्' इत्येवं जायते।

### ध्वनिः प्रायः साजात्येष्वेव परिवर्तनं लभते

साजात्यमत्र 'स्थानेऽन्तरतमः' इति ( १।४।६६ ) पाणिनीयसूत्रनिर्दिष्टं बोद्धव्यम्। ययोः वर्णयोः पाणिनीयादिशिक्षानिर्दिष्टानि कण्ठताल्वादीनि स्थानानि, अथ च स्पृष्टादयः प्रयत्नाः तुल्याः, तयोः स्थानैक्ये सति स्थानकृद् आन्तर्यं बोद्धव्यम्। एतत्सर्वं 'तुल्यास्यप्रयत्नं सवर्णम्' ( १।२।४४ ) इति पाणिनीयसूत्रे व्याख्यातम्। क्वचित् सति साजात्ये ध्वनिः वर्णान्तरात्मना परिवर्तते। इदं साजात्यं सदृशतमनाम्नापि प्रोच्यते। सदृशतमत्वं चतुर्विधम्—स्थानकृत्, अर्थकृत्,

गुणकृद्, प्रमाणकृच्चेति । १. स्थानतो यथा—'दध्यत्र' इति तालुस्थानस्येकारस्य तालुस्थानो यकारः । २. अर्थतो यथा–'वातण्डयुवतिः', वतण्डशब्दात् 'वतण्डाच्च' इति गोत्रापत्ये यञ्, तस्य च 'लुक् स्त्रियाम्' इति लुकि शार्ङ्गरवादित्वान् ङीन् । वतण्डी चासौ युवतिश्चेति ग्रहे 'पोटायुवति'–इत्यादिना समासः, 'पुंवत् कर्मधारय'—इत्यतिदिश्यमानः पुंशब्दो वतण्डापत्यवाचिना वतण्डीशब्दस्य वातण्डयादेशो भवति, नतु वतण्डादिः । ३. गुणतो यथा—'वाग्घरिः' । घोषवतो महाप्राणस्य तादृश एव घकारः । ४. प्रमाणतो यथा–'अमुम्, अमू, अमून्' 'अदसोः—' इत्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य च दीर्घ ऊकारः ।

किन्तु यत्रानेकविधमान्तर्यं दृश्यते, तत्र स्थानकृदेव आन्तर्यं बलीयो भवति । तद्यथा—'सुधी + उपास्यः सुद्ध्युपास्यः, मधु + अरिः = मद्ध्वरिः, धातृ + अंशः = धात्रंशः, ऌ + आकृतिः = लाकृतिः । अत्र इक्स्थाने ( इ, उ, ऋ, ऌ इत्येतेषां ) जायमानानां यणां मध्ये येन सह यस्य स्थानसाम्यं स ध्वनिः तत्स्थानं लभते । तद्यथा—'सुधी + उपास्यः = सुद्ध्युपास्यः' इत्यत्र ईकारस्य स्थाने यकारः सञ्जातः । अतएव 'सुद्ध्युपास्यः' इत्यादिसिद्ध्यर्थं 'इको यणचि' इति सूत्रं चकार ।

**इग्यणोर्वैज्ञानिकता**

व्यञ्जनवर्णानां मध्ये लौकिकवर्णमालाघटकयकारादिवान्तवर्णचतुष्टयस्य इकारादिऌकारान्तं स्वरात्मकमपि स्वरूपमस्ति । इकारादिस्वरचतुष्टयस्य यकारादिवान्तवर्णचतुष्टयात्मकञ्च स्वरूपं भाषाविद्भिः स्वीक्रियते । किञ्च, भाषावैज्ञानिकैः यणां मध्ये रेफस्य लकाररूपेण, लकारस्य च रेफरूपेण विकासाद् रलयोः परस्परं सम्बन्धः, परस्परम् अभेदश्च दृश्यते । अतएव यमकश्लेषालङ्कारयोस्तयोरभेदरूपाः प्रयोगाः दृष्टिपथं समायान्ति ।

एवं यकारवकारापेक्षया रलयोर्वैशिष्ट्यं विद्यते । अस्माद् व्यतिरिक्तं यकारादिचतुर्षु वर्णेषु सामान्यं वैशिष्ट्यम् अवलोक्यते । व्यञ्जनानामुच्चारणं स्वरं विना न सम्भवति, व्यञ्जनानि च कदापि स्वररूपेण न परिवर्तन्ते । किन्तु यकारादिवर्णचतुष्टयम् अस्यापवादभूतं विद्यते । एतेषां वर्णानां स्वरात्मकमपि स्वरूपं दृश्यते । यकारादिवर्णचतुष्टयस्य स्वरात्मक स्वरूपं क्रमशः 'इ ऋ ऌ उ' इति स्वरचतुष्टयं वेदितव्यम् । अत एव भगवान् पाणिनिः 'इग्यणः सम्प्रसारणम्' इति सूत्रेण यकारादिवान्तस्य वर्णचतुष्टयस्य सम्प्रसारणसंज्ञामादिष्टवान् ।

किञ्च, न केवलमन्तःस्थवर्णानां स्वरीभूतं स्वरूपमेव 'इ ऋ ऌ उ' इति वर्णचतुष्टयम्, अपि तु इकारादिस्वरचतुष्टयस्यापि व्यञ्जनीभूतं स्वरूपं यकारादयो विद्यन्ते । तथा च सुद्ध्युपास्यः, मध्वरिः, धात्रंशः, लाकृतिः –इत्यादिषु इकारादीनामेव यकाराद्यादेशाः, 'इयाज' इत्यादिषु च यकारादीनामेव इकाराद्या-

देशा दृश्यन्ते। एवं इग्यणोः परस्परमभेदः प्रतीयते। केवलमुच्चारणदृष्टचा तयोर्यत्किञ्चिद् भिन्नत्वं श्रोत्रेन्द्रियेण प्रतीयते।

एवं यकारादिवर्णचतुष्टयस्य वैशिष्टचं प्रदर्शयता तेषां स्वरात्मकमेकं स्वरूपं प्रतिपादितम्। यकारादिवर्णचतुष्टयस्य द्वितीयं स्वरूपम् इकारादिस्वरयुक्तमपि प्राचीनभारतयोरोपीय भाषायामासीदित्येवमनुमानं भाषावैज्ञानिकैः क्रियते[1]। ते यथा 'इय, उव, ऋर्, लृल्' इत्यादि। मन्येऽहं भाषाविज्ञानचुञ्चवः 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' ( पा० सू० ४।४।७७ ) इति सूत्रेण धात्वन्तेवर्णोवर्णयोः इयङुवङौ दृष्ट्वा प्राचीनभारतयोरोपीयभाषायामन्तःस्थवर्णानां स्वरयुक्तस्वरूपस्यानुमानं कुर्वन्ति। एतेषां यकारादिवर्णानां शुद्धस्वरैः अ, आ, ऐ ए औ ऑ अँः इत्येतैः स्वरैः युक्तं तृतीयमपि रूपमासीत्। तद्यथा 'अय्, एय्, एय्, ऍय, ओय, ऑय इत्यादि। एवं लकारादीनामपि 'अर एर, ऐर' इत्यादिरूपं बोद्धव्यम्। तथा च प्राचीन भारत योरोपीयभाषायाम् अन्तःस्थवर्णानां 'अय्, एय्, अव्, अर्, इत्यादिस्वरूपाणामनुमाने हेतुः 'गमयति' इत्यादिशब्देषु 'अय्' इत्यंशः, 'देयम्' शब्दे च 'एय्' इत्यंशो विद्यते।

किञ्च, 'एचोऽयवायावः' ( ६।१।७८ पा० सू० ) इति सूत्रेण ज्ञायते यच्चतुर्णां यकारादिसन्ध्यक्षराणां यथार्थं स्वरूपम् 'अय, अव, आय्, आव' इति। अत एव हरे + ए, विष्णो + ए, नै + , अकः, पौ + अकः' इति प्रक्रियादशायां हरये, विष्णवे' इत्यादि निष्पन्नशब्देषु एकारादयः स्वकीयं यथार्थं स्वरूपं भजन्ते। तच्च स्वरूपं यकाराद्यन्तःस्थवर्णानां स्वरूपतयाऽङ्गी क्रियते। एवं यकाराबीनां 'अय, अव' इति अकारादिस्वरयुक्तं स्वरूपमासीद् इति सुतरां निश्चेतुमपि शक्यते, न तु केवलमनुमातुम्। भाषाशास्त्रिणस्तु नकार-मकारावप्यन्तस्थवर्णौ मन्यन्ते। एतयोरपि 'अम्', 'अन्' इत्यादि रूपेण विकासो वेदितव्यः।

## अपशब्देषु (अपभ्रंशेषु) ध्वनिपरिवर्तननियमः

यदा शब्दा अपशब्दिता भवन्ति, अपशब्दिते च ध्वनिपरिवर्तनं जायते, तदा साजात्येष्वेव ध्वनिः प्रायेण परिवर्तते। इदञ्च तथ्यं स्वभावतः सिद्धम्, न तु केनचिन्नियमेन। तद् यथा समाजेषु 'एकस्यां पंक्तौ आस्यताम्' इत्युक्ते स्वसजातीयैः सह सर्वे तिष्ठन्ति। एवञ्च पातञ्जलमहाभाष्ये 'स्थानेऽन्तरतमः' ( १।१।५० ) सूत्रे प्रतिपादितम्। तद्यथा—

"अन्तरतमवचनमशिष्यम्, योगश्चाव्ययमशिष्यः। कुतः? स्वभावसिद्धत्वादेव।

---

१. डा० भोलाशङ्करव्यासकृते 'संस्कृत का भाषाशास्त्रीय अध्ययन' इति ग्रन्थे ( पृ० सं० ११३ इत्यत्र ) एतदीयोऽशो द्रष्टव्यः।

तद्यथा—समाजेषु, समाशेषु समवायेषु चास्यतामित्युक्ते नैव कृशाः कृशैःसहासते, न पाण्डवः पाण्डुभिः। येषामेव किञ्चिद् अर्थकृत् आन्तर्यम्, तैरेव सहासते।

तथा गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति, तेन सह शेरते। तथा यान्येतानि गोयुक्तकानि संघुष्टानि भवन्ति, तान्यन्योन्यं पश्यन्ति, शब्दं कुर्वन्ति।'

इत्थम[illegible]हाभाष्यकारो भगवान् पतञ्जलिः अन्तरतमेन सह व्यवहारं प्रदर्शितवात्। न केवलं चेतना[illegible] अयं व्यवहारो दृश्यते, अपि तु अचेतनेष्वपि। उक्तञ्च 'स्थानेऽन्तरतमः' इति सूत्रे भगवता [illegible]दिता—

"अचेतनेष्वपि—लोष्ठः क्षिप्तो वहुवेगं गत्वा नैव तिर्यग्गच्छति, [illegible]हति, पृथ्वीविकारः पृथ्वीमेव गच्छत्यान्तर्यतः।

तथा या एताः आन्तरिक्षाः सूक्ष्मा आपः तासां विकारो धूमः। स धूम आकाशे निवाते नैव तिर्यग्गच्छति नार्वाग् अवरोहति। अब्विकारो अप एव गच्छत्यान्तर्यतः।

तथा ज्योतिषो विकारो अर्चिराकाशे निवाते सुप्रज्वलितं नैव तिर्यग्गच्छति नार्वाग् अवरोहति। ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यत" इति।

आभिर्महाभाष्यपंक्तिभिरिदमेव ज्ञातं यत् सदृशतमध्वनिरूपेण एव ध्वनिपरिवर्तनं जायते। उदाहरणानि यथा दधि+अत्र=दध्यत्र। वतण्डी चासौ युवतिः=वातण्डचयुवतिः। वाग्+हरिः=वाग्घरिः। अमुम्, अमू अमून्। इत्याद्युदाहरणानि पूर्वमेव न्यस्तानि।

किञ्च, न केवलं संस्कृतशब्देष्वेव सदृशतमत्वेन ध्वनिपरिवर्तनम्, अपि तु अपशब्देष्वपि इयमेव रीतिः प्रायेण दृश्यते। अन्तरं तु एतावदेव विद्यते यत् संस्कृतशब्देषु सति निमित्ते सदृशतमत्वेन ध्वनयः परिवर्तन्ते। तद्यथा—दधि+अत्र=दध्यत्र। अत्र अस्वरे परे दधिघटकस्य इकारस्य यकारादेशः सञ्जातः। किन्तु अपशब्देषु तु निमित्तं विनाऽपि स्वसदृशतमत्वेन ध्वनयः परिवर्तन्ते। अस्योदाहरणानि यथा—

| संस्कृतम् | अवेस्ता | पारसी | ग्रीक | प्रा०भा०यो० |
|---|---|---|---|---|
| १. गाम | गम् | | वोन | ग्वोम |
| २. जातः | जातो | | ग्नोतास् | ग्नोतास् |
| ३. भ्रूः | | अब्रू | आफ्रूस | आभ्रस |
| ४. दुहिता | दुदा | | थुगातेर | दुधअतर |
| ५. दधार | — | | तेथेतइ | घघोर |
| ६. भरति | वरइति | | भरसि | भरति |

**जातो**—संस्कृतभाषायां पदान्तसकारस्य रुत्वे कृते सति 'अतो रोरप्लुतादप्लुते' इति पाणिनीयसूत्रनियमानुसारेण अप्लुताद् अकारात् परस्य रुत्वस्य उत्वं भवति अप्लुते अकारे परे सति। तद् यथा–शिवस् + उ + अर्च्यः = शिव उ अर्च्यः' इति अकारोकारयोर्गुणे कृते सति 'शिवोऽर्च्यः' इति रूपम्। 'एङः पदान्तादति' इति सूत्रेण अर्च्यघटकस्य अकारस्य पूर्वरूपे कृते सति 'शिवोऽर्च्यः' इति रूपं निष्पद्यते। परन्तु अपशब्देषु निमित्तं विनाऽपि पदान्तसकारस्य रुत्वे कृते उत्वं जायते। तद्यथा अवेस्ताभाषायां—'जातो' इत्यपशब्दे निमित्तं विनाऽपि सस्य रुत्वम्, अथ च तस्य उत्वम्, स्थानकृद् आन्तर्यमादाय अकारोकारयोः ओ इति गुणे कृते सति 'जातो' इति रूपं दृश्यते।

किञ्च, अपशब्देषु ध्वनयः स्वसदृशध्वनिरूपेणापि परिवर्तन्ते, न तु केवलं स्वसदृशतमध्वनिरूपेण। तद्यथा—ग्नोतोँस इति। संस्कृते 'जातः' शब्दस्य ग्रीकभाषायां 'ग्नोतास' इति रूपम्। जकारः संवारनादघोषाल्पप्राणप्रयत्नवान्। तस्य सम्वारनादघोषाल्पप्राणप्रयत्नवान् 'ग्न' इति परिवर्तनं जातम्। अत्र 'ज' 'ग्न' इत्यनयोः गुणकृद् आन्तर्यं विद्यते। 'जात' शब्दघटकस्य दीर्घाकारस्य च 'ओ' इति दीर्घस्वररूपेण परिवर्तनं जातम्। 'आ ओ' इत्यनयोः प्रमाणकृद् आन्तर्यं विद्यते। इत्थम् जा-शब्दस्य गुणकृद् प्रमाणकृदान्तर्यमादाय 'ग्नो' इति परिवर्तनम्। जातशब्दघटकस्य ह्रस्वाकारस्य 'आ' इति दीर्घरूपेण, विसर्गस्य च स्वरूपेण परिवर्तनं बभूव। 'तात् = त' इत्यनयोः अर्थकृद आन्तर्यं प्रतिभाति। इत्थं 'जातः', 'ग्नोतास' इत्यनयोः ग्रीक-संस्कृतशब्दयोः गुणकृत्-प्रमाणकृत्-अर्थकृत्-स्थानकृद आन्तर्याणि विद्यन्ते। एवमुपर्युक्तोदाहृतेषु 'अव, आफ्रूस, थूगातेर' इत्यादिशब्देष्वपि ध्वनिप्ररिवर्तनं विचारणीयम्। अपशब्देषु स्वसदृशान्येव परिवर्तनानि प्रायेण जायन्ते। तत्र एकस्य ध्वनेः वहवः स्वसदृशा ध्वनयो विद्यन्ते। परिवर्तने कश्चित् स्वसदृशो ध्वनिः स्याद् इत्यपशब्देषु निश्चितो नियमो न विद्यते। संस्कृतशब्देषु तु अत्र विषये नियमो दृश्यते। सन्धिस्थले विशेषरूपेण सदृशतमा आदेशाः क्रियन्ते, न तु सदृशाः।

अपशब्देषु तु सदृशतमाः सदृशाश्च उभयथा आदेशाः क्रियन्ते। तद्यथा—

ग्वोम—प्राचीनभारतयोरोपीयभाषायां व्यवहृतोऽयं शब्दः। 'गाम्' 'इत्यस्य 'ग्वोम्' इति मूलस्वरूपं स्वीक्रियते भाषावैज्ञानिकैः। संस्कृतव्याकरणदृष्टया तु 'ग्वोम' इति 'गाम्' शब्दस्य विरूपम्। गकारस्य सदृशतमं गुणकृद् आन्तर्यमादाय वकारादेशः वकारात्पूर्वं गकारागमः। जातः आ इत्यस्य ओकारादेशे सति 'ग्वोम' इति रूपं दृश्यते।

अब्रू-भ्रूशब्दस्य विरूपोऽयं शब्दः। पारसीभाषायामयं शब्दो व्यवह्रियते। 'अब्रू' इत्यत्र मकारस्य सदृशतमं स्थानकृद आन्तर्य बकारेण सह विद्यते। अत्र

सदृशतमं परिवर्तनं जातम् । 'अभ्र' इत्यत्र न केवलं भ्र इत्यस्य ब्र इत्ययमादेशः, अपि तु 'अ' इति वर्णस्य पूर्वागमोऽपि सञ्जातः ।

**ध्वनिपरिवर्तने पाणिनीयनियमस्यांशतोऽनुसरणम्**

एवमुपर्युक्तव्याख्यानेन ज्ञायते यद् अपशब्देषु ध्वनिपरिवर्तनं पञ्चसन्धिप्रकरणे पाणिनीयसूत्रैः ये ध्वनिपरिवर्तननियमाः प्रोक्ताः,ताननुसृत्यैव प्रायेण जायते । तद्यथा—

पत्ता—पत्रशब्दस्यापभ्रंशः । अत्र ध्वनिपरिवर्तने 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६।३।१११) इति सूत्रप्रोक्तनियमानुसुरणमंशतो दृश्यते । ढलोपनिमित्तके रेफलोपनिमित्तके रेफे च परे पूर्वस्य 'अ इ उ' इति स्वरत्रयस्य दीर्घोऽनेन सूत्रेण विधीयते । 'रो रि (८।३।१४) अनेन सूत्रेण रेफस्य रेफपरे लोपो विधीयते । अनयोः सूत्रयोरुदाहरणं यथा—'पुना रमते' इति । परन्तु 'पत्ता' इत्यपशब्दे तु निमित्ताभावेऽपि सूत्रघटकरेफस्य लोपः, रेफलोपनिमित्तकरेफाभावेऽपि च तकारोत्तरस्वरस्य दीर्घः, अच्परेऽपि तकारस्य द्वित्वमित्येतानि कार्याणि निमित्ताभावेऽपि दृश्यन्ते । अत्र पाणिनीयनियमस्यांशतोऽनुसरणं दृश्यते । अनयैव दिशा अन्यत्रापि समूहनीयम् ।

क्वचित् आदेशा निर्वत्तिता भवन्ति, निर्वतिताचादेशाः स्वमूलरूपं प्रपद्यन्ते । तद् यथा—'कान' शब्दः । अयं शब्दः कर्णशब्दस्यापभ्रष्टरूपः । अत्र रेफस्य लोपे सति ककारोत्तराकारस्य दीर्घः, णकारस्य च नकारादेशः । एवं 'वानी' शब्दे णकार स्वमूलभूत नकाररूपं प्राप्तवान् । भाषावैज्ञानिकाः टवर्गस्य तवर्गाद् विकासं मन्यन्ते । अतो णकारस्य मूलस्वरूपं नकार इति । अतएव वाणीशब्दघटकणकारः वानीशब्दे नकाररूपमलभत इति ॥

॥ इति शम् ॥

## अस्मिन् ग्रन्थे समुद्धृतानां ग्रन्थानां सूची

१. पातञ्जलमहाभाष्यम्
२. तन्त्रालोकः
३. योगचूड़ामण्युपनिषद्
४. प्रत्यभिज्ञाविमर्शिनी
५. चिद्गगनचन्द्रिका
६. स्वच्छन्दतन्त्रम्
७. स्पन्दप्रदीपिका
८. लुप्तागमसंग्रहः
९. मातृकाचक्रसम्बोधः
१०. संवित्स्तोत्रम्
११. नित्याषोडशिकार्णवतन्त्रम्
१२. योगिनीहृदयदीपिका
१३. प्रपञ्चसारतन्त्रम्
१४. काशीखण्डः
१५. वाक्यपदीयम्
१६. मन्त्रमहाविज्ञान
१७. मालिनीविजयोत्तरतन्त्रम्
१८. सङ्केतपद्धतिः
१९. लिङ्विष्टिक एण्ड योर लाङ्ग्वेज
२०. वातुलशुद्धाख्यतन्त्रम्
२१. पातञ्जलयोगदर्शनम्
२२. मातृकाविवेकः
२३. मत्स्यपुराणम्
२४. शिवसूत्रम्
२५. स्कन्दपुराणम्
२६. योगशिखोपनिषद्
२७. श्रीशिवमहिमस्तोत्रम्
२८. निरुक्तस्य दैवतकाण्डम्
२९. बृहदारण्यकोपनिषद्
३०. लिङ्विष्टक चेन्ज
३१. अमरकोषः
३२. ऋग्वेदः
३३. वाल्मीकीयरामायणम्
३४. देवनागरी लिपि : स्वरूप, विकास और समस्यायें
३५. भाषालोचन
३६. व्याकरणदर्शनपीठिका
३७. शिवदृष्टिः
३८. तोडलतन्त्रम्
३९. याज्ञवल्क्यशिक्षा
४०. ध्वनिविज्ञान
४१. भाषाविज्ञान
४२. वैयाकरणसिद्धान्तकौमुदी
४३. चरकसंहिता (शरीरसंख्या शरीराध्याय )
४४. तैत्तिरीयप्रातिशाख्यम्
४५. त्रिशिखब्राह्मणोपनिषद(मन्त्रभागः)
४६. प्रकाशिकी
४७. सरल भौतिकी
४८. मैत्रेयोपनिषद्
४९. सूर्यपुराणम्
५०. नूतन भौतिकी
५१. काशिका
५२. कारिकावली
५३. योगकुण्डलिन्युपनिषद्
५४. योगोपनिषदि योगशिखोपनिषद
५५. यन्त्रार्णवः
५६. शुक्रनीतिः
५७. रहस्यलहरी
५८. यन्त्रार्णवस्य वैमानिकप्रकरणम्
५९. ऋग्वेदप्रातिशाख्यम् ।

## शुद्धिपत्रम्

| पृ० | पं० | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ७ | ७ | सान्त | शान्त |
| ९ | ५ | वराराश्या | वर्णराश्या |
| ९ | २९ | अवयवान् | अवयवानाम् |
| १३ | १३ | पुंयोग्य० | योग्य० |
| १७ | २४ | इकार | हकार |
| १९ | १ | व्यक्तिः | व्यक्तः |
| २६ | १५ | बुद्धचते | बध्यते |
| २९ | १४ | भासमानपि | भासमानापि |
| ३० | ८ | ०विमर्शाभ्याम् | विमर्शमय्याम् |
| ३२ | १० | वायाशक्त्या | वामया शक्त्या |
| ४१ | २९ | Had | Head |
| ४३ | २६ | पश्चादिका | पश्चाशिका |
| ४३ | २८ | चात्मबलशक्तीरश्मि० | ०शक्तीशश्चिद्रूपः |
| ४९ | १३ | परावामेव | परावागेव |
| ४९ | १४ | प्रतिवासम् | प्रतिश्वासम् |
| ५२ | २७ | तद्व्याप्य० | तदव्याप्य० |
| ६० | ५ | खेचरीमुद्रा | खेचरीमुद्रया |
| ६० | ५ | समुपलभते | समुपलभाते |
| ६८ | १ | क्रियमाणम् | क्रियमाणः |
| ७५ | ८ | | 'पतन्ति अञ्जलयो यस्मिन्' अत्र मयूरव्यंसकादिसमासः। प्रषोदरादित्वादन्तलोपः। पत + अञ्जलि इति स्थिते निपातनादेव जत्वाभावेन पतञ्जलि इति साधु। पतञ्जलिः = प्रणवात्मक ईश्वरः। व्याकरणमहाभाष्यकर्त्रर्थे तु अञ्जलौ पतित इति विग्रहः। अत्रापि मयूरव्यंसकादि कार्यम्। |
| ७६ | ३२ | रविरिच्यते | रविरित्युच्यते |
| ९५ | ९ | विदितचर | विदितचरम् |
| ९६ | १० | रेखावल्यअपि | रेखावलयोऽपि |
| ९९ | १ | सर्वस्य | सर्पस्य |
| ९९ | ३ | सर्वः | सर्पः |

| पृ० | पं० | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ११६ | २८ | सर्वश्चित्रम् | सर्वैश्चित्रम् |
| १२० | १९ | वित्रम् | वित्तम् |
| १८७ | ११ | अतय | अतस्तस्य |
| १९८ | १८ | विद्युतात्वम् | विद्युत्तत्त्वम् |
| २३१ | १ | अस्सु | अप्सु |
| २०९ | ६ | निःसरितुम् | निःसर्तुम् |
| २१९ | २ | व्याप्तिसत्त्वात् | व्याप्तिमत्त्वात् |
| २२२ | १४ | भयते | भण्यते |
| २२२ | २० | प्रतिबिम्बमस्ति० | प्रतिबिम्बस्यास्ति० |
| २३९ | २३ | प्रज्वलयति | प्रज्वलति |
| २४० | १६ | श्रुतिद्वारा | स्तुतिद्वारा |
| २४२ | २८ | मथनार्थम् | मन्थनार्थम् |
| २५३ | २७ | अव्याहृत | अव्याहत |
| २७७ | १ | अर्थव्यत्थयापोप० | अर्थव्यत्ययापापायोप० |
| २८० | २७ | ध्वनि० प्रथमे | अकारादिध्वनीनां रेखाकृतिस्वरूपम् ( लिपिः ) इति द्वितीये |
| २९५ | ६ | मनुसरति | मनुसरन्ति |
| २९७ | ८ | विश्रान्तिः | विश्राम्यति |
| २९७ | २५ | पाक्रित | प्राकृत |
| ३०१ | १४ | सेन | सन् |
| ३०५ | ३ | पीदने | पीडने |
| ३०६ | १४ | इत्युच्चारां | इत्युच्चारणम् |
| ३०७ | १ | तेन | तैः |
| ३०७ | ४ | तदात्थिम् | तदित्थम् |
| ३०७ | १३ | ०नुकरणाप्लुत० | ०नुकरणप्लुत० |
| ३०८ | २५ | ह्रस्वस्य | ह्रस्वस्य ओकारस्य |
| ३०९ | २३ | चक्र | चक्र इत्यत्र |
| ३०९ | २४ | वृतवन्तः | कृतवन्तः |
| ३१० | ५ | वसुयती | वसुमती |
| ३११ | १७ | अलैक्सीत् | अलेखीत् |